न कदापि भवेत्सिद्धिर्मन्त्रैर्वा देवपूजनैः ॥३८॥
मन्त्रेण तस्य नियतं पूजां कुर्य्याद्यथोदिताम्।
तां च तत्पटले सम्यक् ज्ञात्वा भक्तिसमन्वितः ॥३९॥
नित्यानां त्वैपुराणां च नावेच्यास्त्वंशकादयः।
तथाप्यत्रोच्यते किञ्चिदभिचारादिसिद्धये ॥४०॥
अश्विन्यादिषु ऋक्षेषु * विन्दुसर्गान्त्यवर्जितम्।
चतुरो † योजयेदाद्यान् विन्दुसर्गौ तु सर्वगौ ॥४१॥
तेन मन्त्रादिवर्णेन नाम्नश्चाद्याक्षरेण च।
गणयेद्यत्र ‡ षष्ठं वाऽप्यष्टमं द्वादशं तु वा ॥४२॥
रिपोर्मन्त्राद्यवर्णं स्यात् तेन तस्याहितं भवेत्।
राशिष्वनत्र ऋक्षेषु सप्तपञ्चतृतीयगैः ॥४३॥
साध्यानामपि विज्ञेयमंशकाद्यमनुग्रहे।

---

देवतानां वा पूजां स्वयं न कुर्यात् इति। पूज्ये त्वन्ये वा तदग्रतः प्राप्तविद्यमित्यादिष्वन्यतमे। तत्पटले-द्वितीयपटले ॥ २८ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

नित्यानामित्यादिभिः सर्वत इत्यन्तैर्द्वाविंशत्या श्लोकैर्मन्त्राणामंशकादिकमुपदिशति। तत्र अंशकादय इत्यत्र अंशकशब्दो राश्यादिवाचकः। आदिशब्देन सिद्धादिचक्रगणन ऋणऋणि (१) प्रभृतय उच्यन्ते। अश्विन्यादिषु ऋक्षेषु मेषादिषु राशिष्वित्यर्थः। विन्दुविसर्गान्त्यवर्जितं— विन्दुविसर्जनीयक्षकाररहितम्। चतुर इति पुंलिङ्गद्वितीयाबहुवचनम्। आद्यान्—अकाराद्यान् वर्णानितिशेषः। विन्दुसर्गौ तु सर्वगौ—विन्दुसर्गयोः शिवशक्तिरूपत्वात् सर्वात्मता। तेन राशिषु योजिताक्षरक्रमेण। एतदुक्तं भवति - प्रत्यक्षरं सत्रिपादास्त्रयस्त्रिंशद्घटिकाः सम्भवन्ति ताभिः साध्यसाधकयोरंशकं जानीयात्

---

* अश्विन्यादिक ऋक्षेषु इति मू० पु० पा०। † चत्वारि इति सो० मू० व० पुस्तके पाठः।
‡ गणयेद्यत्तु इति मू० पु० पा०। (१) धन इति व० पु० पाठः।

यतस्ते तत्त्वविज्ञानरहितास्तेन चोदितम् ॥४४॥
प्राक्प्रत्यग्दक्षिणोदक् च सूत्रपञ्चकयोगतः ।
कोष्ठानि षोडशाऽत्र स्युस्तेषु वर्णान् क्रमाल्लिखेत् ॥४५॥
चतुश्चतुर्विभागेन कल्पयेत्तानि वै क्रमात् ।
प्रथमप्रथमे * त्वाद्यं द्वितीयप्रथमे † तथा ॥४६॥
द्वितीयमन्यतश्चान्यत् तथाऽन्यदपि कल्पयेत् ।
तत्तत्कोष्ठेषु ‡ विलिखेत् तत्तत्पञ्चममक्षरम् ॥ ४७ ॥
एवं चतुर्षु कोष्ठेषु क्षान्तावधि समालिखेत् ।

---

इति । गणयेत्—रिपुनामाद्यक्षरराशिमारभ्य मन्त्राद्यक्षरराश्यन्तं गणिते षष्ठाष्टमद्वादशराशिगताक्षरादिकैर्मन्त्रै रप्रातेरभिचारादिकं कुर्यादित्यर्थः । राशिषु प्रोक्तमितिशेषः। ऋक्षेषु—अश्विन्यादिषु नक्षत्रेषु । सप्तपञ्चतृतीयगैः—प्राग्वत् रिपुनामाद्यक्षरनक्षत्रमारभ्य मन्त्राद्यक्षरराश्यन्तं गणिते सप्तपञ्चतृतीयनक्षत्रगताद्यवर्णैर्मन्त्रैस्तस्याभिचारादिकं कुर्यादित्यर्थः। साध्यानामित्यादि उपरिष्टाद्वक्ष्यमाणसाध्यसाधकसिद्धाख्येषु त्रिषूपासकेषु प्रथमस्य तत्वज्ञानरहितत्वात् प्रागुक्तांशकाद्यमनुग्रहेष्ववेक्षणीयमित्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

वर्णान् क्रमाल्लिखेदित्यत्र क्रमशब्दार्थः प्रदर्श्यते—चतुश्चतुर्विभागेन षोडशकोष्ठानि प्रादक्षिण्येन चत्वारि चत्वारि वक्ष्यमाणसाध्यसिद्धसुसिद्धारिवर्गेषु सङ्कल्प्य । प्रथमप्रथमे—प्रथमचतुष्कप्रथमकोष्ठे आद्यमक्षरं लिखेत् । द्वितीयप्रथमे—द्वितीयचतुष्कप्रोक्तक्रमप्रथमकोष्ठे(१) तथा—यथा पूर्वचतुष्टयस्य प्रथमकोष्ठः कल्पितः अत्रापि तथा कुर्यादित्यर्थः। द्वितीय—माकारं लिखेत् । अन्यतश्च—तृतीयचतुष्कप्रोक्तक्रमप्रथमकोष्ठे । अन्यत्—तृतीयमिकारं लिखेत् । तथाऽन्यदपि कल्पयेत्—तथा—यथा पूर्वचतुष्कत्रयम् । अन्यत्—चतुर्थचतुष्कम् । अपिः समुच्चये । कल्पयेत्—विलिखेत् । चतुर्थमीकारं चतुर्थचतुष्क (२) प्रोक्त-

---

* प्रथमः प्रथमे इति मू० पु० पाठः । † द्वितीयं प्रथमे इति मूलपुस्तके पाठः ।
‡ तत्कोष्ठेषु इति मूलपुस्तके पाठः । (१) द्वितीयचतुष्कप्रथमेकोष्ठे १ पुस्तके पाठः ।
(२) चतुर्थचतुष्टय इति सो० पुस्तके पाठः ।

स्वनामाद्यक्षरं यत्र कोष्ठे सन्दृश्यते ततः ॥ ४८ ॥
सिद्धादीन् गणयेद्यावन्मन्त्राद्यक्षरदर्शनम् ।
सिद्धसिद्धो जपात्सिद्ध्येत् द्विगुणात्सिद्धसाध्यकः (१) ॥४९॥

प्रथमप्रथमकोष्ठे लिखेदित्यर्थः । तत्तत्कोष्ठेषु—उक्तचतुष्कचतुष्टयद्वितीयकोष्ठेषु । तत्तत्पञ्चमं—प्रथमप्रथमद्वितीयतृतीयकोष्ठलिखिताक्षराणां (२) पञ्चमाक्षराणि विलिखेदित्यर्थः । एवं—प्राग्वत् । द्वितीयकोष्ठाक्षराणां पञ्चमाक्षराणि तृतीयकोष्ठेषु विलिखेत् । तृतीयकोष्ठाक्षराणां पञ्चमाक्षराणि चतुर्थकोष्ठेषु विलिखेत् । उक्ते चतुष्कचतुष्के प्रत्येकं कोष्ठे पुनः पुनः पञ्चमाक्षरलेखनतः क्षान्तावधि चतुष्कचतुष्टयेऽपि समालिखेत् । एवं लिखिते सति प्रथमचतुष्कप्रथमकोष्ठे अकथह इति चत्वार्यक्षराणि । तद्द्वितीयकोष्ठे उङप इति त्रीणि । तत्तृतीयकोष्ठे लृझम इति त्रीणि । तच्चतुर्थकोष्ठे ओडव इति त्रीणि । द्वितीयचतुष्कप्रथमकोष्ठे आखदल इति चत्वारि अक्षराणि । तद्द्वितीयकोष्ठे ऊचफ इति त्रीणि । तत्तृतीयकोष्ठे लॄञय इति त्रीणि । तच्चतुर्थकोष्ठे औढश इति त्रीणि । तृतीयचतुष्कप्रथमकोष्ठे इगधक्ष इति चत्वारि । तद्द्वितीयकोष्ठे ऋछव इति त्रीणि । तत्तृतीयकोष्ठे एटर इति त्रीणि । तच्चतुर्थकोष्ठे अंणष इति त्रीणि । चतुर्थचतुष्कप्रथमकोष्ठे ईघन इति त्रीणि । तद्द्वितीयकोष्ठे ॠजभ इति त्रीणि । तत्तृतीयकोष्ठे ऐठल इति त्रीणि । तच्चतुर्थकोष्ठे अः त स इति त्रीणि । एवं लिखिते प्रथमचतुष्ककोष्ठाक्षराणामुपरितनाक्षराणि द्वितीयचतुष्ककोष्ठेषु यथाक्रमं दृश्यन्ते । अकारादिक्षकारान्तान्येकपञ्चाशदक्षराणि तेषु षोड़शकोष्ठेषु व्याकुलक्रमाणि दृश्यन्त इति प्रथमप्रोक्तक्रमशब्दस्यार्थः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

सिद्धसिद्ध इत्यादिभिः सुनिश्चितमित्यन्तैरर्द्धाधिः षड्भिः श्लोकैस्तेषां षोड़शकोष्ठाक्षराणां फलान्युपदिशति । तत्र अतोऽन्यथा—सुसिद्धसाध्यादन्यः अनन्तरभूतः सुसिद्ध इत्यर्थः । अभिचारे रिपोरेवं यदि स्वात्मविपत्तये—रिपोरभिचारकाले तस्य सुसिद्धसुसिद्धश्चेदभिचारमन्त्रस्तस्याभिचारकस्यैव निधनाय भवतीत्यर्थः ।

ऋणसिद्धादियोगेषु मन्त्रदाने विशेषतः ।

(१) सिद्ध्यसाधक इति मू० पु० पा० ।

(२) प्रथमप्रथमकोष्ठलिखिताक्षराणां पञ्चमपञ्चमाक्षराणि इति १ पुस्तके पाठः ।

सिद्धे सुसिद्धः सम्प्राप्त्या सिद्धारिर्हन्ति गोत्रजान् ।
साध्यसिद्धेऽतिसंक्लेशात् साध्यसाध्योऽतिदुःखकृत् ॥ ५० ॥
साध्ये सुसिद्धो भजनात्साध्यारिः स्वां श्रियं हरेत् ।
सुसिद्धसिद्धोऽध्ययनात् फलं दद्यादार्थेप्सितम् ॥५१॥
सुसिद्धसाध्यो (१) जापाद्यैः सिद्ध्येत् स्यादततोऽन्यथा ।
सुसिद्धे तु प्रसिद्धस्तु पूर्वजन्मकृतश्रमः ॥५२॥
तस्मात् तु सर्वसिद्धीनां साधने यो जपेन्मनुम् ।
अभिचारे रिपोरेवं यदि स्वात्मविपत्तये ॥५३॥
सुसिद्धोरिरशेषेण स्वकुलान्नाशयेद्ध्रुवम् ।
अरिसिद्धः सुतं हन्यादरिसाध्यः स्वयोषितम् ॥५४॥
अरिः सुसिद्धोमन्त्रस्तु कुलोत्सादनकृच्छ्नैः ।
अर्यरिः स्वात्महा मन्त्रः सम्प्राप्त्यैव सुनिश्चितम् ॥५५॥
नामाद्यक्षरमारभ्य यावन्मन्त्रादिवर्णकम् ।
त्रिधा कृत्वा स्वरैर्भिन्द्यात् (२) तदन्यद्विपरीतकम् ॥५६॥

---

प्रसिद्धं नाम गृह्णीयात् प्रसुप्ता येन जायति ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥ ५४ ॥ ५५ ॥

नामाद्यक्षरमित्यादिभिः सर्वत इत्यन्तैः षड्भिः श्लोकैः साधकमन्त्रयोरुत्तमर्णाधमर्णत्वं तत्फलानि चोपदिशति। तत्र यावमन्त्रादिवर्णकं—मातृकाक्षरक्रमेण स्वनामाद्यक्षरमारभ्य मन्त्राद्यक्षरावधि गणयेदित्यर्थः। त्रिधा कृत्वा—तां सङ्ख्यां त्रिगुणीकुर्यात्। स्वरैः स्वरशब्देन षोडशसप्तत्रिसङ्ख्या उच्यन्ते। तत्र सम्प्रदायात् सप्तसङ्ख्याऽङ्गीकृता। भिन्द्यात्—तया तां सङ्ख्यामाहरेत्। तदन्यत्—मन्त्राद्यक्षरमारभ्य स्वनामाद्यक्षरावधि मातृकाक्षराणि। विपरीतकं—सप्तभिः संवर्ध्य त्रिभिरा हरेदित्यर्थः। एतदुक्तं भवति—सर्वेषां विद्यामन्त्राणां सर्वेषां साद्ध्यादीनां च उत्तमर्णाधमर्णत्वं ज्ञातुमुपायः मातृकाक्षरपाठक्रमेण स्वनामाद्यक्षरमारभ्य उद्देश्यस्य

---

(१) सुसाध्यसाध्योइति मू० पु० पा०।

(२) भिन्नात् इति सो० मू० पुस्तके पाठः।

कृत्वाऽधिको ऋणी ज्ञेयो ऋणी चेन्मन्त्रमुत्तमम् ।
स्वयं ऋणी चेत्तन्मन्त्रं त्यजेत् पूर्वं ऋणी यतः ॥५७॥
कथं ऋणित्वं मन्त्राणां साधकानां च मे वद ! ।
पूर्वजन्मकृताभ्यासे (१) पापादस्याफलाप्तिकृत् ॥५८॥
पापे नष्टे फलावाप्तिः काले देहक्षयादृणी ।
मन्त्रः सम्प्राप्तिमात्रेण प्राक्तनः सिद्धये भवेत् ॥५९॥
सिद्धम  ाद् गुरोर्लब्धमन्त्रो यः सिद्धिभाङ्नरः ।
लक्ष्मीमदादनादृत्य मन्त्रे भोगमवाप्नवान् (२) ॥६०॥
सन्मन्त्रस्य (३) ऋणी ज्ञेयो भजनं तस्य पूर्वगम् ।
तस्मादृणविशुद्धिस्तु कार्या सर्वैस्तु सर्वतः ॥६१॥
रुद्राक्षैरपि पद्माख्यैः पुत्रजीवैः कुचन्दनैः ।
स्फाटिकैश्च प्रवालैश्च मौक्तिकैर्हेमनिर्मितैः ॥६२॥

---

आद्यक्षरात् पूर्वाक्षराणि गणयित्वा तां सङ्ख्यां त्रिगुणीकृत्य सप्तभिराहृत्य शिष्टसङ्ख्यां विज्ञाय तथा मन्त्राद्यक्षरादि स्वनामाद्यक्षरावधि गणयित्वा तां सङ्ख्यां सप्तभिर्वर्धयित्वा त्रिभिराहृत्य शिष्टं च जानीयादिति। कृत्वेत्यादिना एतदुक्तं भवति—पूर्वश्लोकोक्तशिष्टसङ्ख्ययोरधिकसङ्ख्यायुक्तोऽधमर्णः हीनसङ्ख्यायुक्त उत्तमर्णः। तत्र मन्त्रस्य अधमर्णत्वे फलभूयस्त्वं स्वस्याधमर्णत्वे नैष्फल्यं, तेनोत्तमर्णविद्यादीन् परित्यज्य अधमर्णानेव स्वीकुर्यादिति। सर्वैः साधकैः साधैश्च। सर्वतः—मन्त्रेषु विद्यासु चेत्यर्थः॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

रुद्राक्षैरित्यादिभिर्जपमित्यन्तैश्चतुर्भिः श्लोकैरक्षमालादिकमुपदिशति। तत्र कुचन्दनैः रक्तचन्दनैः ॥ ६३ ॥ ६४ ॥ ६५ ॥

---

(१) भ्यासात् इति मू० पु० पा०।
(२) मवाप्नुयात् इति मूलपुस्तके पाठः।
(३) स मन्त्रस्य इति मूलपुस्तके पाठः।

राजतैर्जपमाला (१) स्यात् पूर्वं पूर्वं फलिद्गुरुः ।
आदिक्षान्तैरक्षरैः स्यादक्षमाला यथार्थतः ॥६३॥
अनुलोमविलोमाभ्यां मातृकान्तरितां जपेत् ।
एवं सर्वगुणोपेतो जायते सर्वसिद्धिमान् ॥६४॥
तर्जनीरहितैः कुर्यादङ्गुल्यग्रैर्जपक्रियाम् ।
अङ्गुलीपर्वसंस्पर्शादपि वा गणयेज्जपम् ॥६५॥
अबुद्धिपूर्वं विहिते निषिद्धे कर्मणि द्रुतम् ।
विद्यां जपेच्छतं तेन तत्पापान्मुच्यते ध्रुवम् ॥६६॥
नित्यातिक्रमदोषाणां शान्त्यै विद्यां शतं जपेत् ।
नैमित्तिकातिक्रमणे सहस्रं प्रजपेत्तदा ॥६७॥
विशुद्धदेहवदनः शुक्लाम्बरधरः शुचिः ।
विमुखः परनिन्दासु देवतादर्शनेषु च ॥६८॥
परार्थवनिताभूमिपीड़ासु विगतस्पृहः ।
दयान्वितः सर्वजने प्रेक्षाकारी गतस्पृहः ॥६९॥
आस्तिको गुरुभक्तश्च नित्यशो नियमान्वितः ।
यः स सर्वगुणोपेतो विद्यासिद्धिमवाप्नुयात् ॥७०॥
अन्यथा वर्तमानो यो विद्याभजनवाँश्चिरम् ।
न तस्य सिद्धिः कुत्रापि कदाचिच्च कथञ्चन ॥७१॥

---

अबुद्धीत्यादिना तदेत्यन्तेन श्लोकद्वयेन प्रायश्चित्तमुपदिशति ॥ ६६ ॥६७॥

विशुद्धेत्यादिभिः कथञ्चनेत्यन्तैश्चतुर्भिः श्लोकैः साधकसमाचारमुपदिशति । तत्र देवतादर्शनेषु—देवतासु दर्शनेषु च निन्दासु विमुखः । दर्शनेषु—वैदिकवैष्णवशैवादिषु ॥ ६८ ॥ ७० ॥ ७१ ॥ ७२ ॥

---

(१) राजतैर्वाऽक्षमाला इति मू० पु० पा० ।

आदौ योगो भवेदन्ते पल्लवः सम्पुटो(१)द्वयोः ।
एकान्तरं तु ग्रथनं विदर्भोऽत्‌व्यन्तरीकृतः ॥७२॥
मन्त्रदोषांस्तु विज्ञाय गुरुः परिहरेत् क्षणात् ।
अन्यथा स गुरुः शिष्यं निहन्त्येवाचिरात् ध्रुवम् ॥७३॥

---

आदौ योगेत्यादिना श्लोकेन मन्त्रेषु साङ्ग्रकर्म्मयोजनप्रकारमुपदिशति । तत्र एतदुक्तं भवति—मन्त्रविद्ययोरादौ साधकसाङ्ग्रकर्मणां योजने योग इति संज्ञा । मन्त्रविद्ययोरन्ते पूर्वोक्तयोजनात् पल्लव इति संज्ञा । मन्त्रविद्ययोराद्यन्तयोः पूर्वोक्तयोजनात्संपुट इति संज्ञा । मन्त्रविद्ययोः प्रागुक्तानाञ्च एकैकाक्षरतोऽन्योन्यसम्मेलनात् ग्रथनमिति संज्ञा । मन्त्रविद्ययोः पूर्वोक्तानां च अन्योन्यमक्षरद्वययोजनात् विदर्भ इति संज्ञा । स च त्रिविधः मन्त्राक्षरद्वयान्तरे साङ्ग्राक्षरमेकमेकं योजयेत् इत्येकः प्रकारः । साङ्ग्राक्षराणां द्वयान्तरे मन्त्रादीनामक्षरमेकं योजयेत् सोऽपरः । मन्त्रादीनामक्षरद्वयान्तरे साधग्रादीनामक्षरं द्वयं द्वयं योजयेदेषोऽन्यः । एवं त्रैविध्यमिति ॥ ७२ ॥

मन्त्रदोषानित्यादिभिर्गुरुरित्यन्तैर्नवभिः श्लोकैर्म्मन्त्रदोषादिकमुपदिशति । तत्र स गुरुरित्यत्र सशब्दो मन्त्रविषयः । षट्कर्णगः—स्वव्यतिरिक्तयोर्द्वयोर्युगपत्पठनात् । अधिकैर्जपात्—अधिकदेवतामन्त्रैः साद्धं क्षुद्रदेवतामन्त्रजपात् क्षुद्रस्य त्रासः । गर्वितः—साधकस्यानभिमुखः । अविधिप्राप्तः—दीक्षादिविधिमन्तरेण सम्प्राप्तः । वैरिकोष्ठगाः—पूर्वोक्तवैरिवर्गचतुष्ककोष्ठगाः । निर्जिताः—पराजिताः । कर्म्मबाहुल्यात्—साधकस्य प्राग्जन्मदुष्कृतबाहुल्यात् । अहसाः—हकारसकाररहिताः । सत्त्ववर्जिताः—बलहीनाः । अपूर्णरूपाः—वाच्यस्य अपुष्कलाक्षराः । छिन्नाः—महावयविन एकदेशत्वात् । स्तम्भिताः—साधकाभिमतप्रदानेषु । सानुनासिकाः—स्पर्शवर्गपञ्चमाक्षरप्रायाः । अकालविनियोगेन—मन्त्रस्य स्वापकालेषु प्रयोगादिषु विनियोगेन । मन्त्राणां स्वापप्रबोधयोर्लक्षणमुच्यते । प्रणवक्षकाररेफहकाराक्षरप्रायान्त्राद्या आग्नेयाः । इन्द्वक्षरप्राया मन्त्राः सौम्याः । साधकस्य श्वासे दक्षिणनासापुटे परिपूर्णं प्रवहति सति आग्नेय-

---

(१) सम्पुटं इति मू० पु० पा० ।

तेन तत्परिहारञ्च शृणु देवि ! समाहिता ।
परिहारप्रकारन्तु वच्ये योगेषु (१) तत्त्वतः ॥७४॥
दग्धः षट्कर्णगो मन्त्रः त्रस्तः (२) स्यादधिकैर्जपात् ।
गर्वितस्त्वविधिप्राप्तः शत्रवो वैरिकोष्ठगाः ॥७५॥
बाला लघ्वक्षरप्राया वृद्धा गुर्वक्षरान्विताः ।
निर्जिता कर्मबाहुल्यादहसाः सत्त्ववर्जिताः ॥७६॥

---

मन्त्रादीनां प्रबोधकालः । इतरेषां सौम्यादीनां तदा स्वापकाल एव । वामनासापुटे श्वासे प्रवहति सति सौम्यमन्त्रादीनां प्रबोधकालः । इतरेषामाग्नेयानामन्त्राणां तदा स्वापकालश्च । एतत्सकलमविज्ञाय मन्त्रान् मनीषितेषु कार्येषु विनियोजकः साधकस्तेषाम्मूर्छाक्लेशकारी भवतीत्यर्थः । मूर्छिताः निर्व्यापाराः । साधकसमीहितसंपादने निर्व्यापारा इत्यर्थः । स्वापगाः—सुप्तवत् साधकानभिमुखाः । अजपात्—गुरोर्विद्याधिगमदिवसमारभ्य तदुक्तक्रमभजनानङ्गीकारात् । अत्र सन्धिर्दिव्यत्वादचिन्त्यः । मत्ता मन्त्राः—समीचीनभजनशीलस्य साधकस्यार्थानर्थौ समं साधयन्तीत्यर्थः । पत्रेषु पठनात्—यथाविधि गुरुमुखादधिगममन्तरेण यतः कुतश्चित् पत्रेषु मन्त्रादीन् दृष्ट्वा तत्र पठित्वा जपादित्यर्थः । अन्यवर्णैः मन्त्राक्षरेभ्यो बहिर्भूतैः । तेषां तत्र नाम साधकस्यानवधानपठनाद्वा सम्भवः । कीलिताः—यथा कालाख्यः शङ्कुद्रुमकुड्यादिषु भिन्नरूपः तद्वन्नामसाम्यसाधकानवधानसंपादितैरक्षरैः कीलिता इत्यर्थः । रुद्धाः—निरुद्धाः—निवारिता इत्यर्थः । विसन्धिकाः—विगतसन्धिकाः—गुणवृद्धियणादेशादिप्राप्तौ सत्यां अकृतसन्धिकाः । प्राप्तदुःखा—प्राप्तक्लेशाः । वैरिसमन्विताः—वैरिमन्त्राद्यैः सहोपासिताः । मन्त्राङ्गमन्योन्यं वैरलक्षणमुपरिष्टात् वासनापटले वक्ष्यमाणत्वादिह नोक्तम् । खण्डीभूताः—भिन्नविग्रहाः । अंशजापात्—मन्त्रविद्यानामेकदेशजापात् । अङ्गहीनाः—अङ्गन्यासमन्त्रहीनाः । असंवृताः—अगोपिताः । गोपितेन गौरवं प्रकाशनेन नैष्फल्यं

---

(१) योगन्तु इति सो० पु० पा० ।

(२) मत्तस्त्वक्षस्यादिति इति सो० पु० पा०

अपूर्णाक्षपाश्छिन्नाः स्युः स्तम्भिताः सानुनासिकाः ।
अकालविनियोगेन प्रबोधः (१) स्वापगा जपात् ॥७७॥
मत्ताः पर्वेषु (२) पठनादन्यवर्णैस्तु कीलिताः ।
रुद्धा विसन्धिकाः प्रायदुःखा वैरिसमन्विताः ॥७८॥
खण्डीभूतास्त्वंशजापादङ्गहीनास्त्वसंवृताः ।
अपूर्णेनोपदिष्टा ये हीनवीर्यास्तु ते मताः ॥७९॥
सदा प्रयोगात् कुण्ठत्वं क्लिष्टताऽतिविलम्बनात् ।
रुग्णा प्रलपनैर्जापादन्यमन्त्रैः सहाविलाः ॥८०॥
उपेक्षावस्थया जापात् वैषम्यादवमानिताः ।
पञ्चविंशतिरुद्दिष्टा दोषांस्तान् शमयेद्गुरुः ॥८१॥

---

च सर्व्वमन्त्रदेवतानां सर्वत्रोच्यते। अपूर्णेन—अनुग्रहविधौ पूर्णाभिषेकादिगुर्वाज्ञामन्तरेण प्रवृत्तेन। हीनवीर्याः—क्षीणबलाः अनुक्तकरणादसंजातशक्तिना प्रतिपादितत्वात् अस्मिन् शिष्ये त्वकार्य्यकरादभजनादनर्थकराश्चेत्यर्थः। कुण्ठत्वम्—अकार्य्यकरत्वम्। सुसिद्धा अपि मन्त्रादयः सर्वदा विनियोक्तुस्तीक्ष्णशस्त्रवत्कुण्ठाः निस्तैक्ष्ण्या भवन्तीत्यर्थः। क्लिष्टता—क्लेशार्दितत्वम् अतिविलम्बनात् उक्तकालादधिकं विलम्ब्य मन्त्रादीनामक्षरावर्तनात्। रुग्णाः—पीड़िताः। प्रलपनैर्ज्जापात्—अयोग्यैरालप्यालप्य जापात्। अन्यमन्त्रैः—जप्यमानादन्यमन्त्रैः। आविलाः—व्याकुलाः—एकस्मिन्मन्त्रे जप्यमाने अन्यमन्त्रस्य मध्ये मध्ये जपत उभयोरपि मन्त्रयोर्व्याकुलता भवति तयोर्नैष्फल्यानर्थादयः सम्भवन्तीत्यर्थः। उपेक्षा—परित्यागः। अनवस्थया जापात्—गुरूक्तकल्पोक्तस्वकल्पितमार्गेष्वन्यतममपहाय यथोक्तिक्रमजापादित्यर्थः। वैषम्यात्—मन्त्राणां देवतानां च जपपूजाहोमादिषु वैषम्यात्। विषमभावात् हीनाधिक्यत इत्यर्थः। अवमानिताः—परिभूताः। शमयेद् गुरुः—वक्ष्यमाणोपायेनेत्यर्थः ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२॥

---

(१) मूर्छिताः स्वा इति सो० पु० पाठः।

(२) मन्त्रपर्वेषु इति मू० पु० पा०।

बन्धनं योनिमुद्राया मन्त्राणां वीर्ययोजनम् ।
उभयं बोधयन् शिष्यं संरक्षेत् गुरुरात्मवान् ॥८२॥
गुरोर्लक्षणमेतावदादिमान्त्यन्तु वेदयेत् ।
आदिमान्त्यविहीनास्तु वर्णाः स्युः शरदभ्रवत् ॥८३॥
तस्मादादित एवासौ कुर्यात्तत्तदहङ्कृतिः ।
यदहङ्कारविज्ञानान्मन्त्रसंभोजायते नरः ॥८४॥
अनादिक्रमसंसिद्धमातृकाद्यन्तयोजनात् ।
तादात्म्यसिद्धिं तां विद्धि सर्वमन्त्रार्थविग्रहाम् ॥८५॥
द्विजातीनां तु संस्कारं वेदोक्तं समुदाहृतम् ।
तेषां च तत्र तत्रापि विद्यया विधिमाचरेत् ॥८६॥
स विद्यास्मरणं कुर्यात् क्रियां सर्वत्र चोदिताम् ।
तेन तन्मयतासिद्धिः सर्वत्र भवति ध्रुवम् ॥८७॥

---

बन्धनमित्यादिभिर्विग्रहाम् इत्यन्तैश्चतुर्भिः श्लोकैर्देशिकस्य कर्तव्यमुपदिशति। तत्र बन्धनम्—अनुसन्धानम्। योनिमुद्राया उत्तरत्र होमपटले प्राणमानसयोर्मूलाधारादिब्रह्मरन्ध्रावधि सुषुम्णान्तरालेन गमागमरूपा योनिमुद्रा तदनुसन्धानं-योनिमुद्राबन्ध इत्यर्थः। वीर्ययोजनम्—उत्तरत्र वासनापटले प्रोक्तस्य मन्त्रवीर्यस्य मन्त्रेण साधकेनेव योजनं मन्त्रवीर्ययोजनमित्यर्थः। एतदाराधनमुखात् स्फुटतरमवगन्तव्यम्। आद्यमान्त्यम् आदिममन्त्यञ्च। आदिमान्तत्रविहीनाः—आदिमान्तत्रज्ञानसम्बन्धविहीनाः। वर्णाः—केवलमक्षरविग्रहा मन्त्रा इत्यर्थः। तत्तदहंकृतिम् मातृकाया आद्यन्ताक्षरद्वयात्मिकाम् ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥

अनादीत्यादिना श्लोकेनैतदुक्तं भवति। अनादिसिद्धक्रमाणामक्षराणां समुदायरूपाया मातृकायाः प्रथमचरमाक्षयोरकारहकारयोर्योजनात् संजातरूपमहं शब्दं तदर्थं च आद्यन्तप्रत्याहृतिन्यायेन स्वात्मनो मातृकात्मतां तत् वाच्यरूपसर्वदेवतात्मतां चेति ॥ ८७ ॥

अन्येषामपि वर्णानां विद्यया समुपाचरेत् ।
निधने विद्यया दाहो विद्ययाऽन्यत् समाचरेत् ॥८८॥
सम्पूज्य भोजयेदेकमनेकं वा स्वशक्तितः ।
योगिनं विद्यया सिद्धं पूर्वतश्च निमन्त्रितम् ॥८९॥
उर्मिकावसनाद्यैस्तं पूजयित्वा (१) प्रणम्य च ।
विद्यया विसृजेन्मन्त्री स्वविद्यासिद्धये शिवे ! ॥९०॥
गुरोस्तु जन्मदिवसं विद्याप्राप्तिदिनं तथा ।
स्वजन्मदिवसं नाथव्याप्तिवासरमेव च ॥९१॥
अक्षरत्रयसम्पातदिनं पूर्णादिनं तथा ।
षट् पर्वाणि विशिष्टानि सदर्शं (२) सप्तपर्वकम् ॥९२॥
मासतो वर्षतो वाऽपि कुर्यादेतेषु पूजनम् ।
गुरोस्तु जीविते नित्यव्याप्ते तत्पुत्रकादिकम् (३) ॥९३॥
पूजयेत्तत्समं तं च प्रणामाद्यैरुपाचरेत् ।
तदभावे तत्कुलीनं तद्भक्तं वा समर्चयेत् ॥९४॥

---

द्विजातीनामित्यादिभिः शिवे इत्यन्तैः पञ्चभिः श्लोकैर्नाथकृत्यमुपदिशति । तत्र—द्विजातीनां—ब्राह्मणक्षत्रियवैश्यानाम् । संस्कारं—जातकर्मादिकम् । अन्येषां वर्णानाम्—शूद्राणाम् अनुलोमप्रतिलोमसङ्करात्मनां च ॥८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥

गुरोरित्यादिभिर्भवेदित्यन्तैः पञ्चभिः श्लोकैः पर्वादिकमुपदिशति । तत्र—अक्षरत्रयसंपातदिनम्—उत्तरत्र मातृकापटले वक्ष्यमाणाक्षरात्मकदिनेषु वर्णाक्षरद्वयं घटिकाक्षरं च त्रीण्यक्षराणि यस्मिन् दिने संगतानि भवन्ति तदक्षरत्रयसम्पातदिनम् । तत्प्रकारस्य तत्रैव स्फुटतरं वक्ष्यमाणत्वादिह न प्रपञ्चितम् ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥

---

(१) रचयित्वेति मू० पु० पा० । (२) संदर्शमिति मू० सो० पु० पा० ।
(३) गुरोस्तु जीवती दूरे व्याप्ते तत्पूर्वकादिकमिति मू० पु० पा० ।

स्तुवीत पञ्चभिः श्लोकैस्तन्नित्यं सर्वसिद्धये ।
प्रातः प्रबोधसमये जपात्सुदिवसं भवेत् (१) ॥९५॥
नमस्ते नाथ ! भगवन् ! शिवाय (२) शिवरूपिणे ।
विद्यावतारसंसिध्यै स्वीकृतानेकविग्रह ! ॥९६॥
नवाय नवरूपाय परमार्थैकरूपिणे ।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥९७॥
स्वतन्त्राय दयाक्लृप्तविग्रहाय शिवात्मने ।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ॥९८॥
विवेकिनां विवेकाय विमर्शाय विमर्शिनाम् ।
प्रकाशानां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ॥९९॥
पुरस्तात्पार्श्वयोः पृष्ठे नमस्कुर्यादुपर्यधः ।
सदा मे चित्तरूपेण विधेहि भवदासनम् ॥१००॥
भूमितत्वमयी व्याप्तिरिति सम्यक्समीरिता ।

---

नम इत्याद्यैरासनमित्यन्तैः पञ्चभिः श्लोकैर्नाथस्तोत्रमुपदिशति । तत्र— नवाय—सर्वदा नवनवत्वस्पृहणीयाय । नवरूपाय—नवसङ्ख्याविशिष्टविग्रहाय । परमार्थैकरूपिणे—शिवत्वैनैकविग्रहायेत्यर्थः । विवेकविमर्शयोरिदन्ताहन्तयोर्याथात्म्यज्ञानमर्थः । प्रकाशानाम्—सत्त्वरूपाणाम् ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

पुरस्तादित्यादिना श्लोकेनैतदुक्तं भवति । देशकालाकारैस्त्वन्मयतां मे विधेहीति शिवम् ॥ १०१ ॥

---

(१) व्रजेत् इति मू० पु० पा० ।
(२) गुरुरूपिणे इति सी० पु० पा० ।

अस्या निःफालनाच्चित्ते तत्तत्त्वं स्वात्म(१)सात्कृतम् ॥१०१॥

इति षोड़शनित्यातन्त्रे श्रीकादिमते प्रथमं पटलम् (२) ।

---

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां तन्त्रावतारादिप्रकाशनपरं प्रथमं पटलं परिपूर्णं परामृष्टम् ॥ ग्रन्थसंख्या ।

प्रथमे यन्त्रमेकं स्यात् ग्रन्थसङ्ख्या शतात्परम् ।
त्रिषष्टिरिति निर्दिष्टं व्याख्यानं सम्यगीक्षणात् ॥

---

(१) तत्स्वं स्वात्म इति मूलपुस्तके पाठः ।　　(२) प्रथमः पटल इति सं० पु० पाठः ।

## अथ द्वितीयं पटलम् ।

अथ नाथान् प्रवक्ष्यामि मद्रूपान् नित्यविग्रहान् ।
विद्यावतारसोपानभूतांस्तत्पूजनं तथा ॥ १ ॥
प्रकाशोऽथ विमर्शोऽन्यस्त्वानन्दोऽपर इत्यपि ।
नामभेदादहं लोके कल्पयन् दिव्यरूपतः ॥२॥
त्रयस्तेभ्यः समुत्पन्नाः सिद्धाश्च त्रय एव ते ।
ज्ञानः सत्यः पूर्ण इति श्रीमुखास्ते समीरिताः ॥३॥
दिव्या मदन्तिके नित्यं सिद्धा भूमाविहापि च ।
निवसन्ति ततस्तेभ्यः समुत्पन्नास्त्रयस्तथा ॥४॥
(१) स्वाभावः प्रतिभस्तद्वत् सुभगश्चेति नामतः ।
ते भूमावेव सततं निवसन्ति मदात्मकाः ॥५॥
एवं तैर्नवभिस्तन्त्रं लोके प्रथितवैभवम् ।
अकल्पयत् कादिशक्तिस्त्वदनन्या कृते युगे ॥६॥
एते द्विनेत्रा द्विभुजा ललिताकारसंयुताः ।
प्रसन्नवदनाः स्मेरा वराभयकरान्विताः ॥७॥

---

## द्वितीयं पटलम् ।

पूर्वस्मिन् प्रथमे पटले तन्त्रावतारादिकमुपदिश्यानन्तरं सकलपुरुषार्थप्रकाशकानां तन्त्रावतारकाणां नवानां नाथानां स्वरूपं तत्सपर्याविशेषादिकमुपदिशति—

---

(१) स्वभावप्रतिभस्तद्वत इति सो० पु० पा० ।

पूज्या एवंविधाः स्वस्वमण्डलादिषु पूजने ।
देवी श्रीचक्रसंस्थास्तु (१) देव्याकारास्तदाज्ञया ॥८॥
(२) प्रियाक्षराभिधानास्ते सर्वेऽप्यानन्दसंयुताः ।
स्वमण्डलेषु नाथान्ताः शक्त्यन्ता देवि ! मण्डले ॥९॥
माया लक्ष्म्यादिकास्तद्वन्नवार्णाख्यास्तथा भवेत् ।
नवानां सर्वशक्तीनां देवतानां च पूजने ॥१०॥
या विद्या सर्वसन्तोषकारिणी सर्वसिद्धिदा ।
सप्ताक्षर्या तया देवि ! (३) पूजयेन्नामपूर्वकम् ॥११॥
तां मे कथय विद्यां तु या सर्वप्रियकारिणी ।
शृणु देवि ! महासिद्धिकरी सर्वप्रियंकरी ॥१२॥

---

अथ नाथानित्यादिना तद्यत इत्यन्तश्लोकशतात्मना द्वितीयेन पटलेन । तत्र अथ नाथानित्यादिभिर्नामपूर्वकमित्यन्तैरेकादशभिः श्लोकैर्नवानां नाथानामुत्पत्तिक्रमं तत्कार्यं तैर्विद्याप्रसारणं तन्मन्त्रांश्चोपदिशति । तत्र—मद्रूपानित्युक्त्या नित्यविग्रहत्वम् । तथेति समुच्चये । श्रीमुखाः—श्रीशब्दाद्यसंज्ञाः । मदात्मकाः—शिवरूपिणः । एते असाधारणाः (४) त्र्यक्षरनामानः । सर्वसाधारणाः त्र्यक्षरसंज्ञा नव । त्रित्रिक्रमेण दिव्याः सिद्धा मानवाश्च वेदितव्या इत्यर्थः । एतेषां नवानां नाथानामसाधारणत्र्यक्षरनामार्थप्रतिपादनेनाखण्डविग्रहत्वशिवरूपत्वमाराध्यसुखादिवाऽवगन्तव्यम् । स्वस्वमण्डलादिष्वित्यत्र मण्डलान्युत्तरत्र वक्ष्यति । आदिशब्दः स्वशीर्षादिविषयः । आनन्दसंयुता इति—आनन्दशब्दोपेतसंज्ञा इत्यर्थः । नवानाम्—नाथानामिति शेषः । नामपूर्वकम्—तत्तन्नामपूर्वकम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

ताम्मे इत्याद्यैर्नमसास्थितिरित्यन्तैः पञ्चभिः श्लोकैः सकलशक्तितन्त्रसाधारणं सप्ताक्षरं मन्त्रमुपदिशति । तत्र या—सप्ताक्षरी विद्या । जवी—पकारः । मरुत्—

---

(१) संस्थातु इति सो० पु० पा० । (२) त्र्यक्षरा इति सो० पु० पा० ।
(३) देवीमिति मू० पु० पा० । (४) त्र्यक्षर इति व० पु० पा० ।

जवी मरुत्समोपेतो गोत्रा च धरया युता ।
प्राणोऽपि मरुता युक्तः स नभः स्यात् तृतीयकम् ॥१३॥
पुनर्जवी क्षमयोपेतो ज्या च वातसमन्विता ।
व्याप्तं मरुत्सखं षष्ठं नभोऽग्निः सप्तमाक्षरम् ॥१४॥
एवं सप्ताक्षरी प्रोक्ता शक्तितन्त्रेषु सिद्धिदा ।
सर्वासामपि शक्तीनां देवतानां च नामभिः ॥१५॥
योजयेन्नामपूर्वां सा सिद्ध्यै साधारणं तथा ।
शक्तितन्त्राद्बहिर्भूततन्त्रेषु नमसा स्थितिः ॥१६॥
नवानां नव नामानि नवार्णानि पृथक् पृथक् ।
तानि सप्ताक्षरीयोगात्प्रत्येकं षोडशाक्षरम् ॥१७॥
नित्याषोडशरूपाणि तानि ज्ञेयान्यनुक्रमात् ।
तेषां नवानां नामानि मण्डलीकरणं प्रिये ! ॥१८॥
पारम्पर्य्यमिति प्रोक्तमाप्तिर्विद्यान्वयस्थितौ ।
तेन शुद्धेन शुद्धिः स्याद्विद्यायामन्यथाऽन्यथा ॥१९॥

---

आकारः । गोत्रा—दकारः । धरया—उकारेण । प्राणः—ककारः । मरुता प्राग्वत् । नभः—मकारः—विन्दुरित्यर्थः । तृतीयकम्— अक्षरमिति शेषः । जवी—प्राग्वत् । क्षमया—उकारेण । ज्या—जकारः । वातः—अकारः । व्याप्तम्— यकारः । मरुत्— प्राग्वदाकारः । नभः—प्राग्वत् । अग्निः—ईकारः । देवतानामित्युक्तिः पुंविषया ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

नवानामित्यादिना नामानीत्यन्तेन सत्रिपादेन श्लोकेन षोडशनित्यात्मनां तेषां नवानां नाथानां षोडशाक्षराणि नामान्युपदिशति । तत्र । षोडशाक्षरम्—नामेति शेषः ॥ १७ ॥ १८ ॥

मण्डलीकरणमित्यादिना अन्यथा इत्यन्तेन पादादिना श्लोकेन पारम्पर्यस्याविच्छिन्नत्वमुपदिशति । तत्र मण्डलीकरणं आद्यन्तयोः संबन्धतः । आप्तिः—प्रामाण्यम् । अन्वयः—सन्ततिः ॥ १९ ॥

साधकानां तु नामानि दिनपर्यायतोपि वा ।
दिनाक्षराण्यपि तथा अमायोऽनन्त्यमेव च (१) ॥२०॥
नाम पर्यायतः प्राप्तं कालावाप्तमिति द्वयम् ।
प्रसिद्धं बाह्यतो यच्च त्रीणि नामानि साधके ! ॥२१॥
तस्मात् सम्प्राप्तविद्यास्तु साधकास्तैस्त्रिभिः स्तुतम् ।
पूजाश्लोकस्तुतौः कुर्यात् पारम्पर्यप्रसिद्धये ॥२२॥
गुरुमण्डलपूजां तु कुर्यात्सप्तसु पर्वसु ।
पूर्णायां षोड़शार्णानि नामान्यालिख्य पूजयेत् ॥२३॥
अन्यत्र पर्वषट्के तु नवार्णान्येव लेखयेत् ।
पूजयेत्तत्र तत्रापि वदन् सप्ताक्षरीं शिवे ! ॥२४॥
गुरुमण्डलपूजासु सर्वत्र नव चोदिताः ।
उपचारास्ततस्तांस्तैः पूजयेत् शृणु तान्यपि ॥२५॥

---

साधकानामित्यादिभिः प्रसिद्धये इत्यन्तैस्त्रिभिः श्लोकैर्मर्त्यानां त्रयाणां श्रोतव्यानि त्रीणि नामान्युपदिशति। तत्र वा—समुच्चये। तेन नामद्वयं भवतीत्यर्थः। दिनाक्षराणि—पञ्चविंशपटले वक्ष्यमाणानि। तथा—द्विप्रकाराणि। अमायः—अविसर्जनीयः। अनन्त्यः—अन्त्येन क्षकारेण रहितः प्रकार इति शेषः। एतदुक्तं भवति—उपरिष्टाद्वक्ष्यमाणेषु घटिकाक्षरेषु विसर्जनीयक्षकारयोरेकमङ्गीकृत्य एकमपास्य पञ्चाशदक्षराणि भवन्तीति। पर्यायतः प्राप्तम्—स्वगुरोर्नामान्तरतः प्राप्तम्। कालावाप्तम्—युगादिदिवसमारभ्य विद्याप्राप्तिदिवसावधि नव नवसंख्यया हृतेषु युगदिवसेषु शिष्टदिनसंख्यया प्राप्तं नाम। बाह्यतः सिद्धम्—मातापितृदत्तम्। तैस्त्रिभिः—नामभिरिति शेषः। पूजाश्लोकस्तुतीरित्यत्र मण्डलादिषु पूजां पर्यायप्राप्तेन नाम्नैव कुर्यात् ॥ २० ॥ ॥ २१ ॥ २२ ॥

गुरुमण्डलपूजामित्यादिभिः समीरिता इत्यन्तैश्चतुर्भिः श्लोकैः पूजामण्डले नामाक्षरलेखनक्रमादिकमुपदिशति। तत्र सप्तपर्वाख्याद्यपटलोक्तानि। तत्र तत्रापि

---

(१) वा इति सो० पु० पा०।

गन्धं पुष्पं तथा धूपं दीपं नैवेद्यकं तथा ।
ताम्बूलं नमनं स्तोत्रं स्वात्मनेति समीरिताः ॥२६॥
गुरुमण्डलनिर्माणं पीठे कुर्यान्महेश्वरि ! ।
फलकायां स्थले वापि सुशुद्धे सुसमे स्थिरे ॥२७॥
प्राक्प्रत्यग्दक्षिणोदक् च सूत्राणि दश विन्यसेत् ।
पञ्चाङ्गुलान्तरालानि ततो देवेशि ! जायते ॥२८॥
एकाशीतिपदोपेतं चतुरस्रन्तु मण्डलम् ।
तत्सर्वमध्ये प्रथमं द्वितीयन्तु पुरोगते ॥२९॥
तद्वामे (१) तत्तृतीयं चालिखेन्नवनवस्वपि ।
एवं नवनवोपेतं मण्डलं सप्तपर्वसु ॥३०॥
नवकं नवधा कृत्वा मध्ये सूत्रद्वयार्पणात् ।
तेषु नामार्णनवकमालिख्याभ्यर्चयेत् क्रमात् ॥३१॥
पूर्णा पर्वणि तन्मध्ये कृत्वा सूत्रत्रयं त्रयम् ।

---

वक्ष्यमाणेषु मण्डलेषु सप्ताक्षरोयुक्तैर्नामभिः पूजयेदित्यर्थः । स्वात्मना—स्वात्मसमर्पणात् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

गुरुमण्डलेत्यादिभिः क्रमादित्यन्तैः पञ्चभिः श्लोकैः षट्सु पर्वसु पूजनीयगुरुमण्डललेखनपूजादिकमुपदिशति । तत्र—आलिखेन्नवनवस्वपि—नवसु नवकेषु नाथानां नवनवकान्यालिखेदिति । एतदुक्तं भवति । एकाशीतिकोष्ठेषु मध्यनवकमारभ्य तत्पूर्वादिगतनवकादिषु अन्येषु नवकेषु प्रादक्षिण्येन नवानां नाथानां क्रमेण (२) तत्तन्मध्यकोष्ठावस्थानं, इतरेषामुक्तक्रमेणाभितोऽवस्थानञ्च जानीयादिति । तेषु नामार्णनवकं मध्यमुपक्रम्य पूर्वादिप्रादक्षिण्येन लिखेदित्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

पूर्णेत्यादिभिः सिद्धये इत्यन्तैः पञ्चभिः श्लोकैः पूर्णासु पूजनीयगुरुमण्डलविशे-

---

(१) तद्वाम्ये तत्तृतीयं इति सी० पु० पा० ।
(२) तत्र मध्येति व० पु० पा० ।

षोड़शीकृत्य तेष्वेवं लिखेन्नामानि तानि वै ॥३२॥
एवं पूजा गुरौ जीवत्युपेते माममूनि वै ।
स्थानानि मण्डलीकृत्य तत्र चाऽऽलेखने मते ॥३३॥
एवं यः पूजयेन्नाथान् पर्वस्ववहितः शिवे !।
स देशिकवरः सिद्धः तस्माद्विद्याप्ति(१)रुत्तमा ॥३४॥
अन्यथाऽवाप्तिरुभयोरनर्थाय सुनिश्चितम् ।
व्याधिशस्त्रादिपीड़ा वा चित्तभ्रान्तिर्जले मृतिः ॥३५॥
इत्यादिव्यसन(२)प्राप्तिर्नृपादशनितो मृतिः ।
तस्मादुक्तक्रमेणैव कुर्यात्सर्वार्थसिद्धये ॥३६॥
एकद्वित्रिचतुःपञ्चवर्षाण्यालोच्य योग्यताम् ।
भक्तियुक्तान् गुणांश्चापि क्रमाद्वर्णेषु सङ्करे ॥३७॥
पश्चादुक्तक्रमेणैव वदेद्विद्यामनन्यधीः ।
अन्यथा चेद्वदेन्नाशं सशिष्यो गुरुराप्नुयात् ॥३८॥

---

षादिकमुपदिशति । तत्र—तेष्वेवं लिखेदित्यत्र एवमिति—पारम्पर्यप्राप्तसम्प्रदाय-क्रमेण लिखेदित्यर्थः । तद्यथा—मध्यचतुष्टये वामाधःस्थितं कोष्ठमारभ्य मध्यचतुष्टयं प्रादक्षिण्येन परीत्यामुक्तक्रमं बहिरपि तथा परीयात् । मामुपेते—मुक्ते । मण्डलीकृत्य—वृत्तमालिख्य । अन्यथा—गुरुमण्डलार्चाविरहिता इत्यर्थः । इत्यादिरित्यत्रादिशब्दः सर्वानर्थनिवारणादीनामुपलक्षणम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

एकद्वीत्यादिना गुरुराप्नुयात् इत्यन्तेन श्लोकद्वयेन वर्णानुरूपतः शिष्यस्य परीक्षाकालादिकमुपदिशति । तत्र योग्यता—प्रोक्तसमाचारशुद्धत्वादि ॥ ३७ ॥ ३८ ॥

---

(१) विद्या निरुत्तमा इति मू० पु० पाठः ।

(२) व्याप्तिर्नृपादिति मू० पु० पा० ।

चक्रे देव्यां तथा शिष्ये प्रतिष्ठा त्रिविधोच्यते ।
सा तु तत्त्वविदा कार्या सम्प्रदायानुरोधिना ॥३९॥
स्थिरे शुभग्रहोपेतेऽनुकूले गुणशालिनि ।
मुहूर्ते कारयेद्विद्वान् पूर्णायां वा शुभोदये ॥४०॥
अक्षरत्रयसम्पातदिने पूर्णादिनत्रये ।
प्रोक्तेषु पञ्चस्वन्येषु सर्वदा वा शुभोदये ॥४१॥
कुर्यात्प्रतिष्ठां सिद्धात्मा (१) नत्वन्यो (२) ज्ञानगर्वितः ।
गुर्वनुज्ञामृते मोहाल्लोभात् वा कुरुते यदि ॥४२॥
सपुत्रदारो निधनं प्राप्नुवन्निरयं व्रजेत् ।
तस्मात् पूर्णाभिषिक्तेन प्राप्तानुज्ञः समाचरेत् ॥४३॥
क्षौद्राज्यदुग्धैः प्रथमं नालिकेराम्भसा ततः ।

---

चक्रे देव्यामित्यादिभिः समाचरेदित्यन्तैः पञ्चभिः श्लोकैः प्रतिष्ठायास्त्रैविध्यादिकमुपदिशति । तत्र चक्रे—ललिताचार्चाचक्रे । देव्याम्—देवीमूर्त्तौ । सम्प्रदायानुरोधिना—विदिततत्त्वेनापि नित्यनैमित्तिकोपास्तिनिरतेन । स्थिरे—राशाविति शेषः । अनुकूल—इति दिनादिविषयस्य । गुणशालिनीति—मुहूर्त्तविशेषणम् । यद्वा तदसिद्धौ । वा—अवधारणे । पूर्णायां—विशेषतः श्वासे शुभोदये कुर्यात् । तदितरत्रेत्येतित्यर्थः । अक्षरत्रयसम्पातदिने—पञ्चविंशपटलोदिताक्षरक्रमेण दिननित्याघटिकाक्षरे(३)ष्वेकाक्षरस्य त्रिस्थानदर्शनं यस्मिन् दिने तस्मिन्नित्यर्थः । पूर्णादिनत्रये पञ्चमीदशमीपञ्चदशीषु तिथिषु । प्रोक्तेषु पञ्चस्वन्येषु—प्रागुक्तेषु सप्तसु पर्वसु अत्रोदितं पर्वद्वयं वर्जयित्वा अन्येषु पञ्चस्वित्यर्थः । सर्वदा वा शुभोदये वा पक्षान्तरे । तिथिवारयोगनक्षत्रपूर्णादिवत् प्रोक्तमखिलमनवेक्ष्य स्वात्मनः श्वासस्य शुभोदय एव कुर्यादित्येकः पक्षः सिद्धविषयः । सिद्धात्मा तत्त्ववित् । मोहः—अज्ञानम् । लोभः—वित्तेच्छा । निरयं—क्लेशस्थानम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥

क्षौद्रेत्यादिभिर्भविष्यतीत्यन्तैरष्टभिः श्लोकैः श्रीचक्रप्रतिष्ठादिकमुपदिशति ।

---

(१) शुद्धात्मा इति मू० पु० पा० । (२) ज्ञानवर्जित इति सो० पु० पा० ।
(३) चरयोरेका इति १ पु० पा० ।

अभिषिच्याथ तोयेन क्वथितेनाऽ(१)क्षरौषधैः ॥४४॥
आवाह्याभ्यर्च्य तल्लग्ने चक्रे संस्थाप्य पूजयेत् ।
नित्यातत्त्वाग्निकालोत्थविद्ययाऽभ्यर्च्य ताः क्रमात् ॥४५॥
स्पृशन् जपेत् कराग्रेण श्रीचक्रं पूजयेदपि ।
एवं दिनत्रयं कृत्वा ततो नित्यक्रमं भजेत् ॥४६॥
गन्धैः पुष्पैर्नैवेद्यैर्धूपैर्दीपैर्नैवेद्यतर्पणैः ।
त्रिरात्रं पूजयेद्देवीं (२) योगिनीयोगिभिः समम् ॥४७॥
एवं देवीप्रतिष्ठायां क्रमः सान्निध्यकारकः ।
गुरवे दक्षिणां दद्यात् प्रत्यक्षाय शिवात्मने ॥४८॥
सर्वस्वं वा तदर्धं वा तदर्धं वा तदाज्ञया ।
न चेत्तच्छक्तिसङ्क्रान्तिः कथमस्य भविष्यति ॥४९॥
गजाश्वमहिषीमेषपशुदासीमहीयुतम् ।
सुवर्णं भूषणं वासो भवनं वाऽन्यदीप्सितम् ॥५०॥

---

तत्र क्वथितेनाक्षरौषधैः—पञ्चत्रिंशपटलोक्तैः पंचाशदक्षरौषधैः । नित्यातत्त्वाग्निकालोत्थविद्यया—पञ्चविंशपटलप्रोक्तकालावासतद्दिननित्याविद्यया । ताः क्रमात्—तत्पटलप्रोक्तषट्त्रिंशत्सप्तशताधिकविंशतिसहस्राणि नित्या विद्याः । अपिर्भिन्नक्रमः । अपि वा स्पृशन् जपेदित्यर्थः । एतदुक्तं भवति—आवाहनानन्तरन्तद्दिननित्याविद्यया मूलविद्यातार्तीयखण्डेन मूलविद्यया च प्रत्येकं त्रिवारमभ्यर्च्य क्रमसपर्यानन्तरं ताभिः पूजयेत् । अपि वा स्पृष्टश्रीचक्रः प्रोक्तसङ्ख्याविशिष्टाः कालनित्यास्ता जपेदिति । तर्पणैः—प्रीतिदायकैरमृतैः । एवं देवीति । पूर्वोक्तक्रमादिति शेषः । तदाज्ञया—गुरोरिच्छया । भवनं वेत्यत्र वाशब्दः समुच्चये । स्वशक्तितः—यथाविभवम् । तदायत्तः—समस्तं स्वव्यापारन्तदनुमतमेव कुर्यादित्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

---

(१) कथितैरक्षरौषधैरिति सो० पु० पा० ।
(२) देवीं इति स० मु० पु० पा० ।

दद्यात्स्वशक्तितो भक्त्या त्वशक्तो यदि सर्वथा (१) ।
सर्वदासौ तदाऽऽयत्तस्तेन सिद्धिर्भविष्यति ॥५१॥
(२) ( वामेशनापि संपूज्य तत्तत्फलमवाप्नुयात् ।
कार्या योगेषु योगेषु वाऽऽन्तरेष्वितरेष्वपि ॥
वारर्क्षतिथिसंप्रोक्तमन्त्रे वार्क्षैश्च दैवतैः ।
आवृत्तामर्चयेदग्निरक्षोवाय्वीशदिग्गतैः ॥
रोगशान्तिसमुद्योगफलानि समवाप्नुयात् ।
वाणामित्यधिया प्रोक्ता तिथिनक्षत्रदेवताः ॥
ऋक्षऋक्षांस्तिथीनां च वद मे परमेश्वर ! ।
वह्निदस्राम्बुमाविघ्नो भुजगा षण्मुखो रविः ॥
मातरश्च तथा दुर्गा दिशो यक्षेश्वरो हरिः ।
यमो हरः शशी चेति तिथीशाः परिकीर्तिताः ॥
नक्षत्रदेवताश्चापि शृणु वक्ष्ये यथाविधि ।
अश्विनौ च यमो वह्निर्धाता चन्द्रः शिवोऽदितिः ॥
गुरुसर्पाश्च पितरः अर्यमा भग एव च ।
दिनकृच्च तथा त्वष्टा मरुतेन्द्राग्निमित्रकाः ॥
इन्द्रनिर्ऋति यत्नानि विश्वे देवा हविस्तथा ।
वसवो वरुणः पश्चादज एकपदस्तथा ॥
अहिर्बुध्नस्तथा पूषा प्रोक्ता नक्षत्रदेवताः ।
कारस्करश्चामलकोदुम्बरो जम्बुकस्तथा ॥
खदिरः कृष्णवंशौ च पिप्पली नागरोहिणी ।
पलाशः प्लक्षकाम्बष्टः बिल्वार्जुनविकङ्कताः ॥

---

(१) सर्वदा इति मू० पु० पा० ।
(२) ( ) एतदन्तर्गतो ग्रन्थो मूलपुस्तक एकस्मिन्नेव वर्तते तस्य व्याख्या च नास्ति ।

वरलः सरलः सर्जवकुलः पनसस्तथा ।
अर्कः शमी कदम्बश्चाभूतो निम्बस्तथातिमः ॥
मधुकश्चेति सम्प्रोक्ता वृक्षाभानां क्रमाटमी ।
अश्वं गजमदं मजं सर्पं सर्पिणी च विड़ालिका ॥
अक्षमाक्षरीमुखा मूषकी वृषमाहिषी ।
व्याघ्रश्च महिषो व्याघ्री मृगी मृगशुनी कपिः ॥
गोखरडवानरा नारी तुरङ्गी च जगो गजाः ।
यदा रोगादिदुःखार्त्तिः भवेत्तत्पूर्वमे सुतैः ॥
मुहूर्तैः संख्यया चेति शान्तिः स्याद्विगुणेनधीः ।
आधारे पञ्च चक्राणि स्वाधिष्ठाने चतुष्टयम् ॥
प्रोक्तेषु भावयेत्तानि तावन्ति मणिपूरके ।
अनाहते ततः पञ्च यन्त्राणि परिभावयेत् ॥
विशुद्धाख्ये तु चत्वारि पञ्चाज्ञायोमिति क्रमात् ।
तत्तत्तिथिदिनेष्वेवं भावयेत् षोड़शीं शिवाम् ॥
तत्तच्चक्रगतां देवीं पूजयेत् सर्वसम्पदे ।
आधारादिषु चक्राणि भावयेद्ध्यानयोगतः ॥
ननु सर्वत्र सर्वाणि भावन्न कदाचन ।
भावयानामशक्तानां तत्तद्यन्त्राद्बहिस्तथा ॥
प्रोक्तान्याधारपद्मानि कृत्वा तत्रार्चयेद्विधिम् ।
एवं दिनेषु वारेषु पूजयेच्चक्रगतां शिवाम् ॥
संपूज्य देवीमिष्टानि प्राप्नुयात् प्रोक्तवासरैः ।
बलिं च दद्यात्तेष्वेव वासरेषु यथाविधि ॥
पञ्चाशन्मिथुनान्यत्र प्रोक्ते चक्रेऽङ्कराचके ।
मध्याह्ने सन्ध्ययोश्चापि चक्रस्थानामपीश्वरी ॥

शक्तिचक्रं मन्त्रचक्रमानिनां गामिनां—— ।
कूटानां मन्त्ररूपाणि प्रोक्तानि स्फुटमीश्वरी ॥
वैस्तेषां तेषु कालेषु बलिं दद्यात्तथोत्तरैः ।
देव्यास्त्वनुग्रहप्रोक्तः निवेद्यं मिक्थकं महत् ॥
निधाय तस्य मध्ये तु कृत्वा दीपं घृतप्लुतम् ।
निधाय तत्र तन्मन्त्रैस्तु मिथुनानामनुक्रमात् ॥
प्रत्येकं देव्यानां स्तेन सिद्धिर्भविष्यति । ) (१)
उक्तलक्षणसम्पन्नं शिष्यमाचारभूषणम् ।
पञ्चषट्कूटविद्याभ्यां शोधितं बहुवासरैः ॥५२॥
कलशैरभिषिच्याशु श्रीचक्रे सन्निवेश्य च ।
आधारे हृदये मूर्ध्नि चक्रं सञ्चिन्त्य मध्यतः ॥५३॥
स्वान्तादावाह्य संस्थाप्य संपूज्य न्याससंयुताम् ।
त्रिंशो विद्यां वदेत् कर्णे देव्यात्मा पूर्णमानसः ॥५४॥
देवतागुरुमन्त्रात्मतत्त्वैक्यं भावयेद्धिया (२)।
शतं जपेत्तदग्रस्थो निकटे त्रिदिनं वसेत् ॥५५॥

उक्तेत्यादिभिर्दिनादिभिरित्यन्तैः षड्भिः श्लोकैः सच्छिष्योपदेशक्रमसुपदेशानन्तरं शिष्यकृत्यं चोपदिशति। तत्र--शोधितं बहुवासरैः—आस्तिक्योपास्तिभक्तीनां स्थैर्यज्ञानार्थं बहुवासरशोधनम्। कलशैः—नवभिश्चतुर्भिरेकेन वा। मध्यतः—श्रीचक्रत्रयमध्यतः। स्वान्तात्—देशिकस्य स्वात्मनः। अत्रास्य पुरश्चरणार्थौ देशिकमुखादेवाचार्याभिषेकसमये लभ्यत्वादिह नोक्तः। देव्यात्मा पूर्णमानसः—स्वरूपं देवीरूपं विभाव्य स्वात्मानं तन्मयं बुद्ध्वा। एतदुक्तं भवति—केवलं देवतारूपो दयामयेन चित्तेनेतरनिरपेक्षेण विश्वाकारेणोपदिशेदिति। देवतागुरुमन्त्रात्मतत्वैक्यम्—देवतागुरुमन्त्राणां स्वात्मना तत्वतः चतुर्थपटलावसानश्लोकोक्तप्रकारेण। संचारिणो—

(१) ( ) एदन्तर्गता: श्लोका यथाऽऽदर्शमेव मुद्रिता इति नात्र सुधीभिर्दोषदृष्टिः कार्या।

(२) भावयन्मुदा इति मू० पु० पा०।

नोचेत् संचारिणी शक्तिर्गुरूमेति न संशयः ।
तस्मात् तदन्तिके तस्य पूजादेशादिकृद्भवेत् (१) ॥५६॥
तादात्म्यमात्मनो लब्धं गुरोर्मन्त्रात्मनो यतः ।
ततस्तदा समारभ्य तदायत्तोधनादिभिः ॥५७॥
अथाभिषेकं द्विविधं समवाप्य तदाज्ञया ।
अनुग्रहादि कुर्वीत सिद्धये नान्यथा भवेत् ॥५८॥
विधाय चक्रं तन्मध्ये योन्यां कुम्भं निधाय तु ।
क्वाथोदकैः समापूर्याभिषिच्याभिर्वदेन्मनुम् ॥५९॥
क्रमागतसमाचारनिरते शक्तिशालिनि ।
द्वितीयमभिषेकन्तु कुर्याद्देव्यात्मसिद्धये ॥६०॥
विरच्य विपुलं चक्रं प्रतियोनि च षोड़श ।
त्रिकोणानि विधायात्र मध्ये कुम्भं तु विन्यसेत् ॥६१॥

---

चंचला । मन्त्रात्मनः—चतुर्थपटलावसानोक्तप्रकारेण । धनादिभिरित्यत्रादिशब्देन गृहक्षेत्रादीन्युच्यन्ते ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

अथाभिषेकं द्विविधमित्यादिभिः समाचरेदितरन्तैः पञ्चदशभिः श्लोकैः साधकानां द्विविधमभिषेकं तत्प्रकारादिकं चोपदिशति । तत्र—अनुग्रहादीत्यत्रादिशब्देन प्रयोगा उच्यन्ते । विधाय चक्रम्—त्रयस्त्रिंशत्पटलोक्तं पूजायन्त्रम् । क्वाथोदकैः—वक्ष्यमाणाष्टत्रौषधिभिः क्वथितशीतैरुदकैः । क्रमो—नित्यक्रमः । द्वितीयम्—पूर्णाभिषेकम् । विपुलं चक्रं—प्रागुक्तं ललितापूजाचक्रं वक्ष्यमाणकुम्भनिधानयोग्यप्रमाणं विरच्येत्यर्थः । तत्प्रमाणन्तु तत्रैव वक्ष्यामः । प्रतियोनि च षोड़श त्रिकोणानि विधाय—प्रतित्रिकोणं त्रयस्त्रिंशत्पटले वक्ष्यमाणेन प्रमाणेन तिर्यग्रूपा नवरेखा यथासम्प्रदायं विलिखेत् । तेन षोड़श त्रिकोणानि सम्भ-

---

(१) क्रमसेत् इति मू० पु० पा० ।

सौवर्णं राजतं ताम्रं काचं मार्तिकमेव वा ।
पूरितं खारितोयेन क्वथितेनाच्चरौषधैः ॥६२॥
निक्षिप्य नवरत्नानि धान्यानि विविधानि च ।
हिरण्यानि सताम्राणि वासोभ्यामभिवेष्टयेत् ॥६३॥
रक्ताभ्यां चन्दनैश्च तपनसाश्वत्थपल्लवैः ।
शतक्रतुलताबद्धैः मातुलुङ्गफलान्वितैः ॥६४॥
विधाय कलशानन्यानन्येष्वेकैकशोन्यसेत् ।
सार्द्धं सहस्रं षट्विंशत् पञ्चसंख्याः क्रमोदिताः ॥६५॥
मध्ये चक्रेषु तोयादि कृत्वाऽऽवाह्याभिपूज्य च ।
कालात्मनित्यामन्त्रांश्च जपित्वा पूर्ववासरे ॥६६॥

---

वन्ति। एतदुक्तं भवति—श्रीचक्रे चतुरस्रपद्मदलदेवतास्थानेषु क्षितिस्थानेषु च त्रिकोणानि षोड़श त्रिकोणगर्भाण्यालिखेदिति। मध्ये—सर्व्वमङ्गलमध्ये (१)। (खारीतोयेन—(२) खारीप्रमाणतोयेन। खारी च पल ४०८६। उक्तञ्च—पलाश्च कुड़वः प्रस्थ आढ़की द्रोण एव च। धान्यादिमाने बोद्धव्याः। द्रोणी षोड़शभिः खारी कुम्भः कार्य्यश्च विंशतिः।) नवरत्नानि—वक्ष्यमाणानि पद्मरागमुक्ताप्रवाल-वैडूर्यपुष्पराजवज्रनीलगोमेदमरकताख्यानि। धान्यानि—व्रीहितिलमुद्गमाषयवगो-धूमादीनि। पल्लवविधानं सुरद्रुमशाखावासनया। मातुलुङ्गफलोक्त्या नारि-केरफलादिकमुपलक्षयति। लतापल्लवादीनां देशीसंज्ञा च स्वरूपे मुखागमविषये। सार्द्धं सहस्रं षट्त्रिंशत्पञ्चेत्येषासंख्या पञ्चनवतिसंख्यानानां श्रीचक्रस्थाना-मावरणशक्तीनां प्रत्येकं मूलदेवतावत्षोड़शविग्रहवत्वात्। (३) (तेन पञ्चनवति-शक्तीनां षोड़शभेदैः पञ्चदशशतानि विंशत्यधिकानि भवन्ति। षोड़शभेदा मूलदेवतायाः। एवं षट्त्रिंशदधिकानि पञ्चदशशतानि शक्तीनामतस्तावन्त एव कुम्भाः पूर्वोक्तप्रकारेण पञ्चविधकुम्भसङ्ख्याक्रमेण जाता इत्यर्थः।) एतदुक्तं भवति—आयुधानां द्वैविध्यात् अष्टौ षोड़शत्र्यस्र(४)गर्भवन्ति वज्राकारेणान्योन्यमभिमुखानि

---

(१) सर्वमङ्गलायोन्यां इति सो० पु० पा०। (२) एतदन्तर्गतो ग्रन्थः सो० पुस्तक एव वर्त्तते। (३) एतदन्तर्गतो ग्रन्थः सो० पुस्तक एव वर्त्तते। (४) षोड़शास्रगर्भ इति सू० पु० पा०।

जन्मर्क्षे प्रातरुत्थाय स्वनित्यां तत्र (१) पूजयेत् ।
सहस्रं प्रजपेत्पश्चाद्धोमं कृत्वा समन्ततः ॥६७॥
शृङ्गकाहलशङ्खादिवाद्यसङ्गीतनर्तनैः ।
मुदितैर्योगिनीवृन्दैरेकैकं देवतात्मभिः ॥६८॥
वृत्तैः (२) सम्पूजितैः सार्द्धमभिषिञ्चेद्गुरुः स्वयम् ।
स्वक्रमं तस्य कथयेत्तदा प्रभृति सोऽपि तम् ॥६९॥
अनुतिष्ठेदविच्छिन्नं पर्यायं तस्य विच्युतौ ।
सहस्रं प्रजपेद्विद्यामभिषेकसमन्वितम् ॥७०॥
अथवा षष्ठावत्यस्तु कलशांस्तत्र विन्यसेत् ।
तेषु शक्तीः समावाह्य सम्पूज्यैवाभिषेचयेत् ॥७१॥
एकं वा कलशं जन्मदिने कृत्वाऽभिषेचयेत् ।
एवं नैमित्तिकं नित्यमविच्छिन्नं समाचरेत् ॥७२॥

---

समालिख्य सर्वमद्ध्यत्रिकोणस्य कोणत्रये तिर्यग्रेखात्रयेण त्रीणि त्रिकोणानि षोड़शत्रिकोणगर्भाणि कृत्वा तेषामन्तराले वृत्तमालिख्य तन्मध्ये योनिषोड़(३)श-त्र्यस्रगर्भवन्ति वज्राकारेणान्योन्यमभिमुखमालिखेदिति । कालात्मनित्यामन्त्रान्-पञ्चविंशे पटले वक्ष्यमाणान् तद्दिननित्यामन्त्रान् । एतदुक्तं भवति—सर्वत्राभिषेकेषु पूर्वस्मिन् दिवसे अधिवासनपूर्वमन्येद्युरभिषेकं कुर्यात् । अथवा सद्योधिवासं विद-धीत । जन्मर्क्षे—शिष्यस्य जन्मदिने पूर्णाभिषेकं कुर्यादित्यर्थः । होमं कुर्यात्—नित्यहोमोक्तक्रमतः इति शेषः । समन्तत इत्यस्योपरिष्टादन्वयः । वृत्तैः—देवतात्म-त्वेन पूर्वाभिमन्त्रितैः । स्वं क्रमम्—अक्षरक्रमम् । अविच्छिन्नपर्यायम्—पर्यायशब्देन षट्त्रिंशद्दिनान्युच्यन्ते । एतदुक्तं भवति—गुर्वाज्ञास्मृते पर्यायविच्छित्तौ साभिषेकं ससहस्रं प्रायश्चित्तमुक्तम् । विच्छिन्नदिनानां प्रत्येकं सन्ध्यात्रयषष्टिघटिका जप-

---

(१) नित्यान्ते प्र इति सो० पु० पा० । (२) एतैः सु इति सो० पु० पा० ।
(३) षोड़शास्रगर्भं इति व० पु० पा० ।

नाथैस्तत्त्वैश्च नित्याभिः कालनित्या (१) तु विद्यया ।
आधारे हृदये शीर्षे वह्नौ सूर्ये निशाकरे ॥७३॥
ध्यायंस्त्रिसन्ध्यं प्रजपेत् सवर्गं व्यञ्जनस्वरम् ।
न्यसेच्च मातृकास्थाने तदा तद्देहसिद्धये ॥७४॥
ग्रहाणां वैपरीत्येषु जन्मर्क्षे ग्रहणे द्वयोः ।
कुम्भप्राप्तौ रिपुक्लेशे कुर्याद्देवाभिषेचनम् ॥७५॥
तेन दोषाः स्पृशन्त्येनं न कदाचन तद्बलात् ।
क्षुद्राणि क्रूरकर्माणि कृत्याश्च रिपुकल्पिताः ॥७६॥

---

स्वत्तं शतवारञ्च कृत्वा तद्दिनादि भजेत् । तत्र—इति केवल एव श्रीचक्रे ।
वेति पक्षः (२) काम्यविषयः ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥
६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

ाथैरित्यादिना सिद्धय इत्यन्तेन श्लोकद्वयेन सन्ध्यात्रयभजनं काम्यन्यासविशेषं देशति । तत्र एतदुक्तं भवति—आत्मज्ञानस्य नाथोपक्रमत्वात्तैः प्रातः सन्ध्या, य षट्त्रिंशत्तत्त्वात्मनाऽवस्थानात् माध्यन्दिनसन्ध्या, नित्याविद्यास्वरूपत्वेन पारिपूर्ण्यात् सायं सन्ध्याऽनुष्ठीयते इति । सवर्गं व्यञ्जनस्वरमित्यस्यार्थस्य ंशपटले वक्ष्यमाणत्वादिह न प्रपञ्चितः । न्यसेच्च मातृकास्थाने—पञ्चदश वक्ष्यमाणमातृकान्यासस्थानेषु सर्वेषु क्रमागततत्तदक्षरैः सार्द्धं तत्तद्दिनाद्योपेतां श्रीविद्यां न्यसेदित्यप्युपकरः—सम्प्रदायः ॥ ७३ ॥ ७४ ॥

ग्रहाणामित्याद्यैरभिषेचनमित्यन्तैः पञ्चभिः श्लोकैरभिषेककालविशेषं (३) भावं चोपदिशति । ग्रहणे द्वयोः—चन्द्रसूर्ययोः । क्षुद्राणि—विद्वेषणोच्चाटना । क्लेशाः—आध्यात्मिकाधिदैविकाधिभौतिकाः । अशेषदुःखार्त्तिः—चित्तस्य चेतत्वदुःखार्त्तिः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

---

(१) काला नित्या इति सो० पु० पा० ।
(२) अशक्तविषय इति सो० वं० पु० पा० ।
(३) विशेषां सदनु इति वं० १ पु० पा० ।

बलं कथं भवेत् तस्य सेकस्य परमेश्वर ! ।
ब्रूहि मे तद्बलं येन क्लेशा नश्यन्त्यशेषतः ॥७७॥
सोमसूर्याग्निरूपेण जलेन स्पर्शमात्रतः ।
नश्यन्त्यशेषतो दोषाः तस्मात्सेकसमो न हि ॥७८॥
सोमसूर्याग्निरूपत्वं जलस्योपरि कीर्तितम् ।
तस्मादशेषदुःखार्तिशान्त्यै स्यादभिषेचनम् ॥७९॥
सप्तसूत्रेषु कालेषु पुण्येष्वन्येषु चादरात् ।
कुर्यात्सदक्षिणां पूजां गुरोः प्रत्यब्दमेव वा ॥८०॥
उक्तेषूत्पातजातेषु पूजयेत् स्वर्णपुष्पकैः ।
अभिषिक्तस्तु विधिना प्रदद्याद्दक्षिणां गुरोः ॥८१॥
गुरुं तदग्रतः प्राप्तविद्यं तदनुजं तथा ।
गुरोर्गुरुं तद्गुरुं च स्वाग्रतो लब्धविद्यकात् ॥८२॥
प्रणामपूजास्तवनसेवादिभिरुपासनैः ।
तोषयेदन्यथा शक्तिः स्वीया तद्गामिनी भवेत् ॥८३॥
चन्द्रचन्दनकाश्मीरलघुकस्तूरिकायुतैः ।
पङ्कैर्विदध्यात्सर्वत्र गुरुमण्डलकल्पनम् ॥८४॥

---

सप्तस्वित्यादिभिर्भवेदितरन्तैश्चतुर्भिः श्लोकैर्गुरुपूजादिकमुपदिशति । तत्र प्रत्यब्दमेव वा इत्यत्र एवकारोऽवश्यकरणीयत्वप्रतिपादकः वाशब्दोऽधमसूचकः । वित्तादिभिः प्रतिमासपूजनं मध्यमः पक्षः । सप्तसु च पर्वस्वन्येषु पुण्यसमयेषु वित्तादिभिः पूजनमुत्तमः पक्षः । उत्पातजातेषु—दिव्यान्तरिक्षभौमत्रैविध्य-जातेषु विकारविशेषेषु । उपासनम्—चित्तानुवृत्तिः । स्वीया—शिष्यगता । तद्गा-मिनी—गुरुगामिनी ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥

चन्द्रेत्यादिना परमेश्वरीत्यन्तेन श्लोकद्वयेन गुरुमण्डलनिर्म्माणद्रव्यादिकमुपदि-शति । तत्र—चन्द्रं—कर्पूरम् । लघुः—अगुरुः । भाल इत्यादिना अवश्यधार्यत्वं कथयति । सर्वतः—सर्वत्र सिद्ध्यति ॥ ८४ ॥ ८५ ॥

पूजान्ते मार्जयित्वा तद्भाले चोरसि चांसयोः ।
धारयेत्सर्वतो लक्ष्मीं रसस्यात्परमेश्वरी ॥ ८५ ॥
पूर्वोक्तमण्डलेष्वेव यानि स्थानानि पूजने ।
प्रोक्तानि तानि सर्वाणि पद्मानि (१) परिकल्पयेत् ॥८६॥
पूजादाववसाने च पञ्चश्लोकान् जपेत्ततः ।
देव्यात्मत्वं गुरोर्लब्ध्वा श्लोकद्वादशकं जपेत् ॥८७॥
गणेशग्रहनक्षत्रयोगिनीं राशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥८८॥
प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।
कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥८९॥

---

पूर्वेत्यादिना श्लोकेन प्रागुक्तगुरुमण्डलविशेषविधानमुपदिशति। एतदुक्तं भवति -नवभिर्नवभिः कोष्ठैः सकर्णिकमष्टदलपद्मं यथाविधि विधाय तेषु नामाक्षराणि पङ्क्तिक्रमेणालिखेदिति। तन्मानं तन्निर्माणप्रकारं च यन्त्रपटले सुव्यक्तं वक्ष्यामः ॥ ८६ ॥

पूजादावित्यादिना श्लोकेन नाथदैवतयोः स्तोत्रद्वयजपकालमुपदिशति। तत्र—नाथ एव देवतास्वरूपेण भासत इति परमार्थं बुध्येत्यर्थः ॥ ८७ ॥

अतःपरं देवीस्तोत्रश्लोकद्वादशकस्य पूर्वमेव नित्याषोडशिकार्णवे महात्मभिः काश्मीरैरभिर्व्याख्यातत्वात्तेषां द्वादशानां श्लोकानामत्र व्याख्या सैव लिख्यते। गणेशेति। गणेशो—विनायकः। स च कालरूपी कथितः। ग्रहाः—सूर्यादयः। नक्षत्राणि—अश्विन्यादीनि। तन्मन्त्रादि च तन्नाम चाग्रे वक्ष्यति। योगिन्यो—वशिन्याद्याः। राशिः—मेषादिः। रूपिणीम्—एषां कारणत्वात्। देवीमिति पूजोक्तिः। मन्त्रमयीम्—अक्षरमयत्वात्। नौमि—नमनं तादात्म्यमुक्तम्। मातृकां—मातृवन्मातृकाम्—विश्वप्रसवित्रीम्। पीठरूपिणीम्—उक्तप्रकारैः सर्वाधाररूपाम्। एतदुक्तं भवति—शब्दराशिः कालस्य च स्वात्मत्वेन भावनास्थैर्यं जीवन्मुक्तिरिति। प्रणमामीति। कालहल्लोहलोल्लोलकलनाशमकारिणीम्—कालस्य

---

(१) यन्त्राणि इति मू॰ पु॰ पा॰।

यदक्षरैकमात्रेऽपि संसिद्धे स्पर्द्धते नरः ।
रवितार्क्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥९०॥
यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥९१॥
यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।
ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम् ॥९२॥
यदेकादशमाधारं बीजं कोणत्रयोद्भवम् ।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥९३॥

---

हल्लोहलो — वेगः । उल्लोलकलना — पूर्वोत्तरसम्बन्धः । एतदुक्तं भवति — पूर्वोक्तभावनामन्त्रसंसिद्धौ कालपारवश्यात् क्लेशो न भवतीति । यदक्षरेति । एकमात्र इत्यस्यार्थ आराध्यपादमुखादवगन्तव्यः । संसिद्धे — पूज्यपादैरुक्तप्रकारेण । रविणा — प्रकाशादिना स्पर्द्धते । तार्क्ष्येण चक्रविषहरणादिना । इन्दुना चामृतमयत्वादिना । कन्दर्पेण सौभाग्यादितः । शङ्करेण चानन्दमयत्वादितः । अनलेन च प्रतापादितः । विष्णुना च विश्वात्मत्वादितः । एतदुक्तं भवति — मातृकायामेकाक्षरेऽपि संसिद्धे तत्तथा सिद्ध्यतीति ॥ ८८ ॥ ८९ ॥ ९० ॥

यदक्षरेति । शशी — अमृतमयत्वात् । ज्योत्स्ना — प्रकाशरूपवाचकत्वम् । मण्डितं — तत्सम्बद्धम् । भुवनत्रयं — ज्ञातृज्ञानज्ञेयात्मरूपम् । सिद्धमातृकां — सर्वेषां शब्दादेवार्थप्रतिपत्तेः । एतदुक्तं भवति — शब्दार्थयोर्निरवशेषाद्व्याप्तिरात्मनः सिद्धेति । यदक्षरेति । महासूत्रप्रोतं — महत्त्वमनाद्यत्वात् । सूचनात् विशेषाणामर्थानां सूत्रम् । प्रोतं — नियतसम्बन्धः । एतदिति — प्रत्यक्षत्वम् । ब्रह्माण्डादिकटाहान्तं — ब्रह्माण्डमित्यपश्चिमं बृहत्त्वं, कटाहमितरवरं सौक्ष्म्यम् । एतदुक्तं भवति — प्राग्वच्छब्दार्थयोर्निरवशेषव्याप्तौ सत्यां प्रतिनियतावान्तरसम्बन्धत्वमुपदिश्य तन्मयता चात्मनः सिद्धेति ॥ ९१ ॥ ९२ ॥

यदेकेति । आधारः — अधिकरणम् । बीजं — कारणम् । कोणत्रयोद्भवं यत् — कोणत्रयाकारतामेकादशाक्षरस्योक्ता तदुद्भूतत्वं जगत्प्रत्यक्षसिद्धं दृश्यत इत्यर्थः प्रागुक्तप्रपञ्चस्य प्रत्यक्षमिति दर्शयति । एतदुक्तं भवति — मातृकायामेकाक्षरस्याऽपि जगत्कारणत्वमस्तीत्युपदिश्य तन्मयता स्वात्मनः सिद्धेति शेषः ॥ ९३ ॥

अकचादिटतोन्नद्धपयसाक्षरवर्गिणीम् ।
ज्येष्ठाङ्गबाहुहृत्पृष्ठकटिपादनिवासिनीम् ॥९४॥
तामीकाराक्षरोद्धारां सारात्सारां परात्पराम् ।
प्रणमामि महादेवीं परमानन्दरूपिणीम् ॥९५॥
अद्यापि यस्या जानन्ति न मनागपि देवताः ।
कैयं कस्मात् क्व केनेति (१) सरूपारूपभावनाम् ॥९६॥
वन्दे तामहमक्षय्यमातृकाक्षररूपिणीम् ।
देवीं कुलकलोल्लोलप्रोल्लसन्तीं परां शिवाम् ॥९७॥

---

अकचेति। वक्ष्यमाणवशिन्यादिशक्त्यष्टकरूपेण समस्तेन। ज्येष्ठाङ्गेति—व्यस्तरूपैश्च मातृकाक्षरैः सर्वतः शरीरित्वेनावभासमानाम्। एतदुक्तं भवति—मातृकायाः समसव्यासरूपेण शरीरिणां शरीरितामुपदिश्य तन्मयता स्वात्मनः सिद्धेति शेषः। उद्धारो—लिपिरूपः। सारात्सारां—स्वयं च। उभयसारशब्दविषयं दर्शयति परात्परामिति। परमानन्दरूपिणीम्। इकारस्य विन्दुविसर्गात्मनः। शिवशक्त्योः सामरस्यरूपत्वात्। एतदुक्तं भवति—मातृकायाः कारणभूतयोर्विन्दुविसर्जनीययोरैक्यरूपस्य इकारस्य विन्दुसंकल्पेति वक्ष्यमाणस्य स्वात्मत्वेन भावनायां परमानन्दानुभव इति ॥ ९४ ॥ ९५ ॥

अद्यापीति पूर्वोक्तं रहस्यं स्तौति। देवताः—इन्द्रियाणि। कैयं—स्वरूपतः। कस्माद्धेतोः। क्व—कुत्रस्थाने। केनोपायेनेति। सरूपभावनामरूपभावनां च। एतदुक्तं भवति—अदेशिककटाक्षविद्धैः षड्भिरिन्द्रियैः किंरूपा कस्माद्धेतोः कुत्रस्थाने केनोपायेनेति सरूपभावनामरूपभावनां चाद्यापि सर्वदा मनागीषदपि न जानन्तीति। अत्र प्रश्नचतुष्टयमाराध्यपादमुखादवगन्तव्यम्। अतिरहस्यत्वादिह नोद्घाटितम् ॥ ९६ ॥

वन्दे इति। अहम्। आद्यन्तप्रत्याहृत्या मातृकारूप आत्मा। अक्षयाम्। अकारक्षकारयोर्मध्यजाम्—मातृकाक्षररूपिणीम्। सप्तमसूत्रप्रकाशितेन वर्त्मनाकुल-

---

(१) स्वरूपेति मू० पु० पा०।

(१) वर्गानुक्रमयोगेन यस्या मात्राष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ॥९८॥
कामपूर्णं (२)जकाराद्यश्रीपीठान्तर्निवासिनीम् ।
चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ॥९९॥
इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत् ।
देव्यास्त्वखण्डरूपायाः स्तवनं तव तद्यतः ॥१००॥

---

कल्लोलोल्लप्रोल्लसन्तीम्—कुलं शरीरं पृथिव्यां लीयमानत्वात् । कला—एकदेशः । उल्लोलं उर्द्ध्वोर्द्ध्वं प्रोल्लसन्तीम्—वैश्वर्यापरां अचिन्त्यस्वभाववैभवाम् । चिन्तयतः । एतदुक्तं भवति । अव्यक्तरूपं व्यक्तरूपं च मातृकाया रूपमुद्दिश्य तन्मयता स्वात्मनः सिद्धेति ॥ ९७ ॥

वर्गेति । अनुक्रमयोगेन—सप्तमसूत्रोपदिष्टेन । मातृकाष्टकं तदपि तत्रोक्तम् । अष्टवर्गोत्थमहासिध्यष्टकेश्वरीम्—प्रतिवर्गोत्थाणिमादिसिद्ध्यष्टकेश्वरीम् । एतदुक्तं भवति । मातृकाया अष्टौ वर्गास्तदधिष्ठात्र्योऽष्टमातरस्तासां प्रत्येकोत्थाणिमाद्यष्ट—सिद्धयश्च संभूय चतुःषष्टिः । तासां व्यष्टिशक्तीनां कारणभूता समष्टिशक्तिः स्वात्मत्वेन सिद्धेति । अत्रापि रहस्यमस्ति तदवगन्तव्यमाराध्यचरणमुखात् ॥९८॥

कामिति । जकाराद्यं—जकारो यस्य पीठस्याद्यं तत् जकाराद्यम्—जालंधरपीठम् । श्रीपीठं औड्याणपीठं देव्यावासत्वात् । भूजलाग्निवायुरूपपीठचतुष्टयं वियद्रूपेण सर्वत्र निवासिनीम् । चतुराज्ञा कोशभूतां—आज्ञा—पूर्वाम्नायादिः । कोशभूतां—समस्तकारणत्वात् । त्रिपुरा—मातृका—मातृकाभिः ज्ञातृज्ञानज्ञेयात्मभिरात्मस्वरूपतत्त्वज्ञातैरूपप्लुतं पूरयतीति । एतदुक्तं भवति—एकादशभिरुक्तसूत्रैरुपदिष्टवैभवमातृकादेशविशेषेषु तत्त्वविशेषेषु च व्याप्त्या विश्वप्रपञ्चरूपा शक्तिः स्वात्मत्वेन सिद्धेति । इतः परमस्मद्व्याख्या ॥ ९९ ॥

इति इत्यादिना श्लोकेन स्तोत्रजपफलमुपदिशति । तत्राखण्डरूपायाः देशाकारैरनवच्छिन्नाया मातृकायास्तादात्म्यादिति शिवम् ॥ १०० ॥

---

(१) उर्वनु इति मू० पु० पा० ।
(२) जकाराख्य इति मू० पु० पा०

तोयतत्वमयी व्याप्तिरिति सम्यक् प्रदर्शिता ।
अस्या निःफालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति षोडशनित्यातन्त्रेषु श्रीकादिमते
द्वितीयं पटलम् ।

---

इति श्रीषोडशनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमायां व्याख्यायां नवनाथवैभवपूजाभिधानादिप्रकाशनपरं द्वितीयं पटलं परिपूर्णं परामृष्टम् ॥२॥

---

# अथ तृतीयं पटलम् ।

अथ षोडशनित्यानां क्रमाद्विद्यास्तु (१) षोडश ।
वाराह्या कुरुकुल्लाया आत्मनोऽष्टाक्षरस्य च ॥१॥
भूतानां च बलेश्चैव क्रमान्मन्त्रांश्शृणु प्रिये ! ।
प्रोच्यते साधुसङ्केतैर्लिपीनां प्रागुदीरितैः ॥२॥
हृत्प्राणेलाहंसदाहवह्निखैर्ललितेरिता ।
त्रिविधा हंसभेदेन शृणु ताश्च यथाक्रमम् ॥३॥

## अथ तृतीयं पटलम् ।

पूर्वस्मिन् द्वितीये पटले नवनाथवैभवपूजाविधानादिकमुपदिश्यानन्तरं षोडशनित्यानां षोडशमन्त्रांस्तदङ्गमन्त्रानव च, सम्भूय पञ्चविंशतिमन्त्रानुपदिशति, अथ षोडशेत्यादिना बलेर्मनुरित्यन्तेन श्लोकशतरूपेण तृतीयेन पटलेन । तत्र— अथ षोडशेत्यादिना प्रागुदीरितैरित्यन्तेन श्लोकद्वयेन पटलार्थोद्देशादिकमुपदिशति । तत्र सङ्केतैः—सामयिकैर्नामभिः । प्रागुदीरितैः पूर्वतन्त्रे (२) पञ्चत्रिंशत्पटले प्रोक्तैः ॥ १ ॥ २ ॥

हृदित्याद्यैः समीरितेत्यन्तैस्त्रिभिः श्लोकैराद्याया अङ्गिनित्याया ललिता—विद्यायाः स्वरूपं तत्प्रभेदादिकमुपदिशति । तत्र—हृत्—सकारः । प्राणः—ककारः । इला—लकारः । हंसः—हकारः । दाहः—रेफः । वह्निः—ईकारः । खं—विन्दुः । हंसेत्यादिना खमित्यन्तेन ह्लं खोच्यते क्लीं इति । ललिता—विद्येति शेषः । हंसभेदेन—हकारयोजनाभेदेन ॥३॥ हंसाद्यया—हकाराद्यया । ललिता-

(१) विद्या तु षो इति मू० पु० पा० ।　　(२) पञ्चविंश इति व० पु० पा० ।

हंसाद्यया5ऽद्या मध्या(१)स्यादादिमध्यस्थहंसया ।
तृतीया प्रकृतिः सैव तुर्या तैरन्त्यमायया (२) ॥४॥
आसु तुर्या भवेन्मुक्त्यै तिस्रोऽन्याः स्युश्च सम्पदे ।
इति त्रिपुरसुन्दर्या विद्या सम्यक् समीरिता (३) ॥५॥
शुचिः स्वेन युतस्त्वाद्यो ललिता स्याद्द्वितीयकः ।
शून्यमग्नियुतं पश्चाद्रयो व्याप्तेन संयुतः ॥६॥
प्राणो रसाग्निसहितः शून्ययुग्मं चरान्वितम् ।
नभो गोत्रा पुनश्चैषा दाहेन समयोजिता ॥७॥
अम्बु स्याच्चरसंयुक्तं (४) वनशक्तियुतं च हृत् ।

---

विद्ययेति शेषः । आदिमध्यस्थहंसयेत्यत्र मध्येति ककारस्योपरि । सैव—ललिताविद्यैव । तुर्या—चतुर्थी । तैरन्त्यमायया—तैः कूटत्रयगतैरक्षरैः । अन्त्यमायया—अन्तस्थहृल्लेखया । एतदुक्तं भवति—प्रोक्तकूटत्रयाक्षरैः प्रोक्तक्रमगतैः प्रथम—द्वितीयकूटचरमगतहृल्लेखाविरहितैस्तृतीयकूटचरमगतहृल्लेखासहितैः समस्ताख्या तुरीया विद्येति ॥ ४ ॥ आसु—चतसृषु विद्यासु ॥ ५ ॥

शुचिरित्यादिभिरेकादशाक्षरेत्यन्तैस्त्रिभिः श्लोकैर्द्वितीयायाः कामेश्वरीनित्याया एकादशाक्षरीं (५) विद्यामुपदिशति । तत्र—शुचिः ऐकारः । स्वेन युतः—स्वं—बिन्दुः । तेन युक्तः ऐं इति । आद्यो—वर्ण इति शेषः । ललिता—प्रागभिहिता विद्या । शून्यं—नकारः । अग्नियुतं—अग्निरिकारः तेन सहितं नि इति । रयः—तकारः । व्याप्तेन संयुतः—व्याप्तं—यकारस्तेन संयुक्तः त्य इति ॥६॥ प्राणः ककारः । रसाग्निसहितः—रसा—लकारः । अग्निरिकारः ताभ्यां सहितः क्लि इति । शून्ययुग्मं—नकारद्वयम् । चरान्वितं—चरः—एकारस्तेन सहितं न्ने इति । नभो—

---

(१) हंसाद्ययामध्या इति मू० पु० पा० ।
(२) अयं श्लोकः पुनरपि मू० पुस्तके लिखितः ।
(३) प्रचक्षते इति मू० पु० पा० ।
(४) नवशक्ति इति मू० पु० पा० । (५) चरां इति १ पु० पा० ।

एषा कामेश्वरी नित्या कामदैका दशाचरा (१) ॥८॥
कामेश्वर्यादिरादिः स्याद्रसश्चाथ स्थिरा रसः ।
धरायुक् सचरा पश्चात् स्थिरा पश्चाद्रसः स्मृतः ॥९॥
स्थिराशून्येऽग्निसंयुक्ते रसः स्यात्तदनन्तरम् ।
स्थिरा भूःसहिता गोत्रा सदाहोऽग्नी रसः स्थिरा ॥१०॥
नभश्च मरुता (२) युक्तं रसा चरसमन्विता ।

---

मकारः । गोत्रा—दकारः । पुनश्चैषा—पुनरपि दकारः । दाहेन समयोजिता—दाहो—रेफः तेनाऽपृथक् योजिता ॥७॥ अम्बु—वकारः । चरसंयुक्तं—चर—एकारः तेन सहितं वे इति । वनशक्तियुतं—वनं—औकारः, शक्ति—विसर्जनीयः ताभ्यां सहितम् । हृत्—सकारः सौः इति । एवमुक्तप्रकारेणैकादशाचरेत्यर्थः ॥ ८ ॥

कामेश्वर्येत्यादिभिः मोहिनीत्यन्तैस्त्रयोविंशतिभिः श्लोकैः तृतीयाया भगमालिनीनित्यायाः पञ्चत्रिंशत्क्षताचरीं (३) विद्यामुपदिशति । तत्र कामेश्वर्यादिः—विन्दुसहित ऐकारः ऐं इति । रसः—भकारः । स्थिरा—गकारः । रसो—भकारः । धरायुक्—धरा—उकारः तेन युक्तः भु इति । सचरा—एकारसहिता । स्थिरा—गकारः गे इति । रसः—भकारः ॥९॥ स्थिराशून्ये—गकारनकारौ । अग्निसंयुक्ते—इकारेण प्रत्येकं संयुक्तौ गिनि इति । रसः—भकारः । स्थिरा—गकारः । भूःसहिता—भू—ऊकारः तेन सहिता । भूःसहितेति संज्ञाशब्दस्वरूपोपादानं भूः इति (४) संज्ञोपेतेनाचरेणेत्यर्थः । एवमस्मिन् प्रकरणेऽन्यत्र सर्वत्रापि-निर्वाहः । गो इति । गोत्रा—दकारः । सदाहः—रेफसहितः । अग्निः—इकारः रि इति । रसो—भकारः । स्थिरा—गकारः ॥१०॥ नभः—मकारः । मरुता युक्तं—मरुत्—आकारः तेन युक्तं मा इति । रसा—लकारः । चरसमन्विता—

---

(१) चरी इति मू० पु० पा० ।
(२) संयुक्तं इति मू० पु० पा० ।
(३) चरां इति १ पु० पां० ।
(४) संज्ञाने [illegible] इत्यधिकं व० पुस्तके ।

ततो रसः स्थिरा पश्चान्मरुता सह योजिता ॥११॥
अम्बु हंसश्च सचरो रसोऽथ स्यात्स्थिरायुतः ।
स्थिरा धरान्विता हंसो व्याप्तेन च चरेण च ॥१२॥
रसः स्थिरा ततो व्याप्तं भूयुतं शून्यमग्नियुक् ।
रसः स्थिरा ततः साग्निः शून्यं जवियुतो मरुत् ॥१३॥
रयः शून्यं चाग्नियुतं हृद्दाहः साम्बुतः परम् ।
रसः स्थिराऽम्बु च वियत् खयुतं प्राण एव च ॥१४॥
दाहोऽग्नियुग्रसस्तस्मात् स्थिरा क्ष्मा दाहसंयुता ।

---

एकारेण सहिता ले इति । रसः—भकारः । स्थिरा गकारः । मरुता सह योजिता —आकारेण सह(१) पृथग्योजिता गा इति ॥११॥ अम्बु—वकारः । हंसो—हकारः। सचर—एकारेण सहितः हे इति । रसो—भकारः । स्थिरा—गकारः । धरान्विता —उकारेण सहिता गु इति । हंसो—हकारः । व्याप्तेन—यकारेण । चरेण—एकारेण ताभ्यां युक्तः ह्ये इति ॥१२॥ रसो—भकारः । स्थिरा—गकारः । व्याप्तं—यकारः । भूयुतं—ओकारसहितं यो इति । शून्यं—नकारः । अग्नियुक्—इकारेण सहितं नि इति । रसो—भकारः । स्थिरा गकारः । साग्निः—इकारेण सहितम् । शून्यं—नकारः । साग्निरिति संज्ञिविशेषणपरोऽयं निर्देशः शून्याख्योवर्णं इकारसहितः स्यादित्यर्थः । अस्मिन् प्रकरणे सर्वत्र संज्ञासंज्ञिपरत्वेन विशेषणलिङ्गानां निर्देशनियमो बोद्धव्यः । तत्र संज्ञिपरो लिङ्गनिर्देशनियमस्त्रिविधः वर्णशब्दापेक्षया—अक्षरशब्दापेक्षया—लिपिशब्दापेक्षया च । तेन नि इति । जवियुतः—पकारेण सहितः । मरुत्—आकारः पा इति ॥१३॥ अथ रयः तकारः । शून्यं—नकारः । अग्नियुतं—इकारेण सहितं एतत् शून्यस्यैव विशेषणं नि इति । हृत्—सकारः । दाहः—रेफः । साम्बु—वकारेण सहितं भवति र्व इति । रसः—भकारः । स्थिरा—गकारः । अम्बु—वकारः । वियत्—सकारः । खयुतं—विन्दुना सहितं सं इति । प्राणः—ककारः ॥१४ दाहः—रेफः । अग्नियुक् —इकारेण सहितः रि इति । रसः भकारः । स्थिरा—गकारः । क्ष्मा—ऊकारः ।

---

(१) आकारेणापृथग्योजिता इति १ पु० पा० ।

सचरश्च जवी पूर्वविद्यातातीयतः क्रमात् ॥१५॥
चतुष्टयमथार्णानां रसस्तदनु च स्थिरा।
हृदम्बुयुक् क्ष्मया दाहः सचरः स्याज्जवी च हृत् ॥१६॥
दाहोऽम्बुमरुता युक्तो व्योम साग्नी रसस्ततः।
स्थिरा (तु) ऽपि मरुता युक्ता शून्यं साग्नि नभश्चरी ॥१७॥
हंसो व्याप्तमरुद्युक्तः शून्यं व्याप्तमतोऽम्बु च।
दाहो गोत्रा चरयुता तथा दाहस्तथा रयः ॥१८॥
हृद्धरासहितं दाहरयौ चरसमन्वितौ।
रसः स्थिरा ततः प्राणो रसाग्निसहितो भवेत् ॥१९॥

---

दाहसंयुता—दाहः—रेफः तेन संयुता रेफसहिता रू इति। सचरः—एकारेण सहितः। जवी—पकारः पे इति। पूर्वविद्यातातीयतः क्रमात् चतुष्टयमथार्णानां—तृतीयादिवर्णानां चतुष्टयमित्यर्थः। एतदुक्तं भवति—कामेश्वरीनित्याविद्यायास्तृतीयचतुर्थपञ्चमषष्ठान्यक्षराणि चत्वारि (न पे इत्यस्मात्परं) नित्यक्लिन्ने एतद्रूपाणि ज्ञेयानि ॥१५॥ रसो—भकारः। स्थिरा—गकारः। हृत्—सकारः। अम्बु—वकारः। क्ष्मया—ऊकारेण सहितः। दाहो रेफः रू इति। जवी—पकारः। चरेण एकारेण सहितः पे इति। हृत्—सकारः॥१६॥ दाहोऽम्बुमरुता युक्तः—वकाराकाराभ्यां युक्तो दाहस्तेन स्वा इति। व्योम—णकारः। साग्निः—इकारेण सहितः णि इति। रसो—भकारः। स्थिरा—गकारः। अस्मिन् प्रकरणे सर्वोऽपि शब्दः समुच्चये। मरुता युक्ता—आकारेण युक्ता गा इति। शून्यं—नकारः। साग्नि—इकारेण सहितः नि इति। नभश्चरी—नभो—मकारः चर—एकारः एकारसहितो मकार इत्यर्थः ॥१७॥ हंसो—हकारः। व्याप्तमरुद्युक्तः—व्याप्त—यकारः। मरुत्—आकारः ताभ्यां युक्तः ह्या इति। शून्यं—नकारः। व्याप्तं—यकारः। अतः—परमिति शेषः। अम्बु—वकारः। दाहो—रेफः। गोत्रा—दकारः। चरयुता—एकारसहिता दे इति। तथा दाहः—रेफः एकारसहित इत्यर्थः रे इति। तथा रयः—एकारसहितस्तकार इत्यर्थः ते इति ॥१८॥ हृत्—सकारः। धरासहितं—उकारसहितं सु इति। दाहरयौ—रेफतकारौ। चरसमन्वितौ—एकारसहितौ। रेफतकारौ प्रत्येकमेकारेण सहितावित्यर्थः रेते इति। रसो—भकारः। स्थिरा—गकारः।

शून्ययुग्मं चरयुतं ततः पूर्वमतः परम् ।
शून्ययुग्मं च गोत्रा स्यात् दाहयुक्ताम्बुना चरः ॥२०॥
प्राणो रसाच्चरयुतो गोत्रा व्याप्तमतःपरम् ।
गोत्रा दाहमरुद्युक्ता त्वम्बु व्याप्तमतो भवेत् ॥२१॥
वातो नभश्च भूयुक्तं वाश्चरेण समन्वितम् ।
रसः स्थिराऽम्ब्वग्नियुतं वायुयुग्मं चरान्वितम् ॥२२॥
ग्रासोधरायुतः पश्चाद्रसः शक्त्या समन्वितः ।
ग्रासो भूःसहितो देवि ! रसो व्याप्तं ततश्च हृत् ॥२३॥
दाहेनाम्बु च हृत्पश्चात् रयोऽम्बु मरुदन्वितः ।
शून्यं च केवलं भद्रे ! रसश्च सचरा स्थिरा ॥२४॥

---

प्राणः—ककारः । रसाग्निसहितः—रसा—लकारः । अग्निरिकारः ताभ्यां सहितः क्लि इति ॥१९॥ शून्ययुग्मं—नकारद्वयं—चरयुतम्—एकारेण सहितं न्ने इति । ततः पूर्वमतःपरं—अस्याक्षरस्य पूर्वाक्षरमेवोत्तराक्षरमित्यर्थः । क्लि इति । शून्ययुग्मं—नकारद्वयं न्न इति । गोत्रा दकारः । दाहसहितः— द्र इति । अम्बुना—वकारेण सहितः । चर—एकारः ॥२०॥ प्राणः—ककारः । रसा —लकारः । चर—एकारस्ताभ्यां सहितः क्ले इति । गोत्रा—दकारः । व्याप्तं यकारः । गोत्रा—दकारः । दाहमरुद्युक्ता दाहः—रेफः । मरुत्—आकारः द्रा इति । अम्बु वकारः । व्याप्तं—यकारः ॥२१॥ वातः—अकारः । नभो—मकारः । भूयुक्तं—ऊकारयुक्तं मो इति । वाः—वकारः । चरेण समन्वितं—एकारेण सहितं घे इति । रसो—भकारः । स्थिरा—गकारः । अम्बु—वकारः । अग्नियुतं—इकारेण युक्तं वि इति । वायुयुग्मं—चकारद्वयम् । चरान्वितं—एकारसहितं चे इति ॥२२॥ ग्रासः—क्षकारः । धरायुतः—उकारयुतः क्षु इति । रसो—भकारः । शक्त्या समन्वितः—विसर्जनीयेन सहितः भः इति । ग्रासः—क्षकारः । भूः सहितः—ओकारेण सहितः भूः सहितः इत्यत्रापि संज्ञाशब्दस्वरूपोपादानं भू इति संज्ञोपेतेनेत्यर्थः क्षो इति । देवीति सम्बुद्धिः । रसो—भकारः । व्याप्तं—यकारः । हृत्—सकारः ॥२३॥ दाहेन—रेफेण सहितमिति शेषः । अम्बु—वकारः वं इति । हृत्—सकारः । रयः—तकारः । अम्बुमरुदन्वितः—अम्बु—वकारः मरु-दाकारः त्वा इति । शून्यं—नकारः ।

वियदम्बुयुतं दाहस्त्वग्नियुक् खयुतः शुचिः ।
भूमी रसाह्वास्वयुता पञ्चैकान्तरिताः स्थिताः ॥२५॥
तदन्तरितबीजानि खसंयुक्तानि पञ्च वै ।
तानि क्रमात् ज्या सचरो रसो भूश्च नभोयुता ॥२६॥
हंसश्चरयुतो द्विःस्यात् ततः प्राणो रसाग्नियुक् ।
शून्ययुग्मं चरयुतं हृद्दाहोऽम्बु मरुद्युतः ॥२७॥
व्योमाग्निसहितं पश्चाद्रसश्च मरुता स्थिरा ।
शून्यं साग्नि नभः कुर्याच्चरेण सहितं प्रिये ! ॥२८॥

---

केवलं च स्वररहितं न् इति । भद्रे इति देवीसम्बोधनं मन्त्रानन्तरितम् । रसः—भकारः । स चरा—एकारेण सहिता, स्थिरा—गकारः गे इति ॥२४॥ वियत्—सकारः । अम्बयुतं—वकारयुतम्—स्व इति । दाहो—रेफः अग्नियुक्—इकारेण सहितः रि इति । खं—विन्दुस्तेन युतः । शुचिः—एकारः एँ इति । भूमिः—बकारः । रसाह्वास्वयुता—रसा—लकारः । ह्वा—उकारः । खं—विन्दुः तैः संयुक्ता ब्लूँ इति । पञ्चैकान्तरिता स्थिताः—ब्लूँ इत्येतत्कूटाक्षरं एतदाद्यमेकैकाक्षरान्तरितं पञ्चकृत्वः प्रयोज्यमित्यर्थः । तदन्तरितबीजानि खसंयुक्तानि पञ्च वै—प्रोक्तस्य ब्लूँ इति बीजस्यान्तरालेषु उपरिस्थितानि सविन्दूनि बीजानि पञ्च तानि क्रमात् कथयामीति शेषः । ज्या—जकारः जं इति । सचरः—एकारसहितो, रसः—भकारः भेँ इति । भूः ओंकारः । नभोयुता—नभो—मकारः तेन सहिता मोँ इति ॥२६॥ हंसो—हकारः । चरयुतः एकारसहितः हेँ इति । ब्लूमिति प्रोक्तस्य पञ्चमस्य बीजस्यान्ते च स्यात् हेमिति बीजं वारद्वयं स्यादित्यर्थः । यथा—ब्लूँ जँ ब्लूँ मोँ ब्लूँ हेँ ब्लूँ हेँ एवं प्रकारेण । प्राणः—ककारः । रसाग्नियुक् रसा लकारः । अग्नि—रिकारः ताभ्यां सहितः क्लि इति । शून्ययुग्मं—नकारद्वयम् । चरयुतं—एकारेण सहितं न्ने इति । हृत्—सकारः । दाहो—रेफः । अम्बु—मरुद्युतः—अम्बु—वकारः । मरुत्—आकारः ताभ्यां सहितः वा इति ॥२७॥ व्योम—णकारः । अग्निसहितं—णि इति । रसो—भकारः । मरुता—आकारेण सहितेति शेषः । स्थिरा—गकारः गा इति । शून्यं—नकारः । साग्नि—इकारेण सहितं नि इति । नभो—मकारः । चरेण सहितं—एकारेण सहितं मे इति

अम्बु पश्चाद्वियत्तस्मान्नभस्तु मरुदन्वितम् ।
शून्यं व्याप्तं च हृद्युक्तं रयदाहखवह्निभिः ॥२९॥
हंसः सदाहोऽम्बुरसाचरखैः संयुतो भवेत् ।
हंसः स्याद्दाहवह्निखैर्युक्तमन्त्यमुदीरितम् ॥३०॥
पञ्चविंशच्छताणैः स्यान्नित्याऽसौ भगमालिनी ।
कथिता परमेशानि ! वनिताजनमोहिनी ॥३१॥
हंसस्तु दाहवह्निखैर्युक्तः प्रथममुच्यते ।
कामेश्वर्यास्तृतीयादिवर्णानामष्टकं भवेत् ॥३२॥
हृदम्बु मरुता युक्तं हंसश्च मरुता युतः ।
एकादशाक्षरी नित्यक्लिन्ना नित्या समीरिता ॥३३॥

---

प्रिये इति देवी सम्बोधनम् ॥२८॥ अम्बु—वकारः । वियत्-सकारः । नभः—मकारः । तुशब्दः समुच्चये । मरुदन्वितं—आकारेण सहितं—मा इति । शून्यं—नकारः । व्याप्तं—यकारः । हृत्-सकारः । युक्तं रयदाहखवह्निभिः—रयस्तकारः । दाहो—रेफः । खं—विन्दुः । वह्निः—इकारः । तैर्युक्तं स्त्रीं इति ॥२९॥ हंसो—हकारः । सदाहः—रेफसहितः । अम्बुरसाचरखैः संयुतः—अम्बु—वकारः रसा—लकारः चर—एकारः खं—विन्दुः एतैः संयुक्तः । एतदुक्तं भवति—हकाररेफवकारलकारएकारविन्दुभिरेकं कूटमिति ह्व्लूं इति । हंसो—हकारः । दाहवह्निखैः संयुतम्—दाहो—रेफः । वह्निः—इकारः । खं—विन्दुः । तैः संयुतम् । अन्त्यं—बीजमिति शेषः । ह्रींकारमित्यर्थः । भगमालिनी नित्या विद्येति शेषः । परमेशानीति देवीसम्बुद्धिः ॥ ३० ॥ ३१ ॥

हंसेत्यादिभिः सुन्दरीत्यन्तैस्त्रिभिः श्लोकैः चतुर्थ्या नित्यक्लिन्नाया नित्याया एकादशाक्षरीं विद्यां तज्जपादिफलं चोपदिशति । तत्र हंसो—हकारः । दाहवह्निखैर्युक्तः—दाहो—रेफः वह्निः—इकारः खं—विन्दुः तैः संयुक्तः—ह्रीं इत्यर्थः । ह्रीं इति प्रथमं बीजमिति शेषः । कामेश्वर्यास्तृतीयादिवर्णानामष्टकं भवेत्—कामेश्वर्यादि नित्या विद्या तृतीयमक्षरमारभ्य दशमाक्षरपर्यन्तं अत्र द्वितीयाक्षरादीन्यष्टाक्षराणि तेन नवाक्षराणि सम्पन्नानि । हृत्—सकारः । अम्बु मरुता युक्तः—

वनितानवनीतानां द्रावकोऽग्निर्जपादिना ।
जायते साधको नित्यं कन्दर्पाधिकसुन्दरः ॥३४॥
भूः खेन युक्ता प्रथमं प्राणो दाहेन तद्युतम् ।
रसो दाहेन तद्युक्तं प्राणो दाह-वन-ख-युक् ॥३५॥
कं च दाहेन तद्युक्तं प्रभा दाहेन तद्युता ।
ज्या च दाहेन तद्युक्ता नित्यक्लिन्नान्ततो द्वयम् ॥३६॥
एषा नवाक्षरी नित्या भेरुण्डा सर्वसिद्धिदा ।
यस्याः स्मरणतो नश्येद्गरलं त्रिविधं क्षणात् ॥३७॥

---

अम्बु—वकारः । मरुत्—आकारः । ताभ्यां युक्तं स्वा इति । हंसो—हकारः । मरुता—आकारेण युक्तः क्रों इत्यर्थः । वनितानवनीतानां द्रावकोऽग्निः । एतदुक्तं भवति—एतस्य विद्यासिद्धस्य दर्शनादेव वनिताः अर्थ प्राणाद्युपकारिका (१) वश्या भवन्ति ॥ ३२ ॥ ३३ ॥ ३४ ॥

भूः खेनेत्यादिभिः क्षणादित्यन्तैस्त्रिभिः श्लोकैः पञ्चम्या भेरुण्डानित्याया नवाक्षरीं विद्यामुपदिशति । तत्र भूः-ओकारः । खेन युक्ता-विन्दुना सहिता, ओमिति । प्रथमं—बीजमिति शेषः । प्राणः—ककारः । दाहेन—रेफेण । तद्युतं—ओंकारयुक्तं ककाराक्षरमित्यर्थः क्रौं इति । रसो-भकारः । दाहेन-रेफेण । तद्युक्तं—ओंकारयुक्तं भकाराक्षरमित्यर्थः भ्रौं इति । प्राणः—ककारः । दाहवनखयुक्—दाहो—रेफः । वनं-ओकारः । खं—विन्दुः एतैः संयुतः क्रौं इति ॥ ३५ ॥ कंच—मकारः । दाहेन—रेफेण । तद्युक्तं ओंकारयुक्तं मकाराक्षरमित्यर्थः म्रौं इति । प्रभा—छकारः । दाहेन—रेफेण, तद्युक्तं—ओंकारयुक्तं छकाराक्षरमित्यर्थः छ्रौं इति । ज्या-जकारः । दाहेन-रेफेण । तद्युक्तं ओंकारयुक्तं जकाराक्षरमित्यर्थः ज्रौं इति । नित्य-क्लिन्नाऽन्ततोद्वयं—नित्यक्लिन्ना (नित्या) विद्याया अन्त्यः अक्षरद्वयं स्वाहा इत्यर्थः ॥ ६३ ॥ नित्या-भेरुण्डा—नित्या विद्येति शेषः । गरलं—विषं त्रिविधं—स्थावरजङ्गमकृत्रिमभेदेन । तत्र स्थावरं—कारस्करकरवीरादि, जङ्गमं—फणिगोनासादि । कृत्रिमं—लिकुचरसकर्पूरादि ॥३७॥

---

(१) अर्थप्रणामाद्युपकारिका इति टी० पु० पा० ।

भेरुण्डाद्यमिहाद्यं स्यान्नित्यक्लिन्नाद्यनन्तरम् ।
ततोऽम्बु शून्यं हंसाग्नियुक्तमम्बु मरुद्गतम् ॥३८॥
हृदग्निना युतं शून्यं व्याप्तेन शुचिना च युक् ।
शून्यं नभःशक्तियुतं नवार्णेयमुदीरिता ॥३९॥
नित्या सर्वार्थदा वह्निवासिनी विश्वघस्मरा ।
यस्याः स्मरणतो वश्यं जायते भुवनत्रयम् ॥४०॥
द्वितीयं वह्निवासिन्या नित्यक्लिन्ना चतुर्थकम् ।
पञ्चमं भगमालाद्यं भेरुण्डाया द्वितीयकम् ॥४१॥

---

भेरुण्डाद्येत्यादिभिस्त्रयमित्यन्तैस्त्रिभिः श्लोकैः षष्ठ्या वह्निवासिनीनित्याया नवाक्षरीं विद्यामुपदिशति। तत्र 'भेरुण्डाद्यमिहाद्यं स्यात्'—भेरुण्डानित्याविद्याया आद्यमक्षरं वह्नि-वासिनीनित्याविद्याया आद्यमक्षरं भवतीत्यर्थः तेन ओमिति सिद्धम्। 'नित्यक्लिन्नाद्यनन्तरं'—नित्यक्लिन्ना नित्याविद्याया आद्यमक्षरं क्लींकारोऽस्या द्वितीयमक्षरमित्यर्थः। ततः—अनन्तरम्। अम्बु—वकारः। शून्यं—नकारः। हंसाग्नियुक्तं—हकारेकाराभ्यां सहितं वह्नि इत्यर्थः। अम्बु—वकारः। मरुद्युक्तं—आकारयुक्तं वा इति ॥३८॥ हृत्—सकारः। अग्निना युतं—इकारेण सहितं सि इति। शून्यं—नकारः। व्याप्तेन—यकारेण। शुचिना च एकारेण च युक्—युतं आभ्यां द्वाभ्यां युक्तमित्यर्थः न्ये इति। शून्यं—नकारः। नभो—मकारः। शक्तियुतं—विसर्जनीयसहितं मः इति ॥ ३९ ॥ विश्वघस्मरा-प्रलये विश्वग्रासकरी ॥ ४० ॥

द्वितीयमित्यादिभिः तारिणीमित्यन्तैस्त्रिभिः श्लोकैः सप्तम्या महावज्रेश्वरीनित्याया द्वादशाक्षरीं विद्यामुपदिशति। तत्र द्वितीयं वह्निवासिन्याः—वह्निवासिनीनित्याविद्यायाः द्वितीयमक्षरं अस्या आद्याक्षरं क्लीं इति। नित्यक्लिन्ना चतुर्थकं पञ्चमञ्च (१) नित्यक्लिन्नेत्यर्थः। भगमालाद्यं—ऐँकारः। भेरुण्डाया द्वितीयकं—क्रोंकारः ॥४१॥ नित्यक्लिन्नाद्वितीयं च तृतीयं च—नित्य इत्यक्षरद्वयम्। षष्ठ सप्तमौ तस्या एव (मदे) इत्यर्थः। अष्टमं नवमं पश्चात्—तस्या एवाष्टमाक्षरं नवमाक्षरं च स्याताम् (द्रवे) इत्यर्थः। एतदाद्यं—अस्या महावज्रेश्वर्या आद्यं क्लींकार इत्यर्थः। दुःखसङ्घाततारिणी—अविवेकतारिणीत्यर्थः ॥ ४२ ॥

---

(१) चतुर्थकं पञ्चमं क्लि इति क्लिन्ने इत्यर्थः इति टी०पु०पा०। चतुर्थकं पञ्चपञ्चक्लिन्नेत्यर्थ इति वङ्ग पु०पा०।

नित्यक्लिन्नाद्वितीयं च तृतीयं षष्ठसप्तमौ ।
अष्टमं नवमं पश्चादेतदाद्यमितीरितम् ॥४२॥
महावज्रेश्वरी नित्या द्वादशार्णा समीरिता ।
कान्तारसागरक्रूरदुःखसङ्घाततारिणी ॥४३॥
वज्रेश्वर्यन्त्यमाद्यं (१) स्याद्वियदग्नियुतं ततः ।
अम्बु स्यान्मरुता युक्तं गोत्रा क्ष्मासंयुता ततः ॥४४॥
रयो व्याप्तेन शुचिना युतं स्यात् तदनन्तरम् ।
अन्त्यार्णौ वह्निवासिन्या दूती नित्या समीरिता ॥४५॥
सप्ताक्षरी समस्तापत्तारिणी विश्वरञ्जिनी ।
श्रीकारी शिवतावाप्तिकारिणी सर्वसिद्धिदा ॥४६॥
आद्यन्तु वह्निवासिन्या दूत्यादिस्तदनन्तरम् ।
हंसो धरास्वसंयुक्तः तेजस्वरसमन्वितम् ॥४७॥

---

वज्रेश्वरीत्यादिभिः सिद्धिदेत्यन्तैः त्रिभिः श्लोकैः अष्टम्या दूतीनित्यायाः सप्ताक्षरीं विद्यामुपदिशति । तत्र वज्रेश्वर्यन्त्यमाद्यं स्यात्—वज्रेश्वरीनित्यायाः अन्त्यमक्षरं अस्यां दूतीनित्यायामाद्यमक्षरं भवति क्रीं इत्यर्थः । वियदग्नि-युतं—वियत्—शकारः । अग्नि-युतं—इकारसहितम् । ततः—द्वितीयमित्यर्थः शि इति । अम्बु स्यान्मरुता युक्तं-अम्बु—वकारः । मरुता युक्तं—आकारेण सहितं वा इति तृतीयमक्षरम् । गोत्रा क्ष्मासंयुता ततः—गोत्रा-दकारः । क्ष्मया युता—ऊकारेण सहिता दू इति चतुर्थमक्षरम् ॥ ४४ ॥ रयो व्याप्तेन शुचिना युतं स्यात् तदनन्तरं—रयस्तकारः । व्याप्तेन—यकारेण, शुचिना—ऐकारेण युतं त्यै इति । अन्त्यार्णौ वह्निवासिन्याः—नम इत्यर्थः ॥ ४५ ॥ समस्तापत्तारिणी—अविवेकापन्नाशकरी ॥ ४६ ॥

आद्यमित्यादिभिः कारिणी इत्यन्तैश्चतुर्भिः श्लोकैर्नवम्यास्त्वरितानित्याया द्वादशाक्षरीं विद्यामुपदिशति । तत्र—आद्यन्तु वह्निवासिन्याः—ॐ इत्यर्थः । दूत्यादि तदनन्तरम्—क्रींकारो द्वितीयं बीजम् । हंसोधरास्वसंयुक्तः—हंसो—हकारः । धरा—उकारः—स्वं विन्दु स्ताभ्यां युक्तः हुंकारः तृतीयं बीजम् । तेजस्वर-

---

(१) वज्रेश्वर्यन्तमाद्यं इति पुस्तकद्वयपाठः ।

वायुः प्रभा चरयुता ग्रासः शक्ति-समन्वितः ।
हृदा रयेण दाहेन वह्निः स्यादष्टमं प्रिये ! ॥४८॥
हंसः क्ष्मास्वयुतो ग्रासश्चरयुक्तो द्वितीयकम् ।
द्युतिर्नादयुता नित्या त्वरिता द्वादशाक्षरी ॥४९॥
लक्ष्मीकान्तियशोविद्याधनारोग्यायुराप्तिकृत् ।
विषदुःखप्रशमनी सर्वाभीष्टाप्तिकारिणी ॥५०॥
शुचिः स्वेन युतस्त्वाद्यो रसा वह्नि-समन्वितः ।
प्राणो द्वितीयः स्वयुतो वनहृच्छक्तिभिः परः ॥५१॥
इतीरिता त्र्यक्षरी स्यान्नित्याऽसौ कुलसुन्दरी ।
यस्याः स्मरणमात्रेण सर्वज्ञत्वं प्रजायते ॥५२॥

---

समन्वितम्—तेजः—खकारः । चरेण—एकारेण समन्वितः खे इति चतुर्थम् ॥४७॥ वायुः—चकारः । (पदाम्) (१) प्रभा—छकारः । चरयुता—एकारयुक्ता छे इति षष्ठम् । ग्रासः शक्तिसमन्वितः—ग्रासः—क्षकारः । शक्त्या—विसर्जनीयेन समन्वितः क्षः इति सप्तमम् । हृदा रयेण दाहेन वह्निः सकार-तकार रेफ-ईकारैः स्त्री इत्यष्टमं बीजम् । प्रिये ! इति देवीसम्बुद्धिः ॥४८॥ हंसः क्ष्मास्वयुतः ह्लूं (२) इति नवमम् । ग्रासश्चरयुतः—क्षे इति दशमम् । द्वितीयकं—अस्या एव द्वितीयं बीजं क्लीं इत्येकादशम् । द्युतिर्नादयुता—द्युतिः—फकारः । नादः—टकारः तेन युक्ता फट् इति द्वादशं बीजम् ॥ ४९ ॥ विषदुःखप्रशमनी—विषं— सर्पादिजं, दुःखं—दारिद्र्यादिजं द्वयो नाशकरी ॥ ५० ॥

शुचिरित्यादिना जायत इत्यन्तेन श्लोकद्वयेन दशम्याः कुलसुन्दरीनित्याया-स्त्र्यक्षरां विद्यामुपदिशति—तत्र—शुचिः स्वेन युतः—विन्दुना सहित ऐकारः ऐं इति प्रथमं बीजम् । रसावह्निसमन्वितः—रसा—लकारः, वह्निरीकारः ताभ्यां समन्वितः । प्राणः—ककारः, स्वयुतः—विन्दुयुतः—क्लीं इति द्वितीयम् । वन-हृच्छक्तिभिः परः—सौः इति तृतीयं बीजम् ॥ ५१ ॥ यस्याः स्मरणमात्रेण—जपाद्याधनादिविगुखेनापीत्यर्थः ॥ ५२ ॥

---

(१) ( ) एतत्पदं केवलं टीकापुस्तक एव वर्तते । (२) क्लीमिति टी० पु० पा० ।

हंसश्च हृत्प्राणरसादाहकुभिः समन्वितः।
विद्यया कुलसुन्दर्या योजितः सम्प्रदायतः ॥५३॥
नित्या नित्या त्यचरा स्यात् षड्भिः कूटाक्षरैर्युता।
प्रतिलोमादिभी रूपै र्द्वासप्ततिभिराहता ॥५४॥
यस्या भजनतः सिद्धो नरः स्यात् खेचरः सुखी।
निग्रहानुग्रहौ चास्य जायते स्वेच्छयाऽनिशम् ॥५५॥
त्वरितोपान्त्यमाद्यं स्यात् द्युतिर्दाहचरस्वयुक्।
हृच्च दाहक्षमास्वयुतं वज्रेशी पञ्चमं ततः ॥५६॥

---

हंस इत्यादिभिः अनिशमित्यन्तैस्त्रिभिः श्लोकैरेकादश्या नित्यायास्त्र्यक्षरां विद्यां तद्भेदसङ्ख्यां चोपदिशति। तत्र हंसश्च हृत्प्राणरसादाहकुभिः समन्विता—हंसो—हकारः। हृत्—सकारः। प्राणः—ककारः। रसा—लकारः। दाहः—रेफः। कुः—उकारः। पञ्चभिः हंसाख्यो हकारः सहितः स्यात्। एतदुक्तं भवति एतैर्हकारादिभिः (१) उकारान्तैः षड्भिरक्षरैः प्रत्येकमनुलोमक्रमेणाद्यन्तक्रमयोजितैरेवं षड्भेदभिन्नैस्तदनु उकारादिभि र्हकारान्तैः प्रत्येकं प्रतिलोमक्रमेण चाद्यन्तक्रमयोजितैरेवं षड्भेदभिन्नैस्तदनुकुलसुन्दरीनित्याविद्यायाः प्रकृतिभूतया सङ्केतविद्यया षट्प्रकारभिन्नया सम्प्रदायतो योजितैः नित्याविद्याया द्वासप्ततिर्भेदाः सम्भवन्ति, तेष्वाद्या प्रधाना सेयमिति॥ ५३॥ नित्यानित्येत्यादिना श्लोकेन नित्यानित्याविद्याया उपरिष्टाद्वक्ष्यमाणेषु विंशत्यधिक(२)शतभेदेषु द्वासप्ततिभिरेत्युक्तिः तेषु क्रमागतानां विभवभेदानां प्रयोगप्राधान्यदर्शनायेत्यर्थः॥ ५४॥ यस्या भजनत इत्यादिना श्लोकेन विद्यासिद्धस्य सामर्थ्यं कथयति। तत्र स्वेच्छया—उपरिष्टान्नित्यानित्यापटलोक्तनिग्रहानुग्रहस्य योगबलादित्यर्थः॥ ५५॥

त्वरितेत्यादिभिः कामदोदितेत्यन्तैः पञ्चभिः श्लोकैर्द्वादश्या नीलपताकानित्यायाः सप्तदशाक्षरां विद्यामुपदिशति, तत्र त्वरितोपान्त्यं उपान्त्यं अन्त्याक्षरात्पूर्वम् श्ह१ स्ह २ ल्क् ३ ल्ह ४ ल्स्ह्र ५ ह्ल्स्क ६एवं अनुलोमक्रमेण

---

(१) अत्र "ऐई ओ १ईऐ ओ २ई ओऐ ३ ऐओई ४ओ ऐई ५ओ ईऐ ६ एते सू" इत्यधिकः पाठः टी० पु०।

(२) अधिकसप्तशतेषु टी० पु० पा०।

मरुत् स्वयुक्तो मध्याद्ये दशम्याः क्रमशः स्मृते (१) ।
भूमी रसाच्छास्वयुता वज्रेशी षष्ठतः क्रमात् ॥५७॥
षडक्षराणि त्वरिता तृतीयं तदनन्तरम् ।
द्युतिर्दीर्घचरस्वेन अस्या आद्यमनन्तरम् ॥५८॥
उक्ता नीलपताकाख्या नित्या सप्तदशाक्षरी ।
समरे विजयं खड्गपादुकाञ्जनसिद्धिदा ॥५९॥
वेतालपक्षिणीचेटपिशाचादिप्रसाधनी ।
निधानबिलसिद्धान्नसाधनी कामदोदिता ॥६०॥

---

षड्भेदाः । ई १द्र २लु ३क्लु ४स्क्लु ५स्क्लु ६(२) एवं प्रतिलोमक्रमेण षड्भेदाः । एवं द्वादशभेदेषु (३) षड्विधसङ्केतविद्यायोजनात् द्वासप्ततिभेदाः सम्भवन्ति । ऐईॐ१ । ईऐॐ २ । ईॐऐ ३ । ऐॐई ४ । ॐईऐ५ । ओईऐ ६ । एतेमूल-सङ्केतविद्या षड्भेदाः । (४) साक्षाद्ब्रह्म हृल्लेखा ह्रीं इति प्रथमं बीजमितिशेषः । द्युतिर्दीर्घचरस्वयुक्—फकाररेफएकारविन्दुभिर्युक्तः फ्रें इति द्वितीयम् । ह्रस्व दाहच्छास्वयुतं– सकाररेफऊकारविन्दुभिर्युक्तं तृतीयं स्रूं इति । वज्रेशी पञ्चमं ततः— ओंकारश्चतुर्थमित्यर्थः ॥ ५६ ॥ ततः मरुत्स्वयुक्तः—विन्दुसहित आकारः । आँ इति पञ्चमम् । मध्याद्ये दशम्याः क्रमशः स्मृते – दशम्याः कुलसुन्दरीनित्यायाः मध्याद्यं बीजद्वयं क्लीँ ऐं इति अस्याः षष्ठं सप्तमं चाक्षरद्वयं स्यादित्यर्थः । भूमीरसाच्छास्वयुता—वकारः लकारऊकारविन्दुभिर्युक्तः व्लूँ इति अष्टमं बीजम् वज्रेशी षष्ठतः क्रमात् ॥ ५७ ॥

षडक्षराणि (ऽ)तानि नित्यमदद्रवे । इति । एभिः षड्भिर्मन्त्रस्य चतुर्दशाक्षराणि त्वरिता तृतीयं तदनन्तरं— हुँ इति पञ्चदशं बीजम् । द्युतिर्दीर्घचरस्वेन-फकार रेफएकारविन्दुभिर्युक्तमस्याःद्वितीयं कूटं फ्रें इति षोड़शमक्षरम् । अस्या आद्य-मनन्तरं– ह्रींकारः सप्तदशमित्यर्थः ॥ ५८ ॥

---

(१) दशम्या परतः शिवे इति सो० पु० पा० ।

(२) अन्त्याक्षरादित्यारभ्य स्क्लु इत्यन्तोग्रन्थः सो० पुस्तके नास्ति । (३) षु विद्याभेदाः षड् इति सो० पु० पा० ।

(४) ऐईऔं—भेदाः इत्यन्त पाठः टीकापुस्तके नास्ति ।

रसो नभस्तथा दाहो व्याप्तं क्षमा वनपूर्विका ।
स्वेन युक्ता भवेन्नित्याविजयैकाक्षरी मता ॥६१॥
वादेषु समरे कृच्छ्रे व्यवहारे सदा जयम् ।
विधत्ते स्मरणादेव विजया विश्ववैभवा ॥६२॥
हृदम्बुवनयुक्तं स्वं नित्या स्यात् सर्वमङ्गला ।
एकाक्षर्याऽनया सिद्धो जायते खेचरः क्षणात् ॥६३॥
भूःशून्ये नभसा भूश्च रसश्चाथ स्थिराम्बु च ।
रयोऽग्निना युतो ज्याऽम्बु मरुद्युक्ता रसा मरुत् ॥६४॥
नभश्च मरुता युक्तं रसाशून्येऽग्निसंयुते ।

---

खड्गपादुकेत्यादीनि उपरिष्टान्नीलपताकानित्याविधानपटलेषु व्यक्तं वक्ष्यमाणान्यत्र प्रस्तौति ॥ ५९ ॥ ६० ॥

रस इत्यादिना वैभवेत्यन्तेन श्लोकद्वयेन त्रयोदश्या विजयानित्याया एकाक्षरीं विद्यां तदनुभावं चोपदिशति—तत्र रसो—भकारः। नभः-मकारः। दाहो —रेफः। व्याप्तं—यकारः। क्षमा—उकारः। वनपूर्विका-औकारयुक्ता। स्वेन युक्ता—विन्दुना सहिता। एतदुक्तम्भवति—भकारमकाररेफयकारौकारविन्दुभिः कूटरूपा एकाक्षरी विद्येति। भ्म्र्यौं इति कूटम् ॥ ६१ ॥ समरे कृच्छ्रे युद्धे दुर्जये ॥ ६२ ॥

हृदम्बु इत्यादिना श्लोकेन चतुर्दश्याः सर्वमङ्गलानित्याया एकाक्षरीं विद्यां तदनुभावं चोपदिशति। तत्र हृदम्बुवनयुक्तं स्वं—सकारवकारऔकारविन्दुभिर्युक्तं कूटं स्वौं इत्येकाक्षरी ॥ ६३ ॥

भूःशून्येइत्यादिभिर्भवेदित्यन्तैरष्टभिः श्लोकैः पञ्चदश्याः ज्वालामालिनीनित्याया स्त्रिषष्ठ्यक्षरां विद्यामुपदिशति-तत्र भूः ओकारः (१)। शून्ये—नकारद्वयं न्नेति। नभसा भूः—मकारसहित ओकारः मो इति। रसो—भकारः। स्थिरा—गकारः। अम्बु—वकारः। रयः—तकारः। अग्निना युतः—इकारसहितः ति इति। ज्या—जकारः। अम्बुमरुद्युक्ता—वकाराकारयुक्ता ज्वा इति। रसामरुत्—लाइति ॥ ६४ ॥

नभो—मकारः। मरुता—आकारेण युक्तः माइति। रसाशून्ये—लकारो नका-

---

(१) अकार इति टी० पु० पा०।

गोत्रा चरेण सहिता अम्बु पूर्वाक्षरं तथा ॥६५॥
अम्ब्वग्नी हृत् सदाहाम्बु रसक्ष्मारयहृत्स्वयुक् ।
हंसश्च मरुता दाहः प्राणश्च मरुता युतः ॥६६॥
दाहः साग्निः प्राणचरौ ज्या मरुत्सहिता रयः ।
चरेणाम्बु च गोत्रा हृत्साग्नि ज्याम्बुरसा स्वयुक् ॥६७॥
रयः साग्नि ज्याम्बु रसा पुनरेतौ जवी ततः ।
दाहेनानेन ते द्विः स्यात् हंसो दाहमरुत्स्वयुक् ॥६८॥
हंसश्च दाहवह्निस्वैर्दाहक्ष्मास्वयुतश्च सः ।
सप्त दाहास्ततोऽस्याः स्युरष्टमाद्यास्तु पञ्च वै ॥६९॥

---

रश्च। अग्निसंयुते—इकारसहितौ लिनि इति। गोत्रा—दकारः। चरेण सहिता—एकारेण सहिता दे इति। अम्बु—वकारः। पूर्वाक्षरं तथा—वकार-पूर्वाक्षरं देइति ॥ ६५ ॥

अम्ब्वग्नी—अम्बु—वकारः अग्निरिकारः विइति। हृत्—सकारः। दाहाम्बु—रेफवकारौ र्वं इति। रस—क्ष्मा—रसः—भकारः क्ष्मा—ऊकारः भू इति। रयः—तकारः। हृत्—सकारः। स्वयुक् विन्दुयुक्तम्। स्वयुगितिसकारस्यैव विशेषणं संइति। हंसश्च मरुता युत इति सम्बन्धः—हा इति। दाहोरेफः रइति। प्राणश्च मरुता युक्तः का इति॥६६॥ दाहः साग्निरिति। रेफः ईकारसहितः रिइति। प्राणचरौ—केइति। ज्या मरुत्सहिता—जाइति। रयः—तकारः चरेणाम्बु च वे इति। गोत्रा—दकारः। हृत्—सकारः। साग्निः—सि इति। ज्यांबु—ज्वइति। रसा स्वयुक् लं इति॥६७॥ रयः—अग्निना सहितः ति इति। ज्यांबु—ज्वइति। रसा—लकारः। पुनरेते एतत्पूर्वोक्ताक्षरद्वयं पुनरपि स्यात् ज्वलइति। जवीदाहेन युतः पकारोरेफेण युतः प्र इति। अनेन ते द्विः स्यात्—अनेन प्रत्यक्षरेण ते इति पूर्ववीप्सितमक्षरद्वयं द्विः ज्वलज्वल इति प्रज्वल वीण्यक्षराणि द्विरुच्चरेदित्यर्थः। स्यादित्यस्योपरिष्टात् इत्यन्वयः। हंसोदाहमरुत्स्वयुक्स्यादिति क्रों इत्यर्थः॥६८॥ हंसश्च दाहवन्हिस्वैरिति—क्रीं इत्यर्थः। दाहक्ष्मास्वयुतश्चस इति—हंसः हकारएव क्रूँ इति। सप्तदाहाः रइति सप्तकृत्व उच्चरेदित्यर्थः। ततः—अनन्तरम्। अस्याः—विद्याया इतिशेषः। स्युरिति काकाक्षिगोलकन्यायवत्पूर्वापरयोरन्वेति। अष्टमाद्यास्तु पञ्चैव—अस्या विद्याया

उपान्त्याधःस्थितं नीलपताकाया अनन्तरम् ।
त्वरितान्त्यञ्च भेरुण्डा अष्टमं नवमं तथा ॥७०॥
ज्वालामालिनिनित्याऽसौ त्रिषष्ठार्णसमीरिता ।
वेधाकर्षणसन्तापवश्याविशकरी भवेत् ॥७१॥
वायुप्राणवनस्वैः सा चित्रा स्यादक्षरद्वया ।
या सिद्धिधनधान्यात्मनिधिलाभाय कल्पते ॥७२॥
शुचिः खेनाथ शून्यं स्यान्नभसा भूरसः स्थिरा ।
अम्बु पश्चाद्रयः साग्निर्मरुताऽम्बुरयौ तथा ॥७३॥
इलायुतोऽग्निरेतानि पुनरम्बु मरुद्गतम् ।
दाहश्च मरुता हंसस्त्वग्निरेतत्त्रयं पुनः ॥७४॥

---

अष्टमाक्षरमारभ्य द्वादशाक्षरावधि पञ्चाक्षराणि ज्वालामालिनी इति स्युरित्यर्थः ॥६८॥ उपान्त्याधःस्थितं नीलपताकाया अनन्तरं—नीलपताका नित्याविद्याया अन्त्याक्षरात् पूर्वाक्षरं पूर्वस्थितमक्षरमित्यर्थः हु इति । त्वरितान्त्यं—त्वरिता—विद्यायास्त्वरमाक्षरं फट्कारमित्यर्थः । भेरुण्डा अष्टमं नवमं तथा—भेरुण्डाविद्याया अष्टमनवमाक्षरद्वयं स्वाहा इत्यर्थः ॥ ७० ॥

ज्वालामालिनीत्यादिना श्लोकेन अस्या अक्षरसङ्ख्यामसाधारणानि पञ्चफलानि चोपदिशति ॥ ७१ ॥

वायुरित्यादिना श्लोकेन षोड़श्याश्चित्रानित्याया द्व्यक्षरीं विद्यां तत्सिद्धिफलं चोपदिशति । तत्र वायुप्राणवनस्वैः-चकारककारऔकारविन्दुभिरित्यर्थः । तत्र चकारः प्रथमाक्षरम् । आत्मलाभः - स्वरूपज्ञानम् ॥ ७२ ॥

शुचोत्याद्यखिलेष्टदेत्यन्तैः षोड़शभिः श्लोकैर्वाराह्या दशोत्तरशताक्षरीं विद्यां तन्नामादिकं चोपदिशति—तत्र शुचिः खेन—एं इति । शून्यं—नकारः । नभसा भूः—मो इति । रसो—भकारः । स्थिरा—गकारः । अम्बु—वकारः । रयः साग्निः—ति इति । मरुताम्बु—वाइति । रयौ—तकारद्वयम् । तथा—मरुदन्वितं त्ता इति ॥७३॥ इला युतोऽग्निः—इला—लकारः । अग्निः—इकारः लि इति । एतानि पुनः—उक्तानि त्रीण्यक्षराणि पुनरप्युच्चरेदित्यर्थः । अम्बु

अम्बु दाहो मरुद्युक्तो हंसोऽथ धरया नभः ।
तेजोऽग्निना पुनः पञ्च वातः स्वेन समायुतः ॥७५॥
तोयं चरेण तत्पूर्वं तोयमग्नियुतं ततः ।
शून्यं व्याप्तेन शुचिना शून्यं शक्त्या नभोयुतम् ॥७६॥
दाहोधरास्वसहितस्तोयं चरसमन्वितम् ।
एतत्पूर्वमधः प्रोक्तचतुष्टयमतः परम् ॥७७॥
ज्या स्वेन युक्ता सचरो रसश्चैतस्य पूर्वकम् ।
रसोऽग्निना पुनः प्रोक्तचतुष्कात् त्रयमन्ततः ॥७८॥
नभो भुवा चरेणापि हंसस्त्वेतस्य पूर्वकम् ।
हंसोऽग्निना प्राक्त्रितयं हृदयं स्वसमायुतम् ॥७९॥

---

मरुद्युतं—वाइति। दाहस्य मरुता—राइति। हंसस्त्वग्नियुतः—हि इति। एतत्त्रयं पुनः—एतानि त्रीण्यक्षराणि पुनरपि वदेदित्यर्थः ॥७४॥ अम्बु—वकारः। दाहो मरुद्युक्तः—राइति। हंसो—हकारः। धरया—उकारेण। नभो - मकारः मु इति। तेजोऽग्निना—तेजः—खकारः खि इति। पुनः पञ्च—प्रोक्तानि वाराहमुखीपञ्चाक्षराण्येव पुनश्चास्याः। वातः स्वेन समायुक्तः—वातः अकारः ॐ इति ॥७५॥ तोयं चरेण तोयं—धकारः (१) धेइति। तत्पूर्वं—अक्षरमिति शेषः। अं इति। तोयमग्नियुतं—धिइति। ततः - उपरि। शून्यं—नकारः। व्याप्तेन शुचिना—युतमिति शेषः न्यै इति। शून्यं—नकारः। शक्त्या नभोयुतं—शक्तिर्विसर्जनीयः मः इत्यर्थः ॥७६॥ दाहो धरास्वसहितः—रूं इति। तोयं चरसमन्वितं—धे इति। एतत्पूर्वं—रूं इत्यर्थः। अधःप्रोक्तचतुष्टयमतः परं—रूं धे इत्यस्मात्पूर्वस्थितं धिन्यै नम इत्यक्षरचतुष्टयमस्योपरिष्टाद्योजयेदित्यर्थः ॥७७॥ ज्या स्वेन युक्ता—विन्दुयुक्तो जकारः जं इति। सचरो रसः—भे इति। एतस्य पूर्वकं—उक्ताक्षरस्य पूर्वमक्षरं जं इत्यर्थः। रसोऽग्निना—युत इति शेषः भि इति। पुनः प्रोक्तचतुष्कात्त्रयमन्ततः—पूर्वोक्तधिन्यै नम इति चतुष्के - प्रथमाक्षरवर्जं न्यै नमः इत्यक्षरत्रयं उपरिष्टाद्योजयेदित्यर्थः ॥७८॥ नभो भुवा—युतमिति शेषः मो इति। चरेणापि हंसः—अपिः समुच्चये हे इति।

---

(१) चकारः चे इति व० पु० पा०।

रसश्चरेण तत्पूर्वमग्निना च रसो युतः ।
पश्चादुक्तत्रयं वातो धरया च नभः प्रिये ! ॥८०॥
प्राणः स्वेन युतः पश्चाद्धृदयं स्वयुतं रसः ।
व्याप्तमेतत्त्रयं पश्चाद्धृद्दाहेनाम्बुसंयुतम् ॥८१॥
गोत्रा धरायुता स्पर्शो नादयुक्तो जवी युतः ।
दाहेन पूर्वं पूर्वं च पूर्वं च मरुता युतम् ॥८२॥
शून्यं मरुत्स्वसहितं हृद्दाहेनाम्बुना चरः ।
स्पर्शो मरुत्स्वसहितो हृद्दाहेनाम्बुसंयुतम् ॥८३॥
ज्याग्निः स्वसंयुतो हंसः तथाम्बु मरुता सह ।
हृदयेन स्वेन युतं रसश्च स्वेन संयुतः ॥८४॥
प्राणदाहौ धरायुक्तौ पुनस्तौ वह्निना वियत् ।
वार्दाहयुक्तमम्बु स्याद्वियद्व्याप्तस्वसंयुतम् ॥८५॥

---

एतस्य पूर्वकं —हे इत्यस्य पूर्वं मो इत्यर्थः । हंसोऽग्निना—ह्रि इति । प्राक्त्रितयं —प्रागुक्तं न्यैनमः इत्यक्षरत्रयम् । हृदयं स्वसमायुतं—स्तं इति ॥७९॥ रसश्चरेण—भे इति । तत्पूर्वं—भे इत्येतस्य पूर्वमक्षरं स्तं इति । अग्निना च रसो युतः—चकारः समुच्चये भि इति । पश्चादुक्तत्रयं—प्रागुक्तं न्यैनम इति त्रितयम् । वातः अकारः । धरया च नभः—यु इति । प्रिये इति देवीसम्बुद्धिः ॥८०॥ प्राणः स्वेन युतः—कं इति । हृदयं स्वयुतं—स्तं इति । रसो—भकारः । व्याप्तं—यकारः । एतत्त्रयं पश्चात्-प्रोक्तं स्तं भय इत्यक्षरत्रयं पुनरपि स्यादिति । हृत् सकारः । दाहेनाम्बुना संयुक्तं वं इति ॥ ८१ ॥ गोत्रा—दकारः । धरान्विता—दु इति । स्पर्शो नादयुक्तः—स्पर्शः —षकारः । नादः—टकारः ष्ट इति । जवी दाहेन युतः—पकारो रेफेण युतः प्र इति । पूर्वं प्र इत्यस्मादक्षरात्पूर्वाक्षरस्य पूर्वमक्षरं दुइति । पूर्वं च मरुता युतम् —अत्र पूर्वशब्दः दु इत्येतस्य पूर्वाक्षरविषयः ष्टा इत्यर्थः ॥८२॥ शून्यं मरुत्स्वसहितं—नां इति । हृत्—सकारः । दाहेनाम्बुना चरः—वें इति । स्पर्शो मरुत्स्वसहितः—षां इति । हृत्—सकारः । दाहेनाम्बुसंयुतं—व इति ॥८३॥ ज्याग्निः स्वसंयुतः—जि इति । हंसस्तथाम्बु मरुता सह—तथा इति सर्वत्रात्र प्रकरणे समुच्चयार्थः ह्वा इति । हृदयेन स्वेन युतं—स्तं इति । रसश्च स्वेन संयुतः—भं इति ॥८४॥ प्राण-

पूर्वद्विरुक्तवर्णौ च शुचिः स्वेन युतस्तथा ।
स्थिरा रसा वनस्वेन दावौ हंसो धरास्वयुक् ॥८६॥
द्युतिर्नादवती पश्चाद्धृदम्बु मरुता युतम् ।
हंसश्च मरुता विद्या दशोत्तरशताक्षरी ॥८७॥
वाराही पञ्चमी विश्वविजया भद्रकौमुदी ।
वार्ताली चेतिविख्याता स्तम्भनाद्यखिलेष्टदा ॥८८॥
प्राणदाही धरायुक्तौ पुनराद्यं रसे मरुत् ।
व्याप्तं मरुच्छक्तियुतं भूःस्वयुक्ता ततस्त्वयम् ॥८९॥
अस्यादौ तु रसायुग्मं चरेण समयोजितम् ।
दाहेन वह्निशक्तिभ्यां युतो हंसस्ततःपरम् ॥९०॥
नभो द्विर्हृत्सदाहाम्बु ज्या शून्यं स्वनसंयुतम् ।

---

दाही धरायुक्तौ—प्रत्येकमिति शेषः कुरु इति। पुनस्तौ पुनरपि कुरु इति वर्णौ। वह्निना वियत्—शी इति। वाः दाहयुक्तं—वाः—वकारः घ्र इति। अम्बु—वकारः। वियत्व्याप्तस्वसंयुतं—श्वं इति ॥८५॥ पूर्वद्विरुक्तवर्णौ—वश्वं इत्येतदारभ्य पूर्वस्माच्चतुष्टयाक्षरात् पूर्वं कुरु इत्यर्थः। शुचिः स्वेन युतः ऐं इति। स्थिरा रसावनस्वेन—युक्तेति शेषः ठलौं इति। दावौ—ठकारद्वयं ठठ इति। हंसो धरास्वयुक्—हुं इति ॥ ८६ ॥ द्युतिर्नादवती पश्चात्—अनन्तरं—फट् इति। हृदम्बु मरुता युतं—स्वा इति। हंसश्च मरुता—युक्त इति शेषः हा इति ॥ ८७ ॥

वाराहीत्यादिना श्लोकेन देव्या नामपञ्चकं कथयति ॥८८॥

प्राणेत्यादिभिः क्रमादित्यन्तैः पञ्चभिः श्लोकैः कुरुकुल्लायाः पञ्चविंशत्यक्षरीं सप्ताक्षरीं त्रयोदशाक्षरीं च विद्यामुपदिशति। तत्र प्राणदाही धरा युक्तौ—प्रत्येकमिति शेषः कुरु इति। पुनराद्यं—पुनरपि तयो राद्यं कु इति। रसे—लद्वयं मरुत् आकारः ल्ला इति। व्याप्तं मरुच्छक्तियुतं—याः इति। भूः स्वयुक्ता ॐ इति। ततस्त्वयम् ॥८९॥ अस्यादौ तु ॐ—मित्यस्योपरि अस्य मन्त्रस्यादिभूतं कुरु कु इत्यक्षरत्रयं भवेदित्यर्थः। रसायुग्मं चरेण समयोजितं—ल्ले इति। दाहेन वह्निशक्तिभ्यां युतो हंसस्ततः परम्—क्रोः इति ॥९०॥ नभो द्विः—स्यादिति शेषः मम इति।

अम्बु पश्चाद्वियद्युक्तं मरुता तु नभः प्रिये ! ॥८१॥
शून्यं व्याप्तं भुवा हंसः पूर्वान्त्यौ स्यान्मनुत्रयम् ।
अस्य षष्ठादिपञ्चार्णादन्त्यौ स्यादाद्य ईरितः ॥८२॥
एकादशाक्षरादन्त्यौ द्वितीयः समुदीरितः ।
तृतीयः पञ्चविंशार्णः प्रोक्ता मन्त्रा इति क्रमात् ॥८३॥
भूःखेन हंसो दाहवह्निखयुतः खेन हंसकः ।
हृन्मायया भुवा हृत्स्यात् खेन हंसः समन्वितः ॥८४॥
कुरुकुल्लान्त्यवर्णौ च स्यादात्माष्टाक्षरः स्मृतः ।
सर्वाभीष्टार्थसंसिद्ध्यै सुलभोऽयं सुरद्रुमः ॥८५॥
सङ्केतोदीरितैर्वर्णैर्दशभिर्दशभिः पृथक् ।

---

हृत्—सकारः । सशाहाम्बु—दाहसहितं म इत्यर्थः वं इति । ज्या—जकारः । शून्यं खेन युतं—न इति । अम्बु पश्चात्—अनन्तरं वकारः । वियत्—सकारः । (युक्तं) मरुता युक्तं नभ इति यावत् मा इति । प्रिये इति देवीसम्बुद्धिः ॥८१॥ शून्यं—नकारः । व्याप्तं—यकारः । भुवा हंस इति शेषः हो इति । पूर्वान्त्यौ पञ्चमीविद्याक्षरसाक्षरद्वयं स्वाहा इत्यर्थः । स्यान्मनुत्रयं—अयमेव मन्त्रः अक्षरविभागयोगक्रमान्मन्त्रत्रयं भवतीत्यर्थः । अस्य षष्ठादि पञ्चार्णादन्त्यौ स्यादाद्य ईरितः । एतदुक्तं भवति—अस्य पञ्चविंशाक्षरमन्त्रस्य षष्ठाक्षरमारभ्य दशमाक्षरान्तमुच्चार्य ततः परं स्वाहा इति वदेत् । तेन सप्ताक्षरी प्रथमा विद्या भवतीति ॥८२॥ एकादशाक्षरादन्त्यौ द्वितीयः समुदीरितः । एतदुक्तं भवति—अस्यैव पञ्चविंशाक्षरस्याद्याक्षरमारभ्य एकादशाक्षरान्तमुच्चार्य ततःपरं तच्चरमभूतस्वाहा इत्यक्षरद्वययोजनात् त्रयोदशाक्षरी विद्या भवतीति । तृतीयः पञ्चविंशार्णः प्रागेवाभिहितः प्रथमद्वितीययोः प्रकृतिभूतः सप्तपञ्चविंशार्णो मन्त्रः तृतीय इत्यर्थः ॥ ८३ ॥

भूःखेनेत्यादिना सुरद्रुम इत्यन्तेन श्लोकद्वयेनात्माष्टाक्षरीं प्रपञ्चयागविद्यामुपदिशति । तत्र भूः खेन—ॐ इति । हंसो दाहवह्निखेन क्रींकारःखेन हंसकः—हं इति । हृन्मायया—युक्ता इति शेषः स इति । भुवा हृत्स्यात्—सो इति । खेन हंसः समन्वितः—हं इति । कुरु कुल्लान्त्यवर्णौ च—स्वाहा इत्यर्थः ॥ ८५ ॥

सङ्केतेनेत्यादिना चराचरमित्यन्तेन श्लोकद्वयेन पञ्चभूतानां प्रत्येकमेक-

प्राणाग्नीलाऽऽम्बुशाखाभिः शक्तिसप्ताक्षरीयुतैः ॥९६॥
भूतमन्त्राः समुद्दिष्टाः पञ्च सर्वार्थसिद्धिदाः ।
येषामालोकतो विश्वं वर्तते सचराचरम् ॥९७॥
पूर्वस्थायी च तत्पूर्वं चतुर्दशतदन्त्यकौ ।
अम्बुनाग्निर्वाः स शून्यं प्राणो जलरयान्वितः ॥९८॥

---

विंशत्यक्षरान् मन्त्रानुपदिशति । तत्र सङ्केतोदीरितैर्वर्णैरिति । एतदुक्तं भवति—वातो मरुदित्यादिभिः पञ्चत्रिंशत्पटलोक्तैः श्लोकैर्भूतेषु विभक्तानां मातृकाक्षराणां संज्ञाभिरुदीरितैः । प्राणाग्नीलाम्बु शाखाभिः प्रत्येकं दशभिरक्षरैः रूपिता खाख्याशक्तिशब्दसप्ताक्षर्यन्ताः एवं प्रत्येकमेकविंशत्यक्षराश्चत्वारो विंशत्यक्षरव्योममन्त्रसहिता एवं पञ्चमन्त्राः । प्रोक्तक्रमेण पञ्चानां भूतानां स्युरिति । ते यथा—तेषां पञ्चानामपि मन्त्राणां स्वरूपं ललितानित्यासपर्याक्रमे मन्त्रमलिखितमपि अत्र तेषां स्वरूपं प्रकटं प्रकाश्यते—प्राक् प्रत्यक् दक्षिणोदक् च एकादश षट् रेखाः समान्तरालं विलिख्य तासु दशदशकोष्ठात्मसु पञ्चसु पंक्तिषु ऊर्ध्वाधः क्रमेण अकारादीनि अइउ ऋऌ इति ह्रस्वपञ्चाक्षराणि प्रथमपङ्क्तौ समालिख्य तद्वितीयपङ्क्तौ आईऊ ॠ ॡ इति दीर्घाक्षरपञ्चकं क्रमादालिख्य तृतीयपङ्क्तौ एऐ ओ औ अं इति वर्णपञ्चकं समालिख्य चतुर्थ्यादिषु पङ्क्तिषु प्रोक्तक्रमेण ककारादीन् शकारान्तान् षड्वर्गान् पञ्चशः समालिख्य सर्वान्त्यपङ्क्तौ षक्षलसह इति पञ्चाक्षराणि—चालिख्य पश्येत् । सर्वोर्ध्वपङ्क्तिकोष्ठदशाक्षराणि प्राणात्मकानि । तदधःस्थितद्वितीयपङ्क्तिकोष्ठदशकस्थानि दशाक्षराणि अग्न्यात्मकानि । तदधःस्थितत्तृतीयपङ्क्तिकोष्ठदशकस्थितदशाक्षराणि इलात्मकानि । तदधःस्थितचतुर्थपङ्क्तिकोष्ठदशकस्थितानि अबात्मकानि । तदधः—स्थितपञ्चमपङ्क्तिकोष्ठदशकस्थानि दशाक्षराणि खात्मकानि । तेषां दशानामन्ते तत्तन्नामद्व्यक्षराणि व्योम्नः एकाक्षरं च सर्वत्र शक्तीति द्व्यक्षरं तदुपरि सप्ताक्षरीं च योजयेत् ॥७६॥ एवं कृते एकविंशा दशाक्षराः पञ्चभूतमन्त्रा भवन्ति । तेषामालोकतः प्रभावादित्यर्थः । वर्तते—अद्यापि क्रियते इत्यर्थः ॥९७॥

पूर्वेत्यादिभिर्मनुरित्यन्तैस्त्रिभिः श्लोकैः षोडशनित्यानां साधारणं षोडशाक्षरं बलिमन्त्रमुपदिशति । तत्र पूर्वस्थायी च—प्रागुक्तस्यात्माष्टार्णमन्त्रस्यादिभूतौ प्रणवहृल्लेखावर्णौ अस्य प्रथमद्वितीयवर्णौ स्यातामित्यर्थः । तत्पूर्वं चतुर्दशत-

रसः स्याद्व्याप्तमायाभ्यां तृतीयोऽस्य चतुर्थकः ।
रसः क्ष्मया रयो युक्तस्वरेण परमेश्वरि ! ॥९९॥
रसो युक्तो व्याप्तभूम्यां हंसः क्ष्मास्वयुतस्ततः ।
पूर्वान्त्यवर्णाविल्युक्तः षोड़शार्णो बलेर्मनुः ॥१००॥
वह्नि तत्त्वमयी व्याप्तिरिति सम्यक् समीरिताः ।
अस्या निःकालनात् चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते
तृतीयं पटलम् ।

---

टन्त्यकौ—आत्माष्टाक्षरमन्त्रस्य पूर्वभूतायाः कुरुकुल्लाविद्यायाः चतुर्दशपञ्चदशाक्षरे सर्व इति द्वे अस्य तृतीयचतुर्थाक्षरे स्यातामित्यर्थः । अम्बु नाग्निः—युत इति शेषः वि इति । वाः सशून्यं—म्र इति । प्राणो जलरयान्वितः—ककारो ऋकारतकाराभ्यां सहितः कृत् इति ॥९८॥ रसः स्यात् व्याप्तमायाभ्यां-भ्य इति । मायाशब्दः शक्तिशब्द-श्चास्मिन् तन्त्रे हृल्लेखा विसर्जनीययोरेकैकस्याभिधायकौ, एवं स्थिते अन्यतरयोजनं सम्प्रदायबलादित्यर्थः । तृतीयोऽस्य चतुर्थकः सर्व इति नवमदशमाक्षरे । रसः क्ष्मय—युक्त इति शेषः भू इति एकादशमक्षरम् । रयो युक्तस्वरेण-ते इति द्वाद-शम् । परमेश्वरीति सम्बुद्धिः ॥९९॥ रसो युक्तो व्याप्तभूम्यां भ्यो इति त्रयोदशम् । हंसः क्ष्मा स्वयुतस्ततः—ह्रं इति चतुर्दशमक्षरम् । पूर्वान्त्यवर्णौ-आत्माष्टाक्षरमन्त्रौ स्वाहा इति पञ्चदश । षोड़शार्णो इत्युक्तः षोड़शार्णो बलेर्मनुः—एवं षोड़शाक्षरः सर्वासां षोड़शनित्यानां बलिमन्त्र उक्त इत्यर्थः ॥१००॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य
तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्द-
नाथेन विरचितायां मनोरमाख्यायां व्याख्यायां नित्या-
विद्यास्वरूपप्रकाशनपरं तृतीयपटलं परिपूर्णं
परामृष्टम् ॥

ग्रन्थसंख्या तृतीये यन्त्रमेकं स्याद्व्याख्यानं ग्रन्थसंख्यया
शतद्वयं सप्तनवतिसहितं सार्द्धमीरितम् ।

---

## अथ चतुर्थपटलारम्भः ।

अथ षोड़शनित्यानामाद्यायाः पूजनं प्रिये ! ।
कथयामि क्रमेणैव नित्यं सर्वार्थसिद्धिदम् ॥१॥
नैमित्तिकं तथा काम्यं शृणु त्वं पटलैस्त्रिभिः ।
येनातिपापयुक्तोऽपि सिद्धिमेति सुनिश्चितम् ॥२॥
न्यासत्रयस्य मन्त्रांश्च आसनानां चतुष्टयम् ।
आवाहनमनुं पश्चात् समस्तार्चामनुं तथा ॥३॥
मुद्रायुधानां बीजानि मुद्रारचनवासने ।
ध्यानं सपरिवाराया नित्यपूजाविधिक्रमौ ॥४॥
नवावरणशक्तीनां नामान्यर्चाक्रमं तथा ।
मन्त्रात्मयोगमर्चाया उपचारान् जपक्रमम् ॥५॥
वातः खसंयुतस्त्वाद्यं मरुत्खेन द्वितीयकम् ।
हृद्वनेन समायेन तृतीयं प्रथमा त्वसौ ॥६॥

---

## अथ चतुर्थपटलारम्भः ।

पूर्वस्मिन् तृतीयपटले षोड़शनित्याविद्यादिकमुपदिश्यानन्तरमङ्गिनित्यायाः प्रधानाया ललिता विद्यायानित्यनैमित्तिकाम्यां समाराधनक्रममुपदिशति । अथ षोड़शनित्येत्यादिभिस्तन्मयो भवेदित्यन्तैस्त्रिभिः पटलैः प्रत्येकं श्लोकशतरूपैः । तत्र अथ षोड़शनित्येत्यादिभिः क्रममित्यन्तैः पञ्चभिः श्लोकैश्चतुर्थपञ्चमषष्ठपटलार्थानुद्दिशति । तत्र नित्यं—पूजनमित्यर्थः । नैमित्तिकं तथा काम्यं—पूजनमित्यस्य विशेषणम् । अतिपापयुक्तोऽपि—विवेकद्वेषी ॥२॥ न्यासत्रयस्येत्यादिना बीजानीत्यन्तेन पादाधिकेन द्वाविंशन्मन्त्रोद्देशकः कृतः तत्र न्यासत्रयस्येत्युक्तिरुद्देश क्रमोल्लङ्घिन्यपि श्लोकसौकर्यार्थेति सम्प्रदायः । समस्तार्चामनुं — बीजद्वयरूपम् ॥५॥

वातेत्यादिना मार्जनादित्यन्तेनार्द्धाधिकेन श्लोकेन करशुद्धिविद्यां शोधनप्रकारं चोपदिशति । तत्र वातः खसंयुतस्त्वाद्यं ॐ इति प्रथमं बीजमरुत्खेन

अनयाः करयोः शुद्धिं कुर्यादन्योन्यमार्जनात् ।
हृच्छिरश्च शिखावर्म नेत्रमस्त्रं षडङ्गकम् ॥ ७ ॥
द्वितीयया सा विज्ञेया या नित्या कुलसुन्दरी ।
तृतीया सैव शक्त्याद्या देव्यात्मासनमेतया ॥८॥
त्रिषु हंससमायोगाच्चक्रासनमुदीरितम् ।
हंसहृद्वां पञ्चमी च सर्वमन्त्रासनं तथा (१) ॥९॥

---

द्वितीयकं—आं इति द्वितीयकम् । हृद्वनेन समायेन तृतीयं—सौः इति तृतीयम् । प्रथमा त्वसौ—विद्येति शेषः ॥६॥ शुद्धिमिति । शुद्धिः—सपर्योपकरणस्पर्शार्हताकरणम् । अन्योन्यमार्जनात्—वामदक्षिणकरतलस्पृष्टयोरिति शेषः ।

हृदित्यादिना सुन्दरीत्यन्तेनार्द्धद्वयेन षड़ङ्गं षड़ङ्गन्यासविद्यां चोपदिशति । तत्र द्वितीयया—उद्दिष्टद्वात्रिंशत्सु द्वितीयया विद्ययेति शेषः ॥७॥

तृतीयेत्यादिना एतया इत्यन्तेन उत्तरार्द्धेन देव्यात्मासनविद्यामुपदिशति । तत्र तृतीया सैव—षड़ङ्गन्यासे प्रोक्तकुलसुन्दरी विद्यैव । शक्त्याद्या । अत्र शक्तिः—हृल्लेखा । उत्तरश्लोकाद्यगतं त्रिष्विति पदमावाहनविद्यान्तमन्वेति । तेनैतदुक्तं भवति—त्रीणि बीजानि प्रत्येकं हृल्लेखापुरःसराणि कुर्यादिति । ह्रीँ ऐँ ह्रीँ क्लीँ ह्रीँ सौःँ इति । देव्यात्मासनं—परिच्छिन्नविग्रहाणां देव्यात्मनां सर्वशक्तीनामासनं—उपलब्धिस्थानं सर्वासां देवतानामुपलब्धिस्थानमित्यर्थः । अत्र उद्देशक्रममपहाय कथनमासनविद्याचतुष्टयस्य द्वितीयविद्यानुबन्धित्वात् सौकर्यार्थम् । तृतीयेति परिगणनक्रमश्च सौकर्यार्थः ॥ ८ ॥

त्रिष्वित्यादिना श्लोकपूर्वार्द्धेन चक्रासनविद्यामुपदिशति—तत्र हंससमायोगात्—बालायास्त्रिषु बीजेषु प्रत्येकं हकारोपक्रममुच्चारणं (२) हैँ ह्क्लीँ ह्सौः चतुर्थी चक्रासनविद्येत्यर्थः । चक्रासनमिति । सर्वेषां मन्त्रदेवतात्म (३) भूतानां यन्त्राणामासनं उपलब्धिस्थानम् ।

हंसेत्यादिनोत्तरार्द्धेन सर्वमन्त्रासनविद्यामुपदिशति । तत्र हंसहृद्वयां समेतेति शेषः । प्राग्वत्त्रीणि बीजानि प्रत्येकं हकारसकारोपक्रमोच्चारणात् ह्सैँ

---

(१) तया इति सौ० पु० पा० ।

(२) मुच्चारणात् इति टी० पु० पा० । (३) मन्त्रदेवता वासभूतानामिति टी० पु० पा० ।

ततोम्बु च रसोपेतं चरस्वसहितं च तत् ।
तस्य शक्तेश्च मध्यस्था या सा षष्ठी समीरिता ॥१०॥
साध्यसिद्धासनं दद्यात् तया देव्यै समर्चनात् ।
सप्तम्याऽऽवाहनं कुर्यान्नमसोक्तत्रिखण्डया ॥११॥

---

ह्स् क्लीँ ह्सौः पञ्चमी सर्वमन्त्रासनविद्या । सर्वमन्त्रासनमिति — श्रीचक्रस्य कथनम् । अकथादिमातृकात्मकत्वेन त्रिकोणरेखाणां च वक्ष्यमाणत्वात् सर्वेषां मन्त्राणामुपलब्धिस्थानमित्यर्थः ॥ ९ ॥

तत इत्यादिना समर्चनादित्यन्तेनाध्यर्द्धेन श्लोकेन साध्यसिद्धासनविद्यामुपदिशति । तत्र ततोऽम्बु च रसोपेतं चरस्वसहितं च तत् — अम्बु — वकारः । चकारः समुच्चये । रसा — लकारः । चर — एकारः । स्वं — विन्दुस्ताभ्यां सहितम् । चकारः समुच्चये । तच्छब्दो विशिष्टरूपं परामृशति । एतदुक्तं भवति — वकारलकारविन्दुभिर्युक्तं व्लेँ इति कूटाक्षरं स्यादिति । तस्य शक्तेश्च मध्यस्था या सा षष्ठी समीरिता — तस्य — प्रोक्तस्य व्लेँकारस्य । शक्तेः — ह्स्लेखायाः । मध्यस्था एतयोर्द्वयोर्मध्यस्थेत्यर्थः । एतदुक्तं भवति — तस्यास्तु बालायास्त्रीणि बीजानि — क्लीँकारोपक्रमाणि व्लेँकारावसनानि च भवेयुः क्लीँ ऐँ क्लीँ क्लीँ सौः व्लेँ एवंरूपा सा बाला साध्यसिद्धासनविद्यास्यादिति ॥१०॥ साध्यसिद्धासनमिति । सर्वेषां साध्यानामभिमतानां सिद्धीनामुपलब्धिस्थानं अखण्डात्मकस्वरूपविमर्शं (१) सिद्धेरित्यर्थः । अत्र देव्यै समर्चनादिति — आसनचतुष्टयेऽप्यन्वेति । एतस्याऽऽसनचतुष्टयस्य मन्त्रयोजनाप्रकारं पञ्चमे पटले वक्ष्यति ।

सप्तम्येत्यादिना समीरित इत्यन्तेनार्द्धाधिकेन श्लोकेन सप्तमीमावाहनविद्यामुपदिशति । तत्र सप्तम्या — विद्ययेति शेषः । नमसा — युक्तयेति शेषः । नमःशब्दान्तयेत्यर्थः । उक्तत्रिखण्डया — मुद्रयेति शेषः । उत्तरत्र वक्ष्यमाणमपि उक्तमिति सर्वत्र कथयति । हंसहृद्दाहसंयुक्ता सैव स्यात् सप्तमी मता — एतदुक्तं भवति — हकारसकाररेफाक्षरैः प्रत्येकं त्रिषु बीजेषु युक्ता कुलसुन्दरीविद्या आवाहनविद्येत्यर्थः । मध्यमे दाहयोगस्तु व्यञ्जनान्ते समीरितः — मध्यमबीजस्य हकारसकारौ पुरस्तात् संयोज्य रेफं लकारान्ते योजयेदित्यर्थः । तेन हकारसकारककारलकाररेफईकारविन्दुभिर्मध्यमं बीजं मायान्तम् । इतरस्मिंस्तु

---

(१) विमर्शात् सिद्धेरिति सी० व० पु० पा० ।

हंसहद्दाहसंयुक्ता सैव स्यात् सप्तमी मता ।
मध्यमे दाहयोगस्तु व्यञ्जनान्ते समीरितः ॥१२॥
वियत् सदाहं वह्निस्वशक्त्याद्यं स्यात् स्वयं (१)भवेत् ।
तदादिकाः सर्वशक्तीश्चक्रस्था नामभिर्जपेत् ॥१३॥
दाहभूमीरसाच्मास्वैर्वशिनीबीजमीरितम् ।
प्राणोरसाशक्तियुतः कामेश्वर्यक्षरं महत् ॥१४॥
शून्यमम्बुरसावह्निस्वयोगान्मोहिनी मनुः ।
व्याप्तं रसाच्मास्वयुतं विमलाबीजमीरितम् (२) ॥१५॥
ज्या नभोवह्निदाहस्वयोगैः स्यादरुणा मनुः ।

---

सकारस्वरयोर्मध्ये रेफं योजयेदित्यर्थः । तेन हकारसकारद्वयरेफश्रौकारविसर्जनीयै(३)रन्त्यबीजं मायान्तं ह्सौं ह्स्क्ल्रीं ह्स्रौः नमः इति ॥ १२ ॥

वियदित्यादिना श्लोकेन ललितायाः श्रीचक्रावस्थितानां शक्तीनां पूजानामरूपमन्त्राणां प्रणवभूतं बीजद्वयमुपदिशति । तत्र वियत्—सकारः । सदाहवह्निस्वं रेफईकारविन्दुसहितं स्रीं इति । शक्त्याद्यं—ह्स्ख्फ्रें खाद्यम् । एतदुक्तं भवति । ह्स्ख्फ्रें खाश्रीबीजोपक्रमैः पूजानाममन्त्रैः सर्वाः शक्तीः पूजयेदिति ॥१३॥

दाहभूमीत्यादीना श्लोकेन वशिनीकूटाक्षरविद्यां कामेश्वरीकूटाक्षरविद्यां चोपदिशति । दाहभूमीरसाच्मास्वैः—रेफवकारलकारऊकारविन्दुभिः व्लूं इति । प्राणो रसाशक्तियुतः—प्राणः । ककारः । रसा—लकारः । शक्तिः—ह्स्ख्फ्रें खा । तैर्युक्तः ककार लकार ह्स्ख्फ्रें खाभिः कूटं क्ल्ह्रीं इति ॥ १४ ॥

शून्यमित्यादिना श्लोकेन मोहिनीविमलयोः कूटाक्षरीविद्याद्वयमुपदिशति । तत्र शून्यं—नकारः । अम्बुरसावह्निस्वयोगात्—वकारलकारईकारविन्दुयोगादित्यर्थः व्लीं इति । व्याप्तं—यकारः । रसाच्मास्वयुतं लकारऊकारविन्दुसहितं य्लूं इति ॥१५॥

ज्या नभो इत्यादिना श्लोकपूर्वार्द्धेन अरुणाकूटाक्षरीविद्यामुपदिशति ।

---

(१) शक्त्याद्यं यद्वयं भवेत् इति मृ० पु० पा० ।
(२) वशिनी बीजमीरितम् । प्राणोरसाशक्तियुतं विमलाबीजमीरितम् इति सो० पु० पा० । प्राणोरसा इत्यादि सो० पु० विहाय कुत्रापि न वर्त्तते ।
(३) तेन हकारसकाररेफश्रौकारविसर्जनीयैरिति व० पु० पा० ।

हंसः सहृद्रसाम्बुः स्याद्व्याप्तच्माखैर्युतो मनुः ॥१६॥
जयिन्यास्तु समुद्दिष्टः सर्वत्र जयदायकः ।
वादेषु व्यवहारेषु समरेषु च निश्चितम् ॥१७॥
कं नभोदाहसहितं व्याप्तच्माखयुतं मनुः ।
सर्वेश्वर्याः समाख्यातः सर्वसिद्धिकरः सदा ॥१८॥
ग्रासो नभोदाहवह्निखैर्युक्तः कौलिनीमनुः ।
एतैर्मनुभिरष्टाभिः शक्तिभिर्वर्गसंयुतैः ॥१९॥
वाग्देवतान्तैर्न्यासः स्याद्येन देव्यात्मको भवेत् ।
मर्त्योऽपि पूज्यते देवैः सर्वैः सर्वत्र सर्वदा ॥२०॥

---

तत्र ज्या नभोदाहवह्निखयोगैः—जकारमकाररेफईकारबिन्दूनामन्योन्यमुक्तक्रमयोगात् ज्म्रीं इति ॥ १६ ॥

हंसेत्यादिना निश्चितमित्यन्तेनार्द्धाद्येनैकेन श्लोकेन जयिनीं कूटाक्षरविद्यां तत्सामर्थ्यं चोपदिशति । तत्र हंसो—हकारः । सहृद्रसाम्बुः—सकारलकारवकारसहितः । व्याप्तच्माखैर्युतः—(१)यकारजकारबिन्दुभिश्च युक्तः । एतदुक्तं भवति—हकारसकारलकारवकारयकारजकारबिन्दुभिः कूटं ह्स्ल्व्य्ज्रूं इति ॥ १७ ॥

कमित्यादिना सदा इत्यन्तेनार्धाद्येनैकेन श्लोकेन सर्वेश्वरीकूटाक्षरविद्यां तदनुभावं चोपदिशति । कं—लकारः(२) । नभोदाहसहितम्—मकाररेफसहितम् । व्याप्तच्माखयुतं—यकार जकारबिन्दुसहितम् । एतदुक्तं भवति—लकारमकाररेफयकारजकारबिन्दुभिः ल्म्र्य्ज्रूं(३)इति ॥ १८ ॥

ग्रासेत्यादिना श्लोकपूर्वार्द्धेन कौलिनीकूटाक्षरविद्यामुपदिशति-तत्र ग्रासः—क्षकारः । नभोदाहवह्निखैः—मकाररेफईकारबिन्दुभिः क्ष्म्रीं इति ।

एतैरित्यादिना सर्वदा इत्यन्तेनार्द्धाद्येनैकेन श्लोकेन वशिन्यादीनां न्यासक्रमं तत्फलं चोपदिशति । तत्र मनुभिरष्टाभिः—प्रोक्तकूटाक्षरैरिति शेषः । शक्तिभिः—

---

(१) कं पकारज इति वं० पु० पा० ।

(२) सकारज इति व० टी० पु० पा० ।

(३) रम्र्यूं इति वं० पु० पा० । झ्—मयूं इति टी० पु० पा० ।

रन्ध्रे भाले तथाऽऽज्ञायां गले हृदि तथा न्यसेत् ।
नाभावाधारके पादद्वये मूलाग्रकावधि(१) ॥२१॥
गोत्रादाहमरुत्खैः स्यादाद्योऽन्यो व्यत्ययादसौ ।
मरुदङ्गोः प्राणरसावह्निखैः स्यात्तृतीयकः ॥२२॥
भूमौ रसादमाखयुता चतुर्थः शक्तिहृत्परः ।
प्राणेन दाहभूखेनानन्तरः सप्तमः पुनः ॥२३॥
हंसो हृदा तेजसा च द्युत्या दाहचरखयुक् ।
अष्टमो हंसहृत्प्राप्तवनखैः समुदीरितः ॥२४॥
शुचिः खेन युतस्तद्वन्नवमः परिकीर्तितः ।
एते एकाक्षरा मन्त्रा मुद्रारूपा महेश्वरि ! ॥२५॥

---

प्रोक्तैर्वशिन्याद्यष्टशक्तिभि(२)र्युक्तैरिति शेषः । वर्गसंयुतैः—अकचटतपयशाक्षराद्यैः वाग्देवतान्तैः प्रत्येकम्॥१८॥ वाग्देवतेति । चतुरक्षरनामान्तैर्न्यसेन । देव्यात्मकः—देवविग्रहः देव्यास्तु अक्षरैरेव विग्रहवत्वादित्यर्थः । एतदुक्तं भवति—अकारादिविसर्जनीयान्तान् षोडश स्वरान् सबिन्दूनुच्चार्य तदुपरि ह्लृ॰ इति कूटाक्षरमुच्चार्य वशिनी वाग्देवतायै नम इत्युच्चरन्न्यसेत् । एवमन्यान्यसरमन्त्रान् वर्गबीजनामवाग्देवतानमोन्तैर्न्यसेत् प्रोक्तविग्रहान् कुर्यादित्यर्थः । अत्र नमःशब्दयोजनमुत्तरत्र पूजायां नमः पदे इत्याक्षेपपूर्वं विधानात् ॥२०॥

रन्ध्रेत्यादिना श्लोकेन वशिन्याद्यष्टशक्तिमन्त्रन्यासस्थानान्युपदिशति । तत्र रन्ध्रे—ब्रह्मरन्ध्रे । आज्ञायां-भ्रुवोर्मध्ये । मूलाग्रकावधि—पादयोर्मूलादारभ्याग्रकावधि करतलद्वयेन समं मन्त्रोच्चारं परामृशेदित्यर्थः । अनन्तरं मूलविद्यायाः प्रथमखण्डेन मूर्द्धादिहृदयान्तं, द्वितीयखण्डेन हृदादिप्रपदान्तं, तृतीयखण्डेन प्रपदादिहृदयान्तं, करद्वयेन देशिकप्रदर्शितप्रक्रियया अञ्जल्यन्तं, व्यापकन्यासं त्रिःकुर्यात् । अस्य वासना गुरुमुखादेवावगन्तव्या ॥२१॥

गोत्रेत्यादिभिर्महेश्वरीत्यन्तैश्चतुर्भिः श्लोकैः नवानां मुद्राणां नवबीजमन्त्रान् क्रमेणोपदिशति । तत्र गोत्रा—दकारः । दाहमरुत्खैः—रेफअकारबिन्दुभिः

---

(१) पादद्वयोर्मूलाग्रकावधिः इति सी॰ पु॰ पा॰ ।

(२) शक्तिनामभिरिति टी॰ पु॰ पा॰ ।

बाणाक्षराणि देवेशि ! शृणु सौभाग्यदानि वै ।
व्याप्तं दाहो रसात्वम्बु हृन्मरुत्खयुतं पृथक् ॥२६॥
मुद्राक्षराणि पञ्चादौ बाणाः स्युः सर्वजृम्भणाः ।
शाक्ताः शैवाश्च विज्ञेयाः पञ्चपञ्च समीरिताः ॥२७॥
शिखितोये खसंयुक्ते धनुषी सर्वमोहने ।

---

द्रां इति । अन्यः—द्वितीयः । मरुदङ्गयोर्व्यत्ययादसौ द्रीं इति मन्त्रः । एतदुक्तं भवति । पूर्वबीजस्येव आकारस्थाने ईकारं योजयेत् इति । प्राणरसावक्षिखेः—ककारलकारईकारविन्दुभिः क्लीं इति ॥२२॥ भूमी— वकारः । रसाच्चास्वयुता—लकारजकारविन्दुभिर्युक्ताव् लूं इति । शक्ति हृत्सकारो विसर्जनीययुक्त इत्यर्थः । परः—पञ्चम सः इति । प्राणेन—ककारेण । दाहभूखेन—रेफः—औकारविन्दुसहितः । अनन्तरः—षष्ठः क्रौं इति ॥२३॥ हंसो हृदा तेजसा च द्युत्या दाहचरखयुक् । हंसो—हकारः । हृदा - सकारेण । तेजसा—खकारेण । द्युत्या—फकारेण युत इति शेषः । दाहचरखयुक्—रेफ एकारविन्दुयुक्तः । एतदुक्तं भवति—हकारःसकारेण खकारेण फकारेण एकारेण विन्दुना युक्तः कूटाक्षररूपः सप्तमो मन्त्रः स्यादिति । ह्स्ख्फ्रें इति । अष्टमो हंस हृत्प्राप्तवनखैः—मन्त्र इति शेषः । हकारसकार औकारविन्द भिर्युक्तोऽष्टमः - ह्सौंइति ॥२४॥ शुचिः खेन युतः ऐं इति । मुद्रारूपाः—मुद्राणां स्थूलसूक्ष्मपरत्वेन त्रैविद्यात्मकाः (१) स्थलाः अक्षरात्मिकाः सूक्ष्माः वास-नात्मिका परा इत्युक्तत्वात् ॥ २५ ॥

बाणेत्यादिना समीरिता इत्यन्तेन श्लोकद्वयेन द्विविधानि बाणाक्षराणि दशतद्द्वैविध्यं(२)चोपदिशति । तत्र—व्याप्तं दाहो रसात्वम्बु हृन्मरुत्खयुतं पृथक्—यकाररेफ लकारवकारसकाराक्षराणि पञ्च प्रत्येकं आकारविन्दुभिर्युक्तानि शक्तेः नव बाणाक्षराणि यां रां लां वां सां इति पञ्च मुद्राक्षराणि । पञ्चादौ प्रोक्तेषु मुद्राक्षरेषु आदितः द्रां द्रीं क्लीं ब्लूं सः इति पञ्चाक्षराणि । कामत्मनः शिवस्य सर्वजृम्भणाः सर्व्वकामिनीवशंकराः । बाणानां स्थूलसूक्ष्मपरत्वेन तत्त्रैविध्यं पञ्चमे पटले वक्ष्यति ॥२६॥२७॥

शिखेत्यादिना श्लोकपूर्वार्द्धेन चापाक्षरद्वयमुपदिशति । तत्र शिखितोये

---

(१) मुद्राणां स्थूलसूक्ष्मरूपाणां स्थूलसूक्ष्मपरत्वेन त्रैविद्यात्मकाः न त्रैविद्यात्मका इति वं० पु० पा० ।

हंसगैर्दाहवह्निस्थैः सस्थेन मरुता तथा ॥२८॥
पाशौ तयोः समुद्दिष्टौ तथा सर्ववशङ्करौ ।
सर्वस्तम्भकरस्त्वेको मुद्रा षष्ठोऽङ्कुशस्तयोः ॥२९॥
आवाहनं स्थापनं च सन्निरोधोऽवगुण्ठनम् ।
सन्निधापनसंज्ञं च हेतिमुद्रा नमस्क्रिया ॥३०॥
संक्षोभद्रावणाकर्षवश्योन्मादमहांकुशाः ।
खेचरी बीजयोन्याख्या शक्त्युत्थापनमित्यपि ॥३१॥
मुद्रा विंशतिरुद्दिष्टास्तासां विरचनं शृणु ।
याभिर्विरचिताभिस्तु मन्त्राः सिद्ध्यन्ति यत्नतः ॥३२॥
कृताञ्जली करौ कृत्वा व्यत्यस्येत्तदनामिके ।
तन्नखे तर्जनीग्रस्ते त्रिखण्डा ललितावहा ॥३३॥

---

स्वसंयुक्ते—थकारधकाराक्षरे विन्दुसंयुक्ते थं धं इति क्रमेण शिवयोश्चापाक्षरद्वयम् । चापयोस्त्रैविध्यं पञ्चमे पटले वक्ष्यति ।

हंसेत्यादिभ्यां च वशङ्करावित्यन्ताभ्यां श्लोकोत्तरार्द्धपूर्वार्द्धाभ्यां पाशयोरक्षरद्वयमुपदिशति । तत्र हंसगैर्दाहवह्निस्थैः—क्रीं इति । सस्थेनमरुता—आं इति । पाशौ तयोः समुद्दिष्टौ प्राग्वदुभयोः पाशाक्षर एते ।

सर्व्वस्तम्भेत्यादिनोत्तरार्द्धेनोभयसाधारणमङ्कुशाक्षरमेकमुच्यते । तत्र मुद्राषष्ठः क्रौंकारः ॥ २८ ॥ २९ ॥

आवाहनमित्यादिभिः अयत्नत इत्यन्तैस्त्रिभिः श्लोकैर्विरचनीयमुद्राविंशतिनामान्युपदिशति । तत्र-सन्निधापनं—सन्निधापनसंज्ञा मुद्रेत्यर्थः । हेतिपदेन बाणधनुःपाशाङ्कुशा उच्यन्ते, तेन चतस्रोमुद्राः ॥ ३० ॥ ३१॥१२॥

कृतेत्यादिना श्लोकेन आवाहनार्थं त्रिखण्डामुद्राविरचनप्रकारमुपदिशति । त्रिखण्डाकारत्वात् त्रिभिः ज्ञातृज्ञानज्ञेयात्मभिः संसारखण्डनाच्च । ललितावहा—आह्वानकरी । अत्र विश्वात्मिकाया ललिताया आह्वानं नाम परिच्छिद्या वेक्षण-(१) मिति सम्प्रदायः । अन्यत् सुगमम् ॥ ३३ ॥

---

(१) परिच्छिन्ना वेक्षणमिति वं० पु० पा० ।

अधोमुखौ करौ श्लिष्टौ प्रसृताङ्गुलिसंयुतौ ।
विदध्यात् स्थापनी मुद्रा सर्वा संस्थापनी मता ॥३४॥
अंगुष्ठाग्रनखाऽऽश्लिष्टकनिष्ठामध्यमुष्टिकौ ।
करौ सुश्लिष्टनखरौ मुद्रैषा सन्निरोधिनी ॥३५॥
ऋजुतर्जनिमुष्टिभ्यां कराभ्यां पार्श्वभूमितः ।
व्यत्यस्योपकराभ्रान्त्योपक्रमे तौ निवेशयेत् (१) ॥३६॥
एषाऽवगुण्ठनी मुद्रा सन्निधानकरी पुनः ।
मुद्राञ्जलिस्तु विज्ञेया प्रसृता मुकुलापि वा (२) ॥३७॥
बाणकोदण्डमुद्रा स्यादृज्वङ्गुष्ठेन मुष्ठिना ।
पाशमुद्रा तु तेनैव तर्जन्यङ्गुष्ठयोगतः ॥३८॥
कनिष्ठानामिकयोः पृष्ठे स्यादङ्गुष्ठस्तु तर्जनी ।
कुटिला ऋजुमध्यस्था (३) मुद्रासावङ्कुशाभिधा ॥३९॥

---

अधोमुखावित्यादिना सन्निरोधिनीत्यन्तेन श्लोकद्वयेन सर्वासां देवतानां साधारणस्थापनतन्निरोधनमुद्राद्वयविरचनक्रममुपदिशति । तत्र सन्निरोधनं नाम---देवताया अनन्यचित्तत्वप्रार्थनम् ॥३४॥३५॥

ऋज्वित्यादिना मुकुलापि वा इत्यन्तेन श्लोकद्वयेनावगुण्ठनमुद्राविरचनक्रमं सन्निधापनमुद्राविरचनक्रमं चोपदिशति। तत्र उपक्रमे-दक्षिणकरोपक्रमे वामकरस्य विश्रान्तिः वामकरोपक्रमे दक्षिणकरस्य विश्रान्तिश्चेत्यर्थः । अवगुण्ठनं नाम अयोग्यदृष्ट्यविषयत्वापादनपरम् । सन्निधापनं नामाभिमुख्येनोपचाराङ्गीकरणप्रार्थनपरम् ॥३६॥३७॥

बाणेत्यादिना श्लोकेन बाणमुद्राविरचनक्रमं पाशमुद्राविरचनक्रमं चोपदिशति । तत्र तर्जन्यङ्गुष्ठ योगतः—तर्जन्यङ्गुष्ठयोरग्रयोगत इत्यर्थः ॥३८॥

कनिष्ठेत्यादिना श्लोकेन अङ्कुशमुद्राविरचनक्रममुपदिशति—तत्र ऋज्वाकारमध्यमाङ्गुलिश्लिष्टेत्यर्थः । एतास्तिस्रो हेतिमुद्राः देवतायाः स्वरूपत्वप्रति-

---

(१) व्यात्यास्योपक्रमोद्भ्रान्त्योपक्रमे तौ निवेशयेत् इति मू० पु० पा० ।

(२) प्रसृता मुकुला शिवा इति मू० पु० पा० ।

(३) मुद्रा सर्वाङ्कुशाभिधा इति मू० पु० पा० ।

खेचर्या वक्ष्यमाणाया मध्यमे करपृष्ठगे (१) ।
तर्जन्यौ ऋजुसंश्लिष्टे मुद्रैषोक्ता नमस्कृतौ ॥४०॥
कनिष्ठाऽनामिका मध्या नखैरन्योन्यसङ्गता ।
कृत्वाऽङ्गुष्ठौ कनिष्ठास्थौ ऋजू कुर्याच्च तर्जनी ॥४१॥
सर्वसंक्षोभणी मुद्रा त्रैलोक्यक्षोभकारिणी ।
एतस्या मध्यमे देवि ! तर्जनीवत्कृते सति ॥४२॥

---

पत्तौ तत्तत्करस्थानेषु तत्तदायुधानां परिभावनम् । एताः स्वात्मनो देवताभावेनैव (२) विरचनीयास्तत्तत्स्थानेषु । समन्त्रविरचने तन्मन्त्रोपेतं विरचयेदिति सम्प्रदायार्थः ॥३९॥

खेचर्या इत्यादिना श्लोकेन नमस्कारमुद्राविरचनक्रममुपदिशति । तत्र नमस्कृतिर्नाम वन्दनीयस्याङ्गत्वेन स्वात्मपृथग्भावेनाभिनयप्रदर्शनमिति । अत्युपह्वरः (३) सम्प्रदायार्थः । तेनैव सर्वत्र प्रणामस्य प्रसादापादकत्वम् । स्थापननमस्कारान्तानां पञ्चानां मुद्राणां प्रदर्शनं मूलविद्यातृतीयखण्डेन कुर्यादिति सम्प्रदायः॥४०॥

कनिष्ठेत्यादिना कारिणीत्यन्तेनार्द्धाधिकेन श्लोकेन संक्षोभणीमुद्राविरचनक्रममुपदिशति । तत्र तर्जनी—तर्जन्यावित्यर्थः । त्रैलोक्यक्षोभकारिणी—सुखकारिणी (४) । सर्वदेवतानां सर्वयोषितां च एतद्दर्शनात् हृदयोल्लासो भवतीत्यर्थः ॥४१॥

एतस्या इत्यादिना योषितामित्यन्तेनार्द्धद्वयेन श्लोकेन सर्वविद्रावणीमुद्राविरचनक्रममुपदिशति । तत्र एतस्याः—संक्षोभणीमुद्रायाः । मध्ये—अङ्गुली इति शेषः । देवीति संबुद्धिः । तर्जनीवत्कृते—ऋजूकृते स्यातामित्यर्थः । सति—एवं कृते सति इत्यध्याहरणीयम् ॥४२॥ सर्वविद्रावणी—सर्वासां देवतानां वशीकरणात्—सर्वासां योषितां योनेश्च विद्रावणात् ।

---

(१) करपृष्ठके इति मू० पु० पा० ।
(२) भावने इति सो० पु० पा० । भावने च इति टी० पु० पा० ।
(३) पंकरः इति सो० पु० पा० ।
(४) प्रथा कारिणी इति टी० पु० पा० ।

सर्वविद्राविणी मुद्रा सर्वासामपि योषिताम् ।
ताभ्यामङ्कुशरूपाभ्यां संश्लिष्टाऽऽकर्षणी मता ॥४३॥
परिवृत्ताङ्गुली कृत्वा नखाश्लिष्टतलौ करौ ।
अङ्गुष्ठौ तर्जनीश्लिष्टौ नखैरावेशकारिणी ॥४४॥
कराग्रे प्रसृते कृत्वा व्यत्यस्येत् तत्कनिष्ठिके ।
तदग्राश्लेषतो भुग्ने मध्यमेऽनामिके ऋजू ॥४५॥
तन्नखस्थे तु तर्जन्यावङ्गुष्ठौ मध्यमोपरि ।
इयमुन्मादिनी मुद्रा सर्वोन्मादनकारिणी ॥४६॥
अस्यास्त्वनामिके भुग्ने तर्जन्यावङ्कुशाकृती ।
एषा महाङ्कुशा मुद्रा स्तम्भनाऽऽकर्षकारिणी ॥४७॥
सव्यदक्षकरौ सम्यक् व्यत्यस्येत्कूर्परोपरि ।
मणिबन्धे च बध्नीयादङ्गुली मध्यपृष्ठयोः ॥४८॥

---

ताभ्यामित्यादिना श्लोकोत्तरार्द्धेनाकर्षणीमुद्राविरचनक्रमम् उपदिशति । तत्र ताभ्यां अङ्कुशरूपाभ्यां—प्राग्वदङ्कुशरूपेण युक्ताभ्यां मध्यमातर्जनीभ्यां संश्लिष्टा अनामिकयोरिति शेषः । एतदुक्तं भवति—प्रागुक्तद्राविणीमुद्रैवानामिकाद्वये अङ्कुशाकारमध्यमातर्जनीसंश्लेषात्—आकर्षणी मुद्रा स्यात् । आकर्षः समीपानयनम् । आगत्य निजवाञ्छा(याः) कारित्वे स्थैर्यमित्यर्थः ॥४३॥

परिवृत्तेत्यादिना श्लोकेनाऽऽवेशनमुद्राविरचनक्रममुपदिशति । तत्र परिवृत्ताङ्गुली - व्यत्यस्ताङ्गुली । आवेशकारिणी—देवताभावोद्बोधनकारिणी ॥४४॥

कराग्रेत्यादिना कारिणीत्यन्तेन श्लोकद्वयेनोन्मादिनीमुद्राविरचनक्रममुपदिशति । तत्र सर्वोन्मादकारिणी—सर्वयोषितामुन्मादकरी क्लेदनकरीत्यर्थः ॥४६॥

अस्या इत्यादिना श्लोकेन महाङ्कुशमुद्राविरचनक्रममुपदिशति । तत्र अस्याः—उन्मादिनीमुद्रायाः । भुग्ने — अङ्गुष्ठाग्राश्लेषतः ॥४७॥

सव्येत्यादिभिर्देवता इत्यन्तैस्त्रिभिः श्लोकैः खेचरीमुद्राविरचनक्रमम् उपदिशति । तत्र मध्यपृष्ठयोः—मध्यमाङ्गुलिपृष्ठयोः । खेचरी—खेचरत्वसिद्धिकरी । अत्र मुद्राविरचनप्रतिपादकेषु ग्रन्थेषु सुगमत्वात् व्याख्या न लिख्यते ॥४८॥४९॥५०॥

विधाय भुग्ने तर्जन्यावङ्गुष्ठौ कारयेदृजू ।
कनिष्ठाऽनामिके कुर्याद्व्यत्यस्ते करपृष्ठगे ॥४९॥
इयं सा खेचरी मुद्रा ललिताप्रीतिकारिणी ।
अस्या विरचनेनैव सर्वाः सिद्ध्यन्ति देवताः ॥५०॥
मध्यमा मध्यपार्श्वाधः कनिष्ठाग्रे विपर्ययात् ।
अनामिकेऽधोव्यत्यस्ते तर्जन्यावङ्कुशाकृती ॥५१॥
इतरे तन्नखाग्राग्रे बीजमुद्रेयमीरिता ।
कनिष्ठाङ्गुष्ठसंश्लेषा महायोनिस्त्रिखण्डिका ॥५२॥
कनिष्ठाऽनामिकामध्या व्यत्यस्ताः पृष्ठतः क्रमात् ।
वलितावूर्द्ध्वयोगेन (१) ऋजुतर्जनिकौ करौ ॥५३॥

---

मध्यमेत्यादिना त्रिखण्डिका इत्यन्तेन श्लोकद्वयेन बीजमुद्रारचनाक्रमं महायोनिमुद्रारचनाक्रमं चोपदिशति । तत्र विपर्य्ययात्—विपरीते स्यातामित्यर्थः । बीजमुद्रा—सर्वसिद्धिकारणत्वात् ॥५२॥

कनिष्ठेत्यादिना समीरितमित्यन्तेन श्लोकद्वयेन शक्त्युत्थापनमुद्राविरचनक्रममुपदिशति । तत्र समाधिः—सम्यगाधीयते इति समाधिः स्वात्मनि देवताऽहम्भाव इत्यर्थः । मूर्तीकरणं—देवताया मूर्तित्वेन स्वदेहस्य कल्पनमित्यर्थः ॥५४॥

मुद्रा इत्यादिभिः शिवेत्यन्तैः पञ्चभिः श्लोकैर्मुद्राणां त्रैविध्यं तद्वासनां मुद्राशब्दनिर्वचनं तदुपपत्त्यादिकं चोपदिशति । तत्र तत्त्वं—तद्भावः याथार्थ्यमित्यर्थः । अङ्गुष्ठतः क्रमात्—अङ्गुष्ठमारभ्य व्योमादिपृथिव्यन्तक्रमात् । माया—स्वस्वरूपस्य प्रपञ्चस्यात्मज्ञानतिरोधानं(२)त्वत्प्रसादात्—त्वदात्मसिद्धेः रातीति रादाने इति धातोर्निष्पन्नः ददातीत्यर्थः । स्वल्पभेदात् कोपहर्षावित्यत्र प्रहारप्रणामयोर्मुष्टेरैकरूप्ये मणिबन्धे किञ्चिद्वक्रता आर्जवं स्वल्पभेद इत्युच्यते, हर्षविपरीतं कोपं कोपविपरीतं हर्षं स्वल्पे तदुक्तं भवति । प्रहारप्रणामयोर्वक्रावक्ररूपाया एकस्या मुष्टेः कोपप्रसादयोरुद्भावकत्वे प्रसादप्रतिपादिका मुष्टिर्मुद्रासंज्ञिका कोपप्रतिपादिका मुष्टिरेवेति ॥५८॥

---

(१) ऊर्द्ध्वयोगेन इति सो० पु० पा० ।

(२) प्रपञ्च स्वात्मज्ञान निरोधनमिति सो० पु० पा० ।

शक्त्युत्थापनमुद्रैषा जपपूजासमाधिषु ।
मूर्त्तीकरणमेतस्या रचनेन समीरितम् ॥५४॥
मुद्राः स्युस्त्रिविधा देवि ! रचनामन्त्रतत्त्वतः ।
स्थूलसूक्ष्मपराख्याता स्तत्त्वैविध्यं शृणु प्रिये ! ॥५५॥
रचनामन्त्रयोरूपं कथितं तव साम्प्रतम् ।
तत्त्वरूपाण्यङ्गुलयो भूतान्यङ्गुष्ठतः क्रमात् ॥५६॥
तत्तद्वात्यासरचना दर्शनेन तु कथ्यते ।
तव मायाबहिर्भूतस्त्वत्प्रसादादहन्त्विति ॥५७॥
मुदं रातीति मुद्रा स्यात्न्येनैका (?) मुष्टिरेव तु ।
स्वल्पभेदात् कोपहर्षौ प्राणिनां जनयत्यतः ॥५८॥
तेनैव सर्वदेवानां मुद्रा हर्षप्रदा मता ।
पूजाकाले दर्शनीया मुद्रास्ताः सर्वदा शिवे ! ॥ ५९ ॥

---

त्रिलोहेत्यादिना शिवेत्यन्तेन श्लोकद्वयेन पञ्चविधमर्घ्यपात्रमर्घ्यकल्पनप्रकारादिकं चोपदिशति। तत्र त्रिलोहशब्देन सुवर्णरजतताम्राण्युच्यन्ते। एकस्मिन्नन्यतमे। अर्घ्यकल्पनं—पञ्चमपटले वक्ष्यमाणप्रकारेण कल्पिते तस्मिन्नर्घ्यजले धेनुयोनिमुद्रे दर्शयेत्। धेनुमुद्राबन्धस्तु व्यत्यस्ताङ्गुलिकममञ्जलिं बध्वा वामदक्षिणतर्जनीद्वयं दक्षिणवाममध्यमाङ्गुलिभ्यां दण्डवत्संश्लेष्य तद्वद्वामदक्षिणे कनिष्ठाद्वयं दक्षिणवामानासिकाभ्यां (दण्डवत्संश्लेष्य तद्वामदक्षिणे कनिष्ठाद्वयं दक्षिणवामानामिकाभ्यां) दण्डवत्संश्लेषयेत्। एषा सुरभिमुद्रा। तद्दर्शनप्रकारं गुरुमुखादवगच्छेत्। तद्दर्शनानन्तरं षडङ्गनित्यातार्तीरेकैकं दशवारतः जपेनेति (१)। षडङ्गनित्यामन्त्राणामेकवारं मूलविद्यातृतीयखण्डस्य दशवारं जपे क्रमो वा समर्चनं वेतरार्थः। तदनु तद्दिननित्याविद्यया त्रिखण्डरूपया मूलविद्यया च त्रिवारमभ्यर्चयेत् जपेद्वेत्यानुषङ्गिकोऽर्थः। विद्यारूपेण—प्रोक्तक्रमतः एतदर्घ्यजलस्य विशेषणम्। विद्यया—ललितया त्रिखण्डेनेत्यर्थः। अभ्युक्षणेन विद्यात्मतापादनम् ॥६०॥६१॥

---

(१) जपेनेति इति व० पु० पा०। जपेत् इति सी० पु० पा०।

त्रिलोहकाचमृत्पात्रेष्वेकस्मिन्नर्घ्यकल्पनम् ।
षडङ्गनित्यातार्तीयैरेकैकं दशवारतः ॥६०॥
जपेन विद्यारूपेण प्रोक्षयेदर्घ्यवारिणा ।
स्वात्मपूजोपकरणान्यशेषं विद्यया शिवे ! ॥६१॥
लोहितां ललितां बाणचापपाशसृणीः करैः ।
दधानं कामराजाङ्कि यन्त्रितां मुदितां स्मरेत् ॥६२॥
काम्यध्यानोक्तरूपेण (१) समेतां शक्तिभिर्वृताम् ।
नित्यार्चनेषु सर्वत्र प्रोक्तं नैमित्तिकार्चने ॥६३॥
मध्यप्रधानदेव्यास्तु समुल्लासात्मकत्वतः ।
नवावरणशक्तीनां ध्यानं देव्या समं भवेत् ॥६४॥
कामाङ्कयन्त्रादन्यत्र भूषावर्णायुधादिकम् ।
तत्समं परमेशानि ! चक्रस्थानामशेषतः ॥६५॥
अणिमा लघिमा पश्चान्महिमा तदनन्तरम् ।

---

लोहितां (२) इत्यादिना अर्चने इत्यन्तेन श्लोकद्वयेन ललिताया नित्यनै-मित्तिकयोर्ध्यानमुपदिशति । तत्र बाणचापपाशसृणीः करैः—दक्षिणाधोभुजादि-दक्षिणोर्ध्वभुजान्तं अप्रादक्षिण्येन चतुर्षु भुजेषु प्रोक्तक्रमेणायुधानां स्थितिः । यन्त्रि—तामित्यस्यार्थो गुरुमुखादेवावगन्तव्यः । मुदितां—आनन्दशतविग्रहत्वात् । काम्यध्यानोक्तरूपेणेति—नूपुरवीरवलयांशुकरचनास्वस्तिकहारग्रैवेयकाङ्गदवलय-मुद्रिकाकर्णाभरणमुकुटाद्युपेतरूपा च नित्यनैमित्तिकार्चनयोर्ध्यातव्येत्यर्थः ॥ ६२॥६३॥

मध्येत्यादिनाऽशेषत इत्यन्तेन श्लोकद्वयेन परिवारशक्तिवृन्दध्यानमुपदिशति । तत्र समुल्लासात्मकत्वतः । देव्यास्तु बहुस्यां प्रजायेय इति समुद्योगात् । कामाङ्क-यन्त्रादन्यत्रेत्यत्र रहस्यार्थो गुरुमुखादेवावगन्तव्यः ॥६४॥६५॥

अणिमेत्यादिभिः प्रथमावृतावित्यन्तैः पञ्चभिः श्लोकैः प्रथमावरणे चतुरस्रे

---

(१) काम्यार्चनोक्तरूपेण इति सो० पु० पा० ।
(२) लोहितमिति व० पु० पा० ।

तथेशित्वं वशित्त्वं च प्राकाम्या भुक्तिसंयुता ॥६६॥
इच्छारसयुताः सर्वाः कामाः स्युः सिद्धयो दश ।
बीजद्वयाद्याः सिद्धान्ताः सप्ताचर्या च संयुताः ॥६७॥
ब्राह्मी माहेश्वरी पश्चात् कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा तदनन्तरम् ॥६८॥
महालक्ष्मीति कथिताः शक्तयश्चतुरस्रगाः ।
एताश्चाष्टौ तद्वयाद्याः सप्ताचर्यन्तगाः क्रमात् ॥७०॥
द्वारकोणदिगासीना अध ऊर्द्ध्वं च संस्थिताः ।
प्रादक्षिण्येन ताः सर्वाः पूजयेत्प्रथमावृतौ ॥७१॥
कामं बुद्धिमहंकारं शब्दं स्पर्शं ततः परम् ।
रूपं रसं तथा गन्धं चित्तं धैर्यं स्मृतिं तथा ॥७२॥
नाम बीजं तथात्मा च अमृतं सशरीरकम् ।
बीजद्वयस्वराद्याश्च आकर्षिण्यन्तकाः क्रमात् ॥७३॥

---

शक्त्यष्टादशकस्य मन्त्रांस्तत्पूजाक्रमं चोपदिशति । तत्र तेषां श्लोकानां सुगमत्वात्तासां मन्त्रेष्वेकं प्रदर्श्यान्यानप्येवं योजयेदित्युच्यतेऽस्माभिः । यथा क्रीं श्रीं अणिमासिद्धिपादुकां पूजायामीत्यादि । द्वारे—पूर्वपश्चिमे । कोणाः—विदिशः दिशौ दक्षिणोत्तरौ, अधऊर्ध्वकल्पनं पूर्वपश्चिमद्वारोपकण्ठयोः । प्रथमावृतौ चतुरस्रे ॥६६॥६७॥६८॥६९॥७०॥७१॥

काममित्यादिभिः सुन्दरि इत्यन्तैस्त्रिभिः श्लोकैः षोड़शदले द्वितीयावरणे शक्तिषोड़शकस्य पूजनमन्त्रांस्तत्पूजाक्रमं चोपदिशति । तत्र आत्मा—आत्मानमित्यर्थः । सशरीरकं—शरीरमित्यर्थः । अत्रापि गूढ़ानां सुगमार्थत्वात् एकस्य मन्त्रस्वरूपं प्रदर्श्य एवमन्यदपि कल्पनीयमित्युच्यतेऽस्माभिः ग्रन्थविस्तृतिभीत्या । पश्चाद्दलं—देव्याः अग्रदलमित्यर्थः । क्रीं श्रीं (१)अकामाकर्षिणीनित्या—कलापादुकां पूजयामि । एवमन्येपि पञ्चदशमन्त्रा ऊहनीयाः ॥७२॥७३॥७४॥

---

(१) अं कामा इति टी० पु० पा० ।

नित्या कलेति च ततः सप्ताक्षर्याऽर्चयेत् क्रमात्।
पश्चाद्दलं समारभ्य वामावर्तेन सुन्दरि ? ॥७४॥
कुसुमा मेखला पश्चान्मदना मदनातुरा।
रेखा च वेगिनी पश्चादङ्कुशा मालिनीति च ॥७५॥
इयानङ्गादिकाः सर्वाः सप्ताक्षर्यन्तगा अपि।
प्राच्यादिदिक्षु स्वाग्रादिकोणेष्वर्च्याः प्रदक्षिणम् ॥७६॥
अष्टस्वपि च पत्रेषु तृतीयावरणे स्थिताः।
अन्तश्चतुर्दशारादौ पश्चिमादप्रदक्षिणम् ॥७७॥
संक्षोभणी तु प्रथमा विद्राविण्यप्यनन्तरा।
आकर्षिण्याह्लादनिका ततः सम्मोहिनीति च ॥७८॥
स्तम्भिनी जम्भिनी पश्चाद्वशङ्करी च रञ्जनी।
उन्मादिनी ततोऽज्ञेया ततः स्यादर्थसाधनी (१) ॥७९॥

---

कुसुमेत्यादिना स्थिता इत्यन्तेनाध्यर्द्धेन श्लोकद्वयेन तृतीयावरणे अष्टदलशक्त्यष्टकमन्त्रांस्तत्पूजाक्रमं चोपदिशति। तत्राप्येकमन्त्रप्रदर्शनेनान्ये सप्तमन्त्रा योज्याः—क्लीं श्रीं अनङ्गकुसुमापादुकां पूजयामि इत्यादि ॥७५॥७६॥

अन्तरित्यादिना अन्वर्थसंज्ञिका इत्यन्तेनार्धाद्यन्तेन श्लोकत्रयेण चतुर्थावरणे चतुर्दशारे शक्तिचतुर्दशकमन्त्रान् दशा(क्ष)रद्वयशक्तिपूजाक्रमं चोपदिशति। तत्र चतुर्दशा(क्ष)रादावित्यत्रादिशब्देन दशा(क्ष)रद्वयेपि देव्याः अग्रमारभ्य अप्रादक्षिण्येन पूजयेदित्युच्यते। वशङ्करि—वशङ्करी इत्यर्थः। इयसर्वादिकाः उक्तबीजद्वयोपरि सर्वशब्दं चतुर्दशानामादौ योजयेत्। शक्तिसप्ताक्षरी इत्यत्र शक्ति इत्यक्षरद्वयमेव गृह्यते न तु विसर्जनीयक्लींकाराविति सम्प्रदायः। क्रमेण—उद्दिष्टक्रमेण। शक्तिप्रत्येकं प्रतिकोणं देव्यग्रकोणमारभ्य पूजयेदित्यर्थः। क्लीं श्रीं सर्वसंक्षोभणीशक्तिपादुकां पूजयामि। एवमन्यान् त्रयोदशमन्त्रान् योजयेत् ॥७७॥७८॥७९॥

---

(१) साधिनी इति मू० पु० पा०।

सम्पत्तिपूरणी(१) मन्त्रमयी द्वन्द्वक्षयङ्करी ।
इयसर्वादिकाः सर्वा शक्तिसप्ताक्षरीयुताः ॥७९॥
पूज्याः क्रमेण देवेशि ! सर्वास्त्वन्वर्थसंज्ञिकाः (२) ।
अन्तर्दशारयुग्मे तु देवी सप्ताक्षरात्मिका ॥८०॥
सिद्धिसम्पत्प्रदे पश्चात्तृतीया तु प्रियङ्करी ।
चतुर्थी शक्तिराख्याता तथा मङ्गलकारिणी ॥८१॥
कामप्रदा ततो दुःखात्परतश्च विमोचनी ।
मृत्युप्रशमनी पश्चात्तथा विघ्ननिवारिणी ॥८२॥
अङ्गसुन्दरिका पश्चात्तथा सौभाग्यदायिनी ।
दशैताः शक्तयः पूज्या इयसर्वादिकाः क्रमात् ॥८३॥
ज्ञानशक्तिः तथैश्वर्यप्रदा ज्ञानमयी मता ।
प्रोक्ता सा पञ्चमी शक्ति स्तथा व्याधिविनाशिनी ॥८४॥
प्रोक्ताऽऽधारस्वरूपाऽन्या तथा पापहराऽपरा ।
उक्तैवमानन्दमयी तथा रक्षास्वरूपिणी ॥८५॥

---

अन्तर्दशारेत्यादिना क्रमादित्यन्तेनार्द्धादिना श्लोकत्रयेण पञ्चमावरणे पूज्यशक्तिदशकमन्त्रानुपदिशति। तत्र देवी सप्ताक्षरात्मिकाः देवी इति अक्षरद्वयम् तदनु सप्ताक्षरीं दशसु मन्त्रेषु। अन्तर्दशा(क्ष)रमन्त्रदशके च योजयेत् ॥८०॥ सिद्धिसम्पत्प्रदे—सर्वसिद्धिप्रदा सम्पत्प्रदा च। दुःखात्परतश्च विमोचनी—दुःखविमोचिनी इत्यर्थः। अन्यत् सुगमम् ॥८२॥ अङ्गसुन्दरिका—अङ्गसुन्दरीत्यर्थः। इयसर्वा(सा)दिकाः—उक्तबीजद्वयात्परं सर्वशब्द एतद्दशारशक्तिमन्त्राणामादितो योजयेत् क्लीं श्रीं सर्वसिद्धिप्रदादेवीपादुकां पूजयामि। एवमन्येऽपि नवमन्त्रा योजनीयाः ॥८३॥

ज्ञानेत्यादिना यजेदित्यन्तेन श्लोकत्रयेण षष्ठावरणे द्वितीयदशारे पूज्यशक्ति-

---

(१) सम्पत्प्रपूरणी इति मू० पु० पा० ।
(२) सर्वा तत्त्वार्थ संज्ञिता इति मू० पु० पा० ।

दशमी शक्तिरुदिता स्यादीप्सितफलप्रदा ।
द्वयसर्वादिकाश्चैताः षष्ठाऽऽवरणगा यजेत् ॥८६॥
अन्तरष्टस्वपि तथा पश्चिमादप्रदक्षिणम् ।
वशिन्यादीन् (१) यजेत् प्राग्वत् सप्ताक्षर्या नमः पदे ॥८७॥
मध्यं त्रिकोणमभितः शरांश्चापमथार्चयेत् ।
पाशमङ्कुशमित्येतच्चतुष्कं तद्भजान्तिके ॥८८॥
बीजान्युक्तानि नामानि नमोन्तानि महेश्वरि ! ।
नाथाँश्च पृष्ठतो देव्या जयिनीविमलान्तरे ॥८९॥

---

दशकमन्त्रानुपदिशति । तत्र ज्ञा—सर्वज्ञेत्यर्थः । प्राग्वत् क्लीँ श्रीँ सर्वज्ञा—देवीपादुकां पूजयामि । एवमन्यानपि नवमन्त्रान् योजयेत् ॥८४॥८५॥८६॥

अन्तरित्यादिना श्लोकेन सप्तमावरणे अष्टारे पूज्यशक्त्यष्टकस्य मन्त्राँस्तत्—पूजाक्रमं चोपदिशति । तत्र पश्चिमात्—अग्रमारभ्य प्राग्वदिति वर्गबीजादि-योजनविषयः सप्ताक्षर्या सार्द्धमिति शेषः । नमःपदे—न्यासक्रमप्रोक्तनमः—शब्दमपास्य तत्स्थाने सप्ताक्षरीमष्टसु मन्त्रेषु योजयेदित्यर्थः । क्लीँ श्रीँ अँ आँ इँ ईँ उँ ऊँ ऋँ ॠँ ऌँ ॡँ एँ ऐँ ओँ औँ अँ अः व्लूँ वशिनीवाग्देवतापादुकां पूजयामि (२) । एवमन्येपि मन्त्रा योजनीयाः । अत्रापि बीजद्वययोजनं प्रथमविधानात्—अन्यत्रानुविधानात् सर्वत्र ॥८७॥

मध्येत्यादिना महेश्वरीत्यन्तेनाध्यर्द्धेनैकेन श्लोकेनायुधानां पूजामन्त्रान् पूजा-क्रमं चोपदिशति । तत्र मध्यं त्रिकोणमभित इत्येतदुक्तं भवति । प्रधानदेवता—वाससर्वमध्यत्रिकोण मभितः तत्तद्भुजस्थानेषु (३)तत्तदायुधानि बाणाद्यङ्कुशान्तमर्च-येत् । बीजान्युक्तानीति । एतदुक्तं भवति—क्लीँ श्रीँ इति पूर्वोद्दिष्टबीज—द्वयान्ते याँ राँ लाँ वाँ शाँ द्राँ द्रीँ क्लीँ व्लूँ सः सर्वजम्भनेभ्यो बाणेभ्यो नमः इति बाणमन्त्रः । ततोऽपि क्लीँ श्रीँ इति प्रोक्तबीजद्वयान्ते थँ धँ सर्वमोहनाय धनुषे नम इति धनुर्मन्त्रः । तदनुच क्लीँ श्रीँ इति प्रोक्तबीजद्वयान्ते

---

(१) वशिन्यदि यजेत् इति मू० पु० पा० ।

(२) इत्येवमन्यानपि सप्तमन्त्रानपि योजयेत् इति टी० पु० पा० ।

(३) तत्तद्गुरुस्थानेषु इति टी० पु० पा० ।

मध्यस्थदेवी त्वेकैव षोड़शाकारतः स्थिता ।
यतस्तस्मात्तनौ तस्या अन्याः पञ्चदशार्चयेत् ॥९०॥
मध्यत्रिकोणकोणेषु पश्चिमादप्रदक्षिणम् ।
कामेश्वरीं सवज्रेशीं तथाच भगमालिनीम् ॥९१॥
पूर्वद्वयं ततो विद्या त्वेकैकं पीठनाम च ।
ततो नामानि शक्तीनां देवीसप्ताक्षरीयुतम् ॥९२॥
तैस्ताः समर्चयेत् पश्चात् मध्ये देवीं तथाऽर्चयेत् ।
द्वयं समस्तां विद्यां च पीठदेव्यभिधायुताम् ॥९३॥
देवीसप्ताक्षरोपेतमित्युक्तं तव पूजनम् ।
प्रतिचक्रं च मध्यस्थां विद्यया नवनामभिः ॥९४॥

---

क्रौँ आँ सर्ववशीकरणाय पाशाय नमः इति पाशमन्त्रः । ततोऽपि च श्रीँ क्रौँ इति प्रोक्त बीजद्वयान्ते सर्वस्तम्भनाय अङ्कुशायनमः इत्यङ्कुशमन्त्रः । अत्रापि बीजद्वययोजनं प्राग्वत् ।

नाथानित्यादिना श्लोकोत्तरार्द्धेन नवानां नाथानामर्चनस्थानमुपदिशति॥८८॥

मध्यस्थेत्यादिना श्लोकेन देव्याः षोड़शनित्यात्मकत्वं तेन तस्या विग्रहे अन्यासां पञ्चदशीनां तिथिनित्यानामर्चनं चोपदिशति ॥९०॥

मध्यत्रिकोणेत्यादिना समर्चयेदित्यन्तेन षड़क्षराधिकेन श्लोकद्वयेनाष्टमावरणे मध्यत्रिकोणकोणत्रये पूजनीयशक्तित्रयं तन्मन्त्रांस्तत्पूजाक्रमं चोपदिशति। तत्र पश्चिमाद्देव्यग्रकोणमारभ्य विद्याया एकमेकं खण्डं एकैकस्याः शक्तेरित्यर्थः। पीठानि कामरूपपूर्णगिरिजालंधराख्यानि त्रीणि, नामानि शक्तीनां कामेश्वरीवज्रेश्वरीभगमालिनीति त्रीणि। देवीसप्ताक्षरीयुतं—देवी इत्यक्षरद्वयात् परं (१) श्रीपूर्वां सप्ताक्षरीं योजयेत् इति। श्रीँ क्रौँ(२) मूलविद्याप्रथमखण्डं कामरूपपीठे कामेश्वरीदेवीश्रीपादुकां पूजयामि। एवमन्यौ द्वौ मन्त्रौ योजनीयौ। अत्र श्रीशब्दप्रयोगः सम्प्रदायात् ॥९२॥

---

(१) देवीपादानान्तरं इति सी० पु० पा०।
(२) क्रौँ श्रीँ इति टी० पु० पा०।

सप्ताक्षर्या समेतं तु पूजयेच्च तथाऽर्चयेत् ।
इयमेता इति प्रोक्ता गुणान्योगिन्य इत्यपि ॥९५॥
अभिधामावृतेरुक्ता पूजां गृह्णन्त्विति क्रमात् ।
देव्या गृह्णन्त्विति (१) भवेत्तत्त्वे विध्यं शृणु प्रिये ॥९६॥

पश्चादित्यादिना पूजनमित्यन्तेन दशाक्षराद्येनार्धद्वयेन नवमावरणे सर्वमध्ये देव्याः स्थूलरूपपूजनमुपदिशति । तत्र समस्तां विद्यां—प्रागुक्तां तुरीयां विद्याम् । पीठदेव्यभिधायुतां—पीठाभिधा देव्यभिधा चेति । तत्र पीठाभिधा ओड्यानपीठे इति । देव्यभिधा श्रीमहात्रिपुरसुन्दरी इति । देवीसप्ताक्षरोपेतं—प्राग्वद्देवी इत्यक्षरद्वयमुच्चार्य श्रीपूर्वां सप्ताक्षरीमुच्चरेदित्यर्थः । ऋीँ श्रीँ समस्तां मूलविद्यां ओड्यानपीठे श्रीमहात्रिपुरसुन्दरीदेवीश्रीपादुकां पूजयामि, अत्रापि श्रीशब्दद्वयप्रयोगः प्राग्वत् सम्प्रदायात् ॥८३॥

प्रति चक्रमित्यादिना भवेदित्यन्तेनार्द्धादिना त्रिपादान्तेनैकेन श्लोकेन देव्याः नवस्वावरणेषु प्रत्येकं नवनामभिस्तत्पूजनमन्त्रान्नव तत्पूजार्पणमन्त्रान्नव चोपदिशति । तत्र नवनामभिः—पञ्चमे पटले चतुर्दशपञ्चदशश्लोकाभ्यामुक्तैस्त्रिपुरे—त्यादिभिर्नामभिरुपेतैस्तत्रोक्तयोजनाप्रकारैश्च मन्त्रैः पूजयेदित्यर्थः । तत्र योजनाप्रकारो यथा—मूलविद्यात्रिपुरानित्यापादुकां पूजयामि । (२) इत्येवं क्रमेणान्या—नष्टौ योजयेत् । अत्र मन्त्रनवकेऽपि बीजद्वययोजनं न स्यादिति सम्प्रदायः । नवमे च श्रीशब्दद्वयप्रयोगः स्यात् सम्प्रदायतः । तत्—तदिति द्विविधं पूजनं इयमिति बीजयद्वयं । गुणान्—प्रकटादिकान् । श्रीशक्तिसंज्ञागुणान् । तेऽपि पञ्चमे पटले द्वादशत्रयोदशाभ्यां श्लोकाभ्यां प्रोक्ताः । योगिन्य इति प्रोक्ता इत्यत्रान्वेति । प्रोक्तेति दिव्यत्वात् । अभिधामावृते(३)र्नवानामावरणचक्राणां त्रैलोक्यमोहनादिकाः संज्ञाः । ताश्च पञ्चमे पटले नवदशमाभ्यां अभिहिताः । ते यथा—ऋीँ श्रीँ एताः प्रकटयोगिन्यस्त्रैलोक्यमोहने चक्रे पूजां गृह्णन्त्विति । एवमन्यानप्यष्टौ

(१) गृह्णात्विति सी० पु० पा० ।
(२) इदं क्रमेणान्यान्यदौ यो इति सी०पु० पा० । एवं क्रमेणेत्यादौ यो० इति वं० पु० पा० ।
(३) अभिधानावृते रिति सी० पु० पा० । अभिधानावृतेरिति वं० पु० पा० ।

स्थूलं समस्तया नाम्ना सूक्ष्मं मन्त्रतनुं तथा ।
पररूपं त्वर्पणेन विदितं पूजनं शिवे ॥९७॥
विद्या बीजत्रयं देवि तुरीयस्वरशेखरम् ।
तत्तुरीयस्वरूपं तु विन्दुत्रयवदीरितम् ॥९८॥
तदात्मकत्वं देव्यास्ते साधकस्य च यद्भवेत् ।
तद्भावनां शृणु प्राज्ञे ! महोदयकरीं शुभाम् ॥९९॥

---

मन्त्रान् योजयेत्। तत्र चरमस्तु—क्लीं८ स्रौं८ एषा अनिरहस्ययोगिनी सर्वानन्दमये महाचक्रे महापूजाफलं गृह्णात्विति। अत्रापि महाशब्दप्रयोगः सम्प्रदायात् ॥८४॥८५॥

तत्रे विधत्रमित्यादिना शिवे इत्यन्तेन पादाधिकेन मध्यस्थाया देव्याः स्थूलसूक्ष्मपरत्वेन त्रिरूपत्वमुपदिशति, तत्र स्थूलं—लोहितमित्यादिनोक्तं रूपम्। समस्तया—विद्यया तुरीयया विद्यया पूजयेदित्यर्थः। नामनाम्ना नामरूपया विद्यया सूक्ष्मं रूपं पूजयेदिति यावत्। मन्त्रतनुं—अक्षरविग्रहमित्यर्थः। एतत् सूक्ष्मरूपमित्यनेनान्वेति। देव्याः सूक्ष्मरूपमित्यक्षरात्मकमित्यर्थः। पररूपं—देशकालादिभिरनवच्छिन्नम्। अर्पणेन—पूजानिवेदनेन पूजयेदिति शेषः। देव्याः पररूपं पूजानिवेदनमन्त्रेण पूजयेदित्यर्थः। मङ्गलानि सर्वाणि देव्यै निवेदनीयान्येव। अतएव मङ्गलतरं तत्पूजनं च तस्यैव (१) निवेदनीयमिति न्यायेन सर्वत्र देवताभ्यस्तत्पूजनं च निवेदनीयमित्यर्थः। विदितं—पूजितं भवेदिति शेषः। विदित्वा पूजयेदित्यर्थः। एतदुक्तं भवति—देव्याः स्थूलं रूपं समस्ताख्यया तुरीयया विद्यया, सूक्ष्ममक्षरात्मकं रूपं नामरूपया विद्यया, परं रूपमर्पणविद्यया च पूजयामीति विदित्वा पूजयेत्। एवमन्येष्वष्टस्वपि बोद्धव्यम् ॥८६॥८७॥

विद्येत्यादिभिः भावयेदित्यन्तैस्त्रिभिः श्लोकैः गुरुमन्त्रदेवतात्मैक्ययोग—भावनामुपदिशति। अस्यार्थस्यातिरहस्यत्वादप्रकाश्योऽपि नाथाज्ञया विविच्योच्यते, विद्या बीजत्रयं—मूलविद्याखण्डत्रयं, तुरीयस्वरशेखरं—चतुर्थस्वरावसानं ईका-

---

(१) तस्यैव इति सो० पु० पा०।

ऊर्ध्वं विन्द्वात्मकं चक्रमधोविन्दुद्वयात्मकम्।
कुचरूपञ्च (३) तच्छेषैः शेषाङ्गानि च भावयेत् ॥१००॥
वायुतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति श्रीषोड़शनित्यातन्त्रे कादिमते ललितार्चनं
नाम चतुर्थं पटलम् ॥

---

रावसानं इत्यर्थः। तत्तुरीयस्वरूपं तस्य तुरीयस्वरूपस्य ईकारस्य स्वरूपमित्यर्थः। स्वरूपमिति लिपिरूपमुच्यते, विन्दुत्रयवदीरितं—सर्वासु लिपिषु तुरीयस्वरूपस्य विन्दुत्रयात्मता विद्यत एव, तेन चैतदात्मकत्वं गुरुदेवतासाधकानां प्रतिपादयति। तद्भावनां तदात्मत्वभावनाम्। महोदयकरीं—अखण्डात्मस्वरूपलाभात् ॥९९॥

ऊर्ध्वेत्यादिना श्लोकेन गुरुमन्त्रदेवतानां स्वात्मैक्यसिद्धिकरयोगभावनाक्रममुपदिशति। तत्र ऊर्ध्वं विन्द्वात्मकमिति। एतदुक्तं भवति—मूलविद्यायाः खण्डत्रयस्यापि (१) चतुर्थस्वरैकावसानत्वात् तत्स्वरूपस्य च विन्दुत्रयवत्वात्तदूर्ध्वं विन्दुनावदनं (२) अधः स्थितविन्दुद्वयेन कुचद्वयं, तदक्षरशेषरेखया तस्या देव्याः परिपूर्णावयवांश्च। एवं देवतामन्त्रयोरैकरूप्यं तेन गुरुस्वात्मनोश्च तत्स्वरूपस्थितं भावयन्निमां विद्यां जपेत्तेन तादात्म्यसिद्ध्या प्रोक्तानि फलानि सिद्ध्यन्त्येवेति। गुरोर्मन्त्रात्मकत्वं तन्मुखादवगन्तव्यम् ॥१०१॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य
तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्द-
नाथेन विरचितायां मनोरमाख्यायां व्याख्यायां ललिता-
नित्यानित्यसपर्याक्रमप्रकाशनपरं चतुर्थं पटलं परि-
पूर्णं परामृष्टम्।

---

(१) त्रयस्याथि इति वं० पु० पा०।

(२) अस्थितं विन्दु इति सी० पु० पा०। अथ विस्थितितविन्दु इति टी० पु० पा०।

(३) कम्बुद्वयञ्च इति सू० पु० पा० टीकानुसारेण कुचद्वयमित्येव पाठः।

## अथ पञ्चमं पटलम् ।

भावनेन तु तेनैव जपेद्विद्यासमाहितः ।
मन्त्रात्मनस्ते सायुज्यं सिद्ध्यत्येव न संशयः ॥१॥
विद्यातृतीयखण्डेन कुर्यात्पूज्योपचारकान् ।
पाद्यार्घ्याचमनं स्नानं वसनाभरणानि च ॥२॥
गन्धपुष्पं धूपदीपौ नैवेद्याचमनं पुनः ।
ताम्बूलमर्चनास्तोत्रं तर्पणं च नमस्क्रियाम् ॥३॥

---

ग्रन्थसङ्ख्या—चतुर्थे पटले यन्त्रं नास्ति व्याख्यानगामिनी ।
ग्रन्थसङ्ख्याऽष्टसप्तत्याऽभ्यधिकं द्विशतं भवेत् ॥

## अथ पञ्चमं पटलम् ।

पूर्वस्मिंश्चतुर्थे पटले ललितानित्याविद्यायाः गुरुमन्त्रदेवतात्मैक्ययोगभावनातन्नित्यपूजामुपदिश्यानन्तरं तस्या ललितादेव्याः नित्याराधनक्रमे प्रोक्तशेषादिकं कूर्मविभागान्तमुपदिशति—भावनेत्यादिना तथेत्यन्तश्लोकशतरूपेण पञ्चमेन पटलेन। तत्र भावनेनेत्यादिना श्लोकेन मन्त्रजपप्रकारं सिद्धेरव्यभिचारित्वं चोपदिशति। तत्र—तेनैव तु भावनेन—पूर्वं पटलावसाने गुरुमन्त्रदेवतास्वात्मनामैक्यरूपभावनायोगेनैवेत्यर्थः। सायुज्यं—तादात्म्यम् ॥१॥

विद्येत्यादिना श्लोकपूर्वार्द्धेन देवताया उपचारनिवेदनमन्त्रमुपदिशति। तत्र—तृतीयखण्डेनेत्युक्तेऽपि तद्दिननित्यया (१) समेतेन तेन तेकुर्यादिति, नाथाज्ञया तथा कर्तव्यमिति सम्प्रदायः ॥२॥

पाद्येत्यादिना नमस्क्रियामित्यन्तेनार्धाद्येन श्लोकेन तन्त्रसाधारणान् (२) षोड़शोपचारानुपदिशति। तत्र निवेद्याङ्गत्वात् द्वितीयमाचमनमुपचारत्वेन न गण्यते। तर्पणमिति चौद्रदुग्धनालिकेराम्बुफलद्रवार्घ्योदकेषु यथालाभं निवेदनमुक्तम्। नमस्क्रियां—मुद्रासमयप्रोक्तमुद्राः। एवं षोड़शसङ्ख्याकान् पूजोपचारान् कुर्यादित्यन्वयः ॥३॥

---

(१) नित्याविद्यासमेतेन इति टी० पु० पा०।

(२) तत्र साधारणानिति सी० पु० पा०।

एवं सम्पूज्य पुरतः प्रोक्तयोगसमन्वितम् ।
जपेत्सहस्रमथवा शतं तद्दिनजन्तु वा ॥४॥
ततो देव्याः प्रसादेन स्वात्मानं तत्समं स्मरेत् ।
न्यासत्रयं विधायाथ देव्यात्मा विहरेत्सुखी ॥५॥
एवं नित्यक्रमं यस्तु कुर्वन् गुरुपरो नरः ।
न तस्य कुत्रचित् कश्चित् कदाचित् क्लेशसम्भवः ॥६॥
यस्तस्यामङ्गलं क्लेशमुपेक्षां वा समाचरेत् ।
तस्यावयोः प्रसादेन तानि स्युर्लक्षणं हि तत् ॥७॥
नवावरणनामानि तत्तच्छक्त्याभिधास्तथा ।
शृणु यैरतुला सिद्धिस्तत्तच्चक्रेषु पूजनात् ॥८॥
त्रैलोक्यमोहनं बाह्यं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं सर्वसौभाग्यपरिदायकम् ॥९॥

---

एवमित्यादिना सुखीत्यन्तेन श्लोकद्वयेन पूजावसानकृत्यमुपदिशति। तत्र पुरतः—देव्यग्रे तद्दिनजं—तत्पूजादिनजम्। वा अवधारणे। प्रातःसन्ध्योक्त—नववारं, मध्यन्दिनसन्ध्योक्तषड्‌विंशद्वारं, सायंसन्ध्योक्तषोड़शवारं तद्दिन-घटिकासङ्ख्योक्तषष्ठिवारं चैवं एकविंशत्यधिकशतवारं जपेदित्यर्थः ॥४॥ प्रसादेन—देवभाववितीर्णतादात्म्यभावनासामर्थ्येन। देव्यात्मन्यासानन्तरं—देवता-ऽहम्भावयुक्तः सदा विचरेदित्यर्थः (१) ॥५॥

एवमित्यादिना तदित्यन्तेन श्लोकद्वयेन नित्यक्रमोपासकस्यानुभावमुप-दिशति। तत्र गुरुपरः तदायत्तसर्वव्यापारः ॥६॥ लक्षणं हि तत्—नित्य क्रमोपासकस्येति शेषः। एतदुक्तं भवति—नित्यक्रमोपासकस्यानुकूल्यप्राति-कूल्योपेक्षा ( नवावरणनित्यक्रमेक्षासवद्गुर्वपेक्षा कारिणी ) (२) अस्मदानुकूल्योपेक्षा स्तवाभ्यां कृतेन प्रसादेन सम्भवन्तीति ॥७॥

नवेत्यादिना श्लोकेन नवावरणानि तच्छक्तिनामानि च प्रस्तौति। तत्र यैः—नामभिः ॥८॥

---

(१) विरचयेदित्यर्थः इति टी० पु० पा०।

(२) ( ) एतदन्तर्गतो ग्रन्थः सो० पुस्तक एव वर्तते।

सर्वार्थसाधनं सर्वरोगतो हरमेव च ।
सर्वरक्षाकरं सर्वसिद्धिप्रदमतः परम् ॥१०॥
सर्वानन्दमयं मध्यविन्दुस्थानं शिवात्मकम् ।
एवं नवानि नामानि गुणयोगीनि पार्वति ! ॥११॥
प्रकटा बाह्यगा गुप्तास्ततो गुप्ततरास्तदा ।
सम्प्रदायास्तदन्तस्थाः कुलकौलनिगर्भिकाः ॥१२॥
रहस्याः स्युस्तदन्ताश्च परापररहस्यकाः ।
अतिपूर्वरहस्यास्तु मध्यस्थाः स्थूलविग्रहाः ॥१३॥
त्रिपुरा त्रिपुरेशी स्यात्सुन्दरी सुरवासिनी ।
श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ॥१४॥

---

त्रैलोक्येत्यादिभिः पार्वतीत्यन्तैः त्रिभिः श्लोकैर्नवावरणचक्राणां अन्वर्थानि नवनामान्युपदिशति। तत्र सर्वसंक्षोभणं—सर्वसंक्षोभकरम् सम्यक् प्रथाकरं—प्रसिद्धिकरमित्यर्थः। परिदायकमित्यत्र परि इत्युपसर्गः श्लोकपूरणार्थः। सर्वसौभाग्यदायकमित्यर्थः ॥९॥ सर्वरोगतो हरं—सर्वरोगशब्दात् परं हरशब्दं योजयेत्—सर्वरोगहरमित्यर्थः। सर्वसिद्धिप्रदं—सर्वसिद्धिमयत्वात् सर्वसिद्धिप्रदं सर्वसिद्धिमयमिति सम्प्रदायः ॥१०॥ विन्दुस्थानं—मध्यमविन्दुस्थानम्। सर्वानन्दमयं—शिवात्मकमित्यन्वयः। विन्दुस्थानं—ब्रह्मवत् सर्वमध्यमित्यर्थः। गुणयोगीनि—अन्वर्थानि। पार्वतीति सम्बुद्धिः ॥११॥

प्रकटा इत्यादिना विग्रहा इत्यन्तेन श्लोकद्वयेन नवावरणशक्तीनामन्वर्थानि नवनामान्युपदिशति। तत्र तासां विशेषणानि निरुपाधिकस्वभावानीति सम्प्रदायः। तत्र तृतीयचरमावरणशक्त्योर्व्यस्तगुणसंज्ञाशब्दाः यथा गुप्ततरा—योगिन्य इत्यादि। अतिरहस्या योगिनी इति। अन्यास्तु समस्तगुणसंज्ञाशब्दाः यथा गुप्तयोगिन्य इत्यादि। कुलकौलाः—कुलोत्तीर्णा इति चोभयं सम्प्रदायवत् यथा नाथादेशमनुष्ठेयमित्यर्थः। निगर्भिकाः—निगर्भा इत्यर्थः ॥१२॥ परापररहस्यकाः—परापररहस्या इत्यर्थः। अतिपूर्वरहस्या—अतिशब्दपूर्वरहस्याः अतिरहस्या इत्यर्थः। मध्यस्थाः स्थूलविग्रहाः—मध्यस्थाः सविग्रहाः अतिरहस्या इत्यर्थः। अत्र स्थूलं रूपं सूक्ष्मरूपस्य मन्त्रस्यावरणं परं रूपं देशकालाकारै

मध्यषट्के तु पुरतस्त्रिपुरेतिपदान्वितैः ।
विद्यासम्पाद्यरीमध्ययोजितैरेभिरर्चयेत् ॥१५॥
पूजाक्रमं तद्विशेषान् विद्यासाधनकर्म च ।
साधकव्रतचर्यां च सिद्धिचिह्नानि मेव (?) च ॥१६॥
त्रिपुरात्मानमात्मानं भावयेन्मूर्ध्नि रन्ध्रगम् ।
ज्योतिरूपं च नाथाङ्घ्रिमूर्तिष्टे (?) न्यस्तविग्रहाः ॥१७॥
नानावर्णाऽऽयुधाकारवाहनाभरणाः स्त्रियः ।
सर्वदा सर्वगाः सर्वसिद्धिदा बलिदानतः ॥१८॥

---

रनियन्त्रितम् । स्थूलसूक्ष्मरूपे पररूपस्य प्रापके अव्यवच्छिन्नतया (१) आवरकवज्ज्ञात (२) इत्यावरणमितुरपह्वरः सम्प्रदायार्थः ॥१३॥

त्रिपुरेत्यादिनाऽर्चयेदित्यन्तेन श्लोकद्वयेन देव्याः नवस्वावरणेषु प्रत्यावरणं प्रतिनियतानि नवनामानि च तैस्तत्र तत्र पूजार्थं मन्त्रयोजनाक्रमं चोपदिशति । तत्र त्रिपुरेशी—त्रिपुरेश्वरी इत्यर्थः । मध्यषट्के—सुन्दर्याद्यम्बान्तेषु षट्सु नामसु । तत्र पुरवासिनो इत्यत्र त्रिपुरवासिनो इतार्थः । त्रिशब्दमेव योजयेदिति च सम्प्रदायः । विद्या—श्रीविद्या । मनुयोजनाप्रकारः पूर्वस्मिन् पटलेऽभिहितोऽस्माभिः ॥१४॥१५॥

पूजाक्रमेत्यादिना श्लोकेनाथ पञ्चप्रश्नान् करोति । तत्र तद्विशेषान्—सङ्कोचक्रमरूपान् । सिद्धिचिह्नानि—विद्यासिद्धिचिह्नानि ॥१६॥

त्रिपुरात्मानमित्यादिना दानत इत्यन्तेन श्लोकद्वयेन साधकस्य प्रातः प्रबोधसमयविधातव्यमुपदिशति । तत्र उत्थानसमये । मूर्ध्नि भावनानन्तरं तदनन्तरं न्यासः त्रिपुरात्मानं—वक्ष्यमाणगमागमानुसन्धानपुरःसरं देवीस्वरूपं स्वस्वरूपं भावयेदित्यर्थः । बलिदानतः—षोडशाक्षरमन्त्रेणेति शेषः । पुष्पान्तव्यञ्जनसहितो बलिः तद्दानतः सर्वसिद्धिदा भवेयुरिति शेषः । एवं ध्यात्वा सर्वसिद्धये प्रातर्बलिं दद्यात् इति शेषः ॥ १७॥१८ ॥

---

(१) अथावच्छिन्नतया इति सो० वं० पु० पा० ।

(२) ज्ञान: इति सो० पु० पा० । ज्ञाव: इति वं० पुस्तके पाठः ।

रक्तगन्धाम्बरः स्रग्वी रक्तभूषादिभूषितः (१) ।
प्रसन्नचेताः कर्पूरवासिता स्यावराङ्गवान् (२) ॥१९॥
पद्मासनः प्राग्वदनः प्राणानायम्य संयतः ।
षोड़शाक्षरमन्त्रेण बलिं दत्त्वाऽर्चयेद्गुरून् ॥२०॥
मूर्ध्नि तस्याज्ञया पश्चात् पूजां कुर्याद्यथाविधि ।
नाथं च तन्मयीभूतं ध्यात्वाऽऽत्मानं तदात्मकम् ॥२१॥
नवरत्नमयं द्वीपं नवखण्डविराजितम् ।
मातृकाद्येन तन्नाम्ना नमोन्तेन समर्चयेत् ॥२२॥

---

रक्तेत्यादिभिस्तदात्मकमित्यन्तैस्त्रिभिः श्लोकैः सपर्यासमारम्भक्रममुपदिशति। तत्र—पद्मासनः। उपरिष्टाद्वक्ष्यमाणत्वादिह नोच्यते। प्राणानायम्य—प्राणायामं कृत्वा। उपरिष्टाद्वक्ष्यमाणमपि प्राणायामं किञ्चिदत्र व्याकरोमि दक्षिणनासारन्ध्रेण वामनासारन्ध्रनिरोधेन श्वासं मारुतं यथा शक्त्या निर्गमय्य अनन्तरं दक्षिणनासारन्ध्रनिरोधेन वामनासारन्ध्रेण यथाबलं प्रवेश्य श्वासमारुतं, पुनरप्येवं रेचकं पूरकं च कृत्वा यथाबलं तमन्तर्विधाय पश्चाच्छनैः शनैः तं मुञ्चेदिति। एवं सर्वत्र प्राणायामक्रमः। संयतः—सकलान्यविषयनिवृत्तबाह्यान्तःकरणः। षोड़शाक्षरमन्त्रेण—तृतीयपटलावसानोपदिष्टस्वरूपेण बलिं दत्त्वा प्राग्वदर्चयेत्। गुरून् मूर्ध्नि—ब्रह्मरन्ध्रे स्थितान् यथासम्प्रदायं पूजयेदित्यर्थः। तस्येति स्वनाथविषयः। यथा विधि—वक्ष्यमाणप्रकारेण। नाथं च तन्मयीभूतं—नाथ एव देवीरूपेण स्थित इति बुद्ध्वेत्यर्थः॥ १९ ॥२०॥२१॥

नवरत्नेत्यादिभिर्मातर इत्यन्तैरष्टभिः श्लोकैर्देवीनिवासस्थानार्चनक्रमं तन्मन्त्रांश्चोपदिशति। तत्र मातृकाद्येनेति। अकारादिक्षकारान्तान्येकपञ्चाशदक्षराणि सबिन्दूनि बीजद्वयपुरस्सरमुच्चार्य तदुपरि तन्नाम तदनु च नमः शब्दं योजयेदित्यर्थः। यथा—क्लीं॰ श्रीं॰ अं॰ आं॰ इं॰ ईं॰ उं॰ ऊं॰ ऋं॰ ॠं॰ ऌं॰ ॡं॰ एं॰ ऐं॰ ओं॰ औं॰ अं॰ अः॰ कं॰ खं॰ गं॰ घं॰ ङं॰ चं॰ छं॰ जं॰ झं॰ ञं॰ टं॰ ठं॰ डं॰ ढं॰ णं॰ तं॰ थं॰ दं॰ धं॰ नं॰ पं॰ फं॰ बं॰ भं॰ मं॰ यं॰ रं॰

---

(१) भूषाविभूषिता इति सी॰ पुस्तके पाठः। (२) वसितास्यां वाराङ्गवान् इति सी॰पु॰ पा॰।

पुष्पं नीलं च वैडूर्य्यं विद्रुमं मौक्तिकं तथा ।
ईशान्मरकतं वज्रं गोमेदं पद्मरागकम् ॥२३॥
कल्पकोद्यानमन्त्रैश्च ऋतूँश्चापि समर्चयेत् ।
इन्द्रियाश्वस्वरूपाणि तत्र पश्चिमतो यजेत् ॥२४॥
इन्द्रियार्थान् गजान् (१) पूर्वे तन्नाम्नैव समर्चयेत् ।
पश्चिमादि तु मध्यान्तं विलोमान्नवरत्नकम् (२) ॥२५॥
कालो मुद्रा मातृका च रत्नं देशो गुरुस्तथा ।
तत्त्वं ग्रहाश्च मूर्तिश्च चक्रेश्वर्यन्तनामकः (३) ॥२६॥

---

लँ वँ शँ षँ सँ हँ लँ क्षँ नवरत्नद्वीपाय नमः इत्यनेन । अत्र प्रकरणे इन्द्रियार्थावधि नमोन्तेनैव तत्तन्नाम्ना पूजयेत् ॥२२॥

पुष्पमित्यादिना श्लोकेन नवरत्ननामान्युपदिशति—तत्र ईशान्मरकतमित्युक्तिः पश्चिमं पुष्परागमिति कुरुकुल्लापटले वक्ष्यमाणत्वात्(४)प्रादक्षिण्यक्रमं (५) प्रदर्शयति, ईशात् —ईशानदेशे इत्यर्थः ॥२३॥ कल्पकोद्यानं—ह्रीँ श्रीँ कल्पकोद्यानाय नमः । अत्रैव रत्नद्वीपे ह्रीँ श्रीँ ऋतुभ्यो नमः । इन्द्रियाणि—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानि दश । पश्चिमतः—देवीमण्डपस्याग्रतः ह्रीँ श्रीँ इन्द्रियाश्वेभ्यो नमः । इन्द्रियार्थान्—शब्दस्पर्शरूपरसगन्धवचनादानगतिविसर्गानन्दाख्यान् क्रमेण दश । पूर्वे देवीमण्डपस्य पृष्ठभागतः ह्रीँ श्रीँ इन्द्रियार्थगजेभ्यो नमः । नवरत्नकमर्चयेदिति ॥२४॥२५॥

कालो मुद्रा इत्यादिना श्लोकेन कालादिरूपनवरत्नमयानां नवानां खण्डानां प्रत्येकं नवनाथात्मनां पूजामन्त्रानुपदिशति । गुरुर्नाथ इत्यर्थः । तत्र कालस्य नवधात्वं घटिकायामाहोरात्रवारतिथिपक्षमासर्त्वब्दरूपतः । मुद्राया नवधात्वं प्रागुक्तसंक्षोभणादिभिः । मातृकाया नवधात्वं उपरिष्टाद्वक्ष्यमाणवर्गक्रमतः । रत्नस्य नवधात्वं प्रोक्तरूपतः । देशस्य नवधात्वं रत्ननवधात्ववत् । नाथानां नवधात्वं प्रोक्तक्रमतः । तत्त्वानां नवधात्वं ज्ञातृज्ञानज्ञेयरूपस्य त्रिकस्य पञ्चीकरणप्रक्रियया । एतन्नित्यत्वाङ्गीकारतः । ग्रहाणां नवधात्वं सुप्रकटमेव । मूर्तीनां नवधात्वं त्वगसृङ्मांसमेदोस्थिमज्जाशुक्रौजःप्राणात्मतः चक्रेश्वर्यन्तनामकाः ॥२६॥

---

(१) गतापूर्वे इति सू॰ पु॰ पा॰ । (२) विलोमानवरत्नकम् इति सू॰ पु॰ पा॰ ।
(३) नामका इति सू॰ पुस्तके पाठः । (४) त्वादप्रा इति सौ॰ पुस्तके पाठः ।
(५) क्रमेप्र इति वं॰ पुस्तके पाठः ।

उक्तक्रमेण सम्पूज्य (१) तत्तच्चक्रेश्वरी प्रिये ! ।
करुणातोयपरिखं मध्येमाणिक्यमण्डपम् (२) ॥२७॥
देशं कालं तथाऽऽकारं शब्दं कोणेषु पूजयेत् ।
रूपिणीशक्तिसहितं ततः संगीतियोगिनीः ॥२८॥
समस्तगुप्तप्रकटसिद्धयोगिनि (३) चक्रयुक् ।
सप्ताक्षरैरुपेतास्तु पूजयेत् सर्वमातरः ॥२९॥
रोचनाचन्द्रकाश्मीरलघुकस्तूरिकायुतम् ।
हेमादिपात्रे साधारे स्थापयेदर्घ्यमम्बुना ॥३०॥
भावयेद्वह्निसूर्येन्दुभूतानि परमेश्वरि ! ।
जपेच्च दशवारं तत्तर्पयेत्तेन योगिनी ॥३१॥

---

क्रमेणेति—प्रोक्ता एता नव चक्रेश्वरीः शक्तिस्वस्वनामान्ते चक्रेश्वरीं इति वदन् पूजयेदित्यर्थः। क्लीं स्रौं कालचक्रेश्वरीशक्तिपादुकां पूजयामि। एवमत्र (४) शक्तिशब्दः पारम्पर्यप्राप्तः। नवानां प्रत्येकं नवरूपत्वाद्बहुवचनम्। प्रिये इति देवीसम्बुद्धिः। करुणातोयपरिखमिति—देव्याः करुणामयतोयपरिपूर्णपरिखापरिवृतं माणिक्यमण्डपमित्यर्थः। क्लीं स्रौं करुणातोयपरिखाय नमः क्लीं स्रौं माणिक्यमण्डपाय नमः अत्रापि नमःशब्दयोजनं सम्प्रदायात् ॥२७॥

देशमित्यादिना सङ्कोचकारिकाः शक्तीरुपदिशति। तत्र—क्लीं स्रौं देशरूपिणीशक्तिपादुकां पूजयामि। एवमन्ये मन्त्रास्त्रयः तथा निरुक्त्यादिविलोमतः। अत्र देशकालाकारशब्दानां द्विरुपादानं कार्यकारणानुरूपत्वेन, तत्र कार्यरूपं नवधाभूतं प्रथमं, कारणरूपं द्वितीयम्। संगीतयोगिनीः—नृत्यगीतवाद्यविनोदिकाः शक्तीः क्लीं स्रौं संगतयोगीनीशक्तिपादुकाः पूजयामि। अत्रापि शक्तिशब्दयोजनं बहुवचनं च प्राग्वत् ॥२८॥

समस्तगुप्तेत्यादिश्लोकपूर्वार्द्धस्य अन्त्याक्षरवर्जं मन्त्ररूपमित्यर्थः। तत्र योगिनि—योगिनी इत्यर्थः। क्लीं स्रौं समस्तगुप्तप्रकटसिद्धियोगिनीचक्र—

---

(१) सम्पूज्यास्तत्र इति मू० पु० पा०।

(२) प्रियो करुणातोयेस्थि मध्ये माणिक्यमण्डपे इति सो० पुस्तके पाठः।

(३) योगिनीं इति मू० पु० पा०। (४) मन्यतेति टी० पु० पाठः।

आधारे हृदये रन्ध्रे विद्याखण्डत्रयं स्मरेत्।
लोहितं तत्प्रभावेधाल्लोहितं (१) च निजं वपुः ॥३२॥
प्राणायामं विधायाथ कृत्वोक्तकरशोधनम्।
आद्ययाऽथ तृतीयादिषष्ठान्ताभिः तथासनम् ॥३३॥

---

श्रीपादुकाः पूजयामि। अत्रापि बहुत्वाद्बहुवचनं श्रीशब्दप्रयोगश्च प्राग्वत्। सर्वमातरः—सर्वशक्तीरित्यर्थः। एतत्समाचरीयोजनं तत्तच्छक्तिसाधारणमिति यावत्। अष्टभिरेतैः श्लोकैरेतदुक्तं भवति। देहेन्द्रियरूपस्वविग्रहोदितशब्दकल्पितस्वरूपप्रादुर्भावा प्रतिपत्तव्या देवी इति ॥२९॥

ह्रीमित्यादिना योगिनीरित्यन्तेन श्लोकद्वयेन देवतायाः सपर्यार्थमर्घ्यकल्पनप्रकारं तद्विनियोगं चोपदिशति। तत्र चन्द्रः—कर्पूरम्। लघुः—अगुरुः ॥३०॥

परमेश्वरीति देवीसम्बुद्धिः। जपेच्च दशवारं तत्—तदिति विद्यायास्तृतीयखण्डमुच्यते, तेन—अर्घ्याम्बुना। योगिनी इति देव्याः परिवारभूताः शक्तीः कथयति। एतदुक्तं भवति—आधारचषकाम्बुनि वह्निसूर्यसोमात्मविद्याखण्डत्रयात्मकं (२) बुद्धा तस्मिन् न्यस्तानि पञ्चद्रव्याणि क्रमेण पृथिव्यादिपञ्चभूतात्मकान्याकलय्य प्रागुक्तक्रमेण धेनुयोनिमुद्रे प्रदर्श्य अम्बुमध्ये श्रीचक्रं च विभाव्य तत्र नित्याक्लिन्नापटले वक्ष्यमाणबाह्यादिक्रमात् षडङ्गमन्त्रैः षोडशनित्यामन्त्रैश्चैकैकवारं विद्यातृतीयखण्डेन दशवारं मूलविद्यादिननित्याभ्यां प्रतितिवारं चाभ्यर्च्य जपित्वा अर्घ्योदकेन प्रोक्तकार्याणि कुर्यात् ॥३१॥

आधार इत्यादिना विधायाथ इत्यन्तेन पादाधिकेन श्लोकेन प्राणायामकालभावनीयमुपदिशति—तत्र रन्ध्रे—ब्रह्मरन्ध्रे। तत्प्रभावेधात्—तेषां प्रभावेधात्। वेधः—तन्मयीभावः। आधारब्रह्मरन्ध्रगतयोरग्नीषोमात्मविद्याप्रथम—चरमखण्डयोस्तयोस्तेजसी क्रमेण ऊर्ध्वाधोमुखप्रसरे हृदयगतसूर्यात्ममध्यमखण्डेतेजस्यूर्ध्वाधःप्रसरणेन ताभ्यां सम्मीलितं भवति, एतदुक्तं भवति—मूलाधारस्थप्रथमखण्डवह्नितेजसा खचितं हृदयगतं द्वितीयखण्डसूर्यतेजःप्रसरं तेनानुषक्तं ब्रह्मरन्ध्रगततृतीयखण्डचन्द्रमस्तेजःप्रसरं च त्रीणि तेजांसि अविभक्ताकारमिलितरूपं अन्तर्बहिर्भावयेदिति। प्राणायामं प्राग्वत्, ललिताविद्याजपपूजा-

---

(१) तत्प्रभावेन लोहितं इति मू० पु० पा०।

(२) त्मकां बुद्धेति सो० पु० पा०।

पूजयेद्वीनमनसोर्मध्यस्थैर्नामभिर्युतम् ।
ततो द्वितीयया प्रोक्तषडङ्गानि समाचरेत् ॥३४॥
प्रसारिततलेनैव पाणिना हृदयं शिरः ।
प्रोक्ता शिखा तथा सम्यगधोऽङ्गुष्ठेन मुष्टिना ॥३५॥
तथाविधाभ्यां पाणिभ्यां वर्मस्कन्धादिनाभिगम् ।
तर्जनीमध्यमानामा प्रोक्ता नेत्रत्रये (च) क्रमात् ॥३६॥
प्रसारिततलाभ्यान्तु तालत्रयमुदीरितम् ।
सशब्दं तर्जनीज्येष्ठायोगादस्त्रमुदीरितम् ॥३७॥
दिग्विदिक्चोपरि तथा स्वाधो मध्ये च विघ्नहृत् ।
ततः कृत्वा वशिन्यादि न्यासं प्रागुक्तयोगतः ॥३८॥

---

समाधिषु प्राणायाम एवं विद्याखण्डत्रयरूपं तेजस्त्रयं भावनीयम् । अन्यत्र केवलं तेजस्त्रयं आधारत्रयगतं भावनीयम् ॥३२॥

कृत्वेत्यादिभिर्योगत इत्यन्तैस्त्रिपादाधिकैः पञ्चभिः (१) श्लोकैर्न्यासत्रयादिकमुपदिशति, तत्र आद्यया—पूर्वपटले वातः खसंयुत इत्याद्युक्तया । तृतीयादिषष्ठ्यन्ताभिस्ततस्तृभिर्विद्याभिरासनचतुष्टयं समर्चयेदित्यर्थः । बीजनमसोर्मध्यस्थैर्नामभिर्युतम् । प्रोक्तानां विद्याकूटाक्षराणामुपरि प्रत्येकं तत्तदासननाम चतुर्थ्यन्तमुक्त्वा ततो नमःशब्दं च योजयेदित्यर्थः । ह्रीं ऐं क्लीं क्लीं ह्रीं सौः देव्यात्मासनाय नमः । ह्रैं ह्स् क्लीं ह्सौः चक्रासनाय नमः । ह्सैं ह्स्क्लीं ह्सौं सर्वमन्त्रासनाय नमः । ह्रीं ऐं क्लीं सौः ब्लूं साध्यसिद्धाय नमः इत्यत्रासनमन्त्रचतुष्टये आदौ बीजद्वयं न संयोज्यते सम्प्रदायात् । द्वितीयया—पूर्वस्मिन् पटले हृच्छिर इत्यत्र प्रोक्तकुलसुन्दरीविद्यया । ऐँ क्लीँ सौँ हृदयाय नमः ऐँ क्लीँ सौः शिरसे स्वाहा ऐँ क्लीँ सौः शिखायै वषट् ऐँ क्लीँ सौः कवचाय हुम् ऐँ क्लीँ सौः नेत्रत्रयाय वौषट् ऐँ क्लीँ सौः अस्त्राय फट् ॥३३॥३४॥

प्रसारिततलेत्यादिभिर्हृदित्यन्तैस्त्रिभिरर्धश्लोकैः षडङ्गन्यासप्रकारमुपदिशति । तत्र तालत्रयं सशब्दं करतलयोः त्रिरास्फालनम् । त्रिः प्रोक्तया कुल-

---

(१) त्रिभिः पादाधिकैः इति सौ० पु० पा० ।

सप्तम्याऽऽवाहनं कुर्याद्विद्ययाऽथ त्रिखण्डया ।
अग्रस्थमध्यचक्रस्थयोनिमध्ये निवेश्य ताम् ॥३९॥
तथाविधां सावरणां ध्यात्वा मुद्रां प्रदर्शयेत् ।
प्रोक्ताः सप्तदशाथैनामुपचारैः समर्चयेत् ॥४०॥
जयिनीविमलामध्ये नाथान् नव यजेत्त्रिशः (१) ।
ततो देव्याः स्वमूर्तित्वान्नित्याः पञ्चदशापि च ॥४१॥
देवीमूर्तौ जपेत्तत्तद्वि(२)द्याभिस्तन्मयी क्रमात् ।
आरभ्य पश्चिमद्वारदक्ष(३)शाखामथार्चयेत् ॥४२॥
अभितश्चाष्टसु तथा दिक्ष्वधोर्ध्वं तथेरिताः ।
तथा ब्राह्म्यादिका अष्टौ पूजयेत् प्रथमावृतौ ॥४३॥

---

सुन्दरीविद्ययेति शेषः । सर्वत्र न्यासत्रये बीजद्वयाद्यता (४) न भवति । प्रागुक्त-योगतः—पूर्वपटलप्रतिपादितवर्णकूटाक्षरादियोगतः ॥३५॥३६॥३७॥३८॥

सप्तम्यावाहनमित्याद्यैः सुखोत्यन्तैः पञ्चविंशत्या श्लोकैर्देव्या नित्यपूजां नित्यहोमविधिं पूजावसानं (५) चोपदिशति, तत्र सप्तम्या विद्ययेति सम्बन्धः । पूर्वस्मिन् पटले हंसहृदित्याद्युक्तया त्रिखण्डया मुद्रयेतिशेषः । तथाविधां—पूर्वस्मिन् पटले लोहितामित्यादिश्लोकोक्तविग्रहां मुद्राः प्रदर्शयेत् । प्रोक्ताः सप्तदशस्थापनादि-हेतिचतुष्टयान्ताः पूर्वपटलोक्ताः सप्तदश मुद्राः प्रदर्शयेदित्यर्थः । उपचारैः—षोड़शभिः पञ्चभिर्वा, पञ्चोपचारास्तु गन्धपुष्पधूपदीपनैवेद्यानि ॥ ८३ ॥ ४० ॥

त्रिशः—त्रीन् त्रीन् दिव्यसिद्धमानुषान् देवीवामभागादि दक्षिणभागान्तं त्रिपङ्क्त्युपविष्टान् देव्यवेक्षिणः । तन्मयी—तत्तत्स्वरूपेणाप्यवस्थानमेतस्या एवे-त्यर्थः । क्रमात्—एकादिवृद्धिक्रमात्, दक्षशाखां द्वारस्य देव्याः सव्येतरभाग-शाखाम् ॥४१॥४२॥ अभित इति, अत्र प्रथमं दिक्षु, ततो विदिक्षु, तत्र तत्रापि देव्याः दक्षिणभागे, तथा अणिमादिवत् ब्राह्म्यादिकास्तत्र तत्र देवीसव्यभागे

---

(१) नाथान्वर्जयेत्त्रिश इति मू० पु० पा० ।
(२) यजेत्तत्तदिति सो० पु० पा० ।
(३) दक्षशाखामिति मू० पु० पा० ।
(४) बीजद्वयाद्यता इति टी० पुस्तके पाठः ।
(५) पूजां बलिदानमिति टी० पुस्तके पाठः ।

मूलविद्यायुतैः प्रोक्तनामभिर्मध्यतो यजेत् ।
नवस्वावृत्तिषु प्रोक्तैर्नवभिर्मनुभिः क्रमात् ॥४४॥
निवेदयेच्च तत्पूजां मुद्राः कुर्यान्नवैकशः ।
षोडशारे त्वष्टदले तथा तच्चतुरावृतौ ॥४५॥
प्रोक्ताभिः शक्तिभिः प्रोक्तक्रमात्पूजां समाचरेत् ।
मध्ययोनेरग्रमूले पार्श्वयोर्बहिरर्चयेत् ॥४६॥
बाणान् पञ्च तथा चापं पाशमङ्कुशमीश्वरि ! ।
(१)बाह्यादीशान्तमभितो वामावर्त्तेन संस्थिताः ॥ ४७ ॥
बाणाः स्युस्त्रिविधाः प्रोक्ताः स्थूलसूक्ष्मपरत्वतः ।
स्थूलाः पुष्पमयाः, सूक्ष्माः मन्त्रात्मानः समीरिताः ॥४८॥
पराश्च वासनायां तु प्रोक्ताः स्थूलान् शृणु प्रिये ! ।
कमलं कैरवं रक्तं कह्लारेन्दीवरं तथा ॥ ४९ ॥
सहकारज(२)मित्युक्तं पुष्पपञ्चकमीश्वरि ! ।
मान्मथक्षोभजनकं पूजाहोमविधानतः ॥ ५० ॥

---

प्रोक्तनामभिस्त्रिपुरेत्याद्युक्तैः । प्रागुदीरितक्रमतःप्रोक्तैःप्रागेवास्माभिरपि प्रकटीकृतैरर्पणमन्त्रैः ॥४३॥४४॥ तत्पूजां—स्थूलसूक्ष्मरूपं पूजां प्रागुक्ताम् । एकैकशः—प्रत्यावरणमितिशेषः ॥४५॥ प्रोक्तक्रमादित्याद्युक्तमस्माभिरपि प्रागेव प्रोक्तमेव अग्रमूलपार्श्वयोर्बहिः—मध्ययोनेर्बहिः । वशिन्याद्यष्टकोष्ठानां मध्यस्थावकाश इत्यर्थः ॥४६॥४७॥४८॥ रक्तशब्दः कैरवविशेषणम्॥४९॥ सहकारजं पुष्पमिति शेषः । मान्मथं—कामसम्बन्धि क्षोभजनकं स्त्रीपुंसयोरितरेतरप्रयोगः चित्ताकर्षकमित्यर्थः । पूजाहोमविधानतः—उक्तेन पुष्पपञ्चकेन पूजादिविधानात् क्षोभकरं तदित्यर्थः । मन्त्रैस्तु पञ्चभिः—शैवबाणसम्बन्धिभिरित्यर्थः । सर्वत्र शैवैः पञ्चभिर्बाणमन्त्रैः जपपूजादि कुर्यादित्यर्थः ॥५०॥तथाविधं स्थूलसूक्ष्मभेदेन पुण्ड्रेक्षुकाण्डजञ्चापमित्यन्वयः । यथा पाशाङ्कुशयोः स्थूलं रूपंसौवर्णमयमिति सम्प्रदायः । सूक्ष्मपररूपे प्राग्वत् । प्रोक्तक्रमात्-प्रागुक्तक्रमतः प्रागभिहितक्रमात् चत्वारि

---

(घ) वायव्यादीशमभितो इति मू० पु० पा० ।

(ङ) सहकारमिति मू० पु० पाठः ।

जपमन्त्रप्रयोगादौ सिद्धमन्त्रैश्च* पञ्चभिः।
तथाविधं स्यात्तच्चापं स्थूलं पुण्ड्रेक्षुकाण्डजम् ॥ ५१ ॥
मध्ययोन्यग्रकोणादिसंख्याः (१) प्रोक्तक्रमात् यजेत्।
कामेश्वर्य्यादिकाः शक्तीः (२)तथा मध्ये शिवां यजेत् ॥५२॥
प्रदर्श्य मुद्रानवकं चत्वारि च ततः क्रमात्।
उपचारान् विधायाथ (३) प्रोक्तयोगसमन्वितम् (४) ॥५३॥
जपित्वा दशवारञ्च स्वात्मानं देवतातनुम्।
स्मरेत्स्वात्मनि(५) ताः पञ्चदश नित्याः समर्चयेत् ॥ ५४ ॥
ततो भूतात्मभिः पञ्चमन्त्रैरभ्यर्च्य भक्तितः।
आत्माष्टाक्षरमन्त्रेण पूजयित्वा ततो जपेत् ॥ ५५ ॥
सहस्रं पुरतो देव्याः शतं तद्दिनजं तु वा।
सन्ध्यात्रयं षष्टिसङ्ख्यमुक्तं (६) वा प्रोक्तरूपतः ॥ ५६ ॥

---

इति मुद्राचतुष्टयम्। (७)क्रमात्—उक्तक्रमात्। उपचारान्—प्रागुक्तान्। क्रमात्—विद्यातातीर्यखण्डदिननित्याविद्याभ्यां षोड़शोपचारान् विदध्यादित्यर्थः। प्रोक्तयोगसमन्वितं—पूर्वपटलावसाने प्रोक्तम् ॥५२॥५३॥ पञ्चदशेतिकथनं स्वात्मनः षोड़शीललिताविद्याऽऽत्मकत्वसिद्धेरित्यर्थः ॥५४॥ भूतात्मभिः—तृतीयपटलोपदिष्टैः। आत्माष्टाक्षरमन्त्रेण—सोऽपि तृतीयपटलोपदिष्टरूपः। भूतात्ममन्त्राणां बीजद्वयाद्यता भवति, आत्ममन्त्रस्य सप्ताक्षरीयोजनं च न भवेत् सम्प्रदायात् ॥ ५५ ॥

सहस्रमित्यादिना श्लोकेन जपस्य मुख्यगौणपक्षावुपदिशति। तत्र शतमित्युक्तिः प्रायश्चित्तरूपत्वात्पक्षद्वयगामिनी। उक्तं वा प्रोक्तरूपत इत्युक्तिः पञ्च-

---

* सिद्धिर्मन्त्रैस्तु इति सो॰ पु॰ पा॰।

(१) संस्थाः इति सू॰ पु॰ पाठः।
(२) कामेश्वर्यादिकाशक्तिस्तथाइति सू॰ पु॰ पाठः।
(३) विदयाथ इति सू॰ पु॰ पाठः।
(४) प्रोक्तएव समन्वितं इति सो॰ पु॰ पा॰।
(५) स्मरन्स्वात्मनि इति भू॰ पु॰ पा॰।
(६) षष्ठिसङ्ख्यामुक्तां इति सू॰ पु॰ पाठः।
(७) हेतिमुद्राचतुष्टयं इति सो॰ व॰ पुस्तके पाठः।

ततः पुष्पाञ्जलिं कृत्वा मूलेनाभ्यर्च्य होमयेत् ।
कुण्डे स्थण्डिलमध्ये वा सम्प्रोक्ष्यार्घ्याम्बुना कुशैः ॥ ५७ ॥
रेखास्तिस्रः प्रागग्रा उत्तराग्राश्च संलिखेत् ।
मध्ये तथाऽग्निमाधाय क्रव्यादांशं परित्यजेत् ॥ ५८ ॥
परिषिंच्य परिस्तीर्य वह्निवीर्ये(१) विभावयेत् ।
प्रत्येकं सप्तजिह्वासु कुर्यान्नव घृताहुतीः ॥ ५९ ॥
ततः पूजाक्रमेणैव हुत्वा षोड़श मूलतः ।
ततस्तां विन्दुगे(२) धाम्नि विलीनां परिभावयेत् ॥ ६० ॥
बलिं दद्यात्ततस्त्वग्रे कुरुकुल्लामनुत्रयात् ।
अन्नव्यञ्जनपुष्पाम्बुदानेनोक्तस्वरूपतः(३) ॥ ६१ ॥

---

विंशत्पटलोक्तार्थस्य सदा हृदये वर्तमानत्वात्। वा शब्दोऽवधारणार्थः। एतदुक्तं भवति प्रोक्तक्रियया तद्दिनजभूतां सन्ध्यात्रयसङ्ख्यां (४) षष्टिघटिकासङ्ख्यां च एवं सम्भूयोक्तामिव सङ्ख्यां जपेदिति ॥५६॥ ततः—जपानन्तरम्। मूलेन—मूलविद्यया। अभ्यर्च्य—वह्नौ सन्निधेयमिति। कुण्डे—एकोनत्रिंशत्पटलोक्तस्वरूपे। स्थण्डिलमध्ये वा—स्थण्डिलमिति—हस्तायामविस्तारं एकाङ्गुलोत्सेधं वालुकाकल्पितं चतुरस्ररूपं धिष्ण्यविशेषमभिधत्ते ॥५७॥ मध्ये—कुशैर्विलिखितेषु नवसु कोष्ठेषु मध्यकोष्ठे इत्यर्थः। सर्वत्रात्र मन्त्रानुक्तौ विद्यातृतीयखण्डतद्दिननित्याविद्ये मन्त्रौ ज्ञेयाविति शेषः। क्रव्यादांशं परित्यजेत्—क्रव्यादेभ्यो नम इति अङ्गारशकलं दक्षिणस्यां दिश्यपास्येत्यर्थः॥ ५८॥ परिषिंच्य—परिषेचनं प्रादक्षिण्यक्रमतः कुशैर्दर्भैर्वा इति शेषः। सप्तजिह्वासु—एकोनत्रिंशत्पटलवक्ष्यमाणहिरण्याख्यादिषु। तत्तज्जिह्वास्मरणपूर्वं विद्यातृतीयखण्डदिननित्याभ्यां आहुतीः कुर्यादिति सम्प्रदायः। अन्यत्र सर्वत्र तत्तज्जिह्वानामभिः ॥५९॥ मूलतः—मूलेन। होमान्ते हुतसङ्ख्यां सर्वत्र जपेदिति सम्प्रदायः। विन्दुगे धाम्नि—भ्रुवोर्मध्ये इत्यर्थः ॥६०॥ अग्रे—देवतायाः। मनुत्रयात्—त्रिभिर्मन्त्रैः कुरुकुल्लाया बलिं दद्यात् इति। उक्तस्वरूपतः—गुरूक्तस्वरूपया

---

(१) वह्निदेवी इति मू० पु० पा०।
(२) ततस्तद्विन्दुगे इति मू० पु० पा०।
(३) क्तास्वरूपत इति सो० वं० पु० पा०।
(४) ध्यानत्रयसङ्ख्यामिति सो० पुस्तके पाठः।

अभ्यर्च्य देवीं चक्रस्थां तथा(१) तद्रूपवान् स्वयम् ।
स्वमुद्रया शक्तिचक्रं खेचर्यात्मनि योजयेत् ॥ ६२ ॥
ततोन्यासत्रयं कृत्वा प्राणायामपुरस्सरम् ।
जपित्वा स्तोत्रयुगलं देव्यात्मा विचरेत् सुखी ॥ ६३ ॥
पूजाविशेषान् देवेशि ! शृणु नित्यं क्रमोदितान् ।
अशक्तानां तु विस्तारे तथाऽऽपत्सु च शस्यते ॥ ६४ ॥
अन्यथाऽनर्थकारी स्यात् सङ्कोचार्चनमीश्वरी (?) ।
हेतिभिर्मध्यमाद्यं स्यात् द्वितीयं नवयोनिषु ॥ ६५ ॥
चतुर्दशारान्मध्यान्ताच्चतुर्थं(२) प्रोक्तरूपतः ।
पञ्चमं सर्वदुःखार्तिनाशनं वाञ्छितप्रदम् ॥ ६६ ॥

---

मुद्रया। सा च करतलयोस्त्रिभिरास्फालनपूर्वं प्रसारिततर्जनीद्वयाभ्यां उभयकर-मुष्टिभ्यां ऊर्ध्वाधःस्थितिरूपाभ्यां देवताया निवेदितबलिद्रव्यदर्शनपररूपेत्युक्ता ॥६१॥ तया तद्रूपवान्—देवताविस्तीर्णलब्धप्रसादसारूप्यवान् । स्वमुद्रया—मूलाधार-हृदयब्रह्मरन्ध्रेषु भावितविद्याखण्डत्रयरूपया—प्रागुदीरितया महात्रिपुरमुद्रया। शक्तिचक्रम्—शक्तिवृन्दम् । खेचर्या—प्रागुपदिष्टविरचनात्मिकया मुद्रया। सत-त्वस्मरणम् । आत्मनि योजनाप्रकारोगुरुमुखादवगन्तव्यः ॥६२॥ स्तोत्रयुगलम्—नाथदेवयोः । देव्यात्मा—न्यासत्रयादितः सुखीकृताखिलकर्तव्यत्वात् ॥६३॥

पूजेत्यादिभिः सिद्धिदा इत्यन्तैश्चतुर्भिः श्लोकैः सङ्कोचविकासरूपतः पञ्च-विधां सपर्याप्रक्रियामुपदिशति। तत्र अशक्तादीनां—राजवनितादीनाम् । आप-त्सु—अग्निपातज्वरादिषु ॥६४॥ अन्यथाऽनर्थकारी—विस्तृतसपर्यासमर्थस्य स्वैरतः सङ्कोचार्चनम्। अनर्थकारी इति—स्वातन्त्र्यात् अनर्थकारीत्यर्थः। हेतिभिर्म-ध्यमाद्यं स्यात्—हेतिचतुष्टयार्चनसहितं मध्यदेवताचतुष्टयस्यार्चनं, सङ्कुचिते-ष्वाद्यम्। द्वितीयं नवयोनिषु—नवयोन्यादिमध्यमान्तं अर्चनं द्वितीयमित्यर्थः॥६५॥ चतुर्दशारावधरन्या—चतुर्दशारादिमध्यान्ता सपर्या तृतीयेत्यर्थः। चतुर्थं

---

(१) तया इति सो॰ पु२ पा॰
(२) चतुर्दशारवध्यन्या च इति सो॰ पुस्तके पाठः।

तत्प्रकारन्तु देवेशि ! कुरुकुल्लार्चने शृणु ।
इति पञ्चप्रकाराऽर्चा प्रोक्ता सर्वार्थसिद्धिदा ॥ ६७ ॥
विद्यायाः साधनं सिद्धिं तद्व्रतं वर्ज्यमेव च ।
तदाभिमुख्यचिह्नानि विघ्नानि प्राक्तनाद्यतः ॥ ६८ ॥
शृणु क्रमेण देवेशि ! सर्वदा प्रीतिकारकम् ।
येन मर्त्योऽपि सिद्धः स्यात जीवन्मुक्तोभवन्मयः ॥ ६९ ॥
स्नातः सुगन्धसलिलैः प्राक्पूजाप्रोक्तरूपवान् ।
गुरुं वित्तेन सन्तोष्य रक्तागारे क्रमं भजेत् ॥ ७० ॥
सन्ध्यात्रयेऽपि जपवान् सहस्रं मौनसंयुतः ।
मोचागुड़सितोपेतं पयःपायसमर्पयेत् ॥ ७१ ॥

---

प्रोक्तरूपतः,—चतुरस्रादिमधयमान्तमर्चनं चतुर्थमित्यर्थः । पञ्चमं—अर्चनमिति शेषः ॥ ६६॥तत्प्रकारमिति । पञ्चमसपर्याप्रक्रिया द्वाविंशे कुरुकुल्लापटले वक्ष्यते। तत्रैव तां शृणु इत्यर्थः ॥ ६७ ॥

विद्याया इत्यादिना भवन्मय इत्यन्तेन श्लोकद्वयेन षड़र्थं प्रस्तावनां (१) सिद्धिफलं चोपदिशति। तत्र विद्यायाः साधनं—पुरश्चरणम्। सिद्धिं—पुरश्चरणसिद्धिम् । तद्व्रतं—विद्यापुरश्चरणव्रतम् । वर्ज्यं—विद्यासाधनसमये सर्वकाले च। तदाभिमुख्यचिह्नानि—विद्याभिमुख्यचिह्नानि विघ्नानि—आभिमुख्यविघ्नानि। प्राक्तनाद्यतः—दुर्वासनातिसङ्गात् ॥६८॥ येषु प्रीतिकारकं येषां एषां फलरूपं स्वात्मानुसन्धानं भवति तानि शृण्विति। येन—फलरूपेण भवन्मयः देवीविग्रहः ॥६९॥

स्नातइत्यादिभिः क्रममित्यन्तैरधर्द्धैः सप्तभिः श्लोकैः विद्यायाः साधनप्रकारं तत्पुरश्चरणसिद्धिं चोपदिशति। तत्र प्राक्पूजाप्रोक्तरूपवान्—नित्यापूजा—प्रोक्तविग्रहः। सन्तोष्य—वित्तादिभिः। सन्तुष्टेन गुरुणा अनुशिष्ट एव कुर्यात् । क्रमं—नित्यक्रमम् ॥७०॥ सहस्रं—प्रतिसन्ध्यं सहस्रमित्यर्थः । मोचा—कदलीफलम् । सिताः—शर्कराः । अर्पयेत्—निवेदयेत् प्रतिसन्ध्यमिति शेषः ॥७१॥

---

(१) षड़र्थप्रश्नान् इति वं० पुस्तके पाठः।

नीराजनं च कर्पूरैः कुर्यात्सन्ध्यासु तास्वपि।
होमं दशांशतः कुर्यात्तर्पणं (१)चेन्दुमज्जलैः॥ ७२॥
स्वनित्यादूर्ध्वतोजाप्यं द्विसहस्रं(२) दिनं प्रति।
कुर्यात्तेन भवेत् पूर्णं लक्षं(३) पूर्णान्तमीश्वरि!॥ ७३॥
एवं लक्षत्रयं प्रोक्तं प्रथमे तु कृते युगे।
त्रेतायां द्विगुणं तद्वत् द्वापरे त्रिगुणं स्मृतम्॥ ७४॥
कलौ चतुर्गुणं प्रोक्तमक्षराणां च संख्यया।
तार्तीयसप्तसङ्ख्या सा तेन स्यादेकविंशतिः॥ ७५॥

---

दशांशं जपसङ्ख्यायाः। इन्दुमज्जलैः—कर्पूरवासितजलैः। तर्पणं च। चकारेण दशांशतः इत्याकृष्यते॥७२॥ स्वनित्यादूर्ध्वतः—स्वनित्योक्तसन्ध्यात्रयषष्टिघटिकाजपसङ्ख्यापुरश्चरणजपसङ्ख्यायाः पृथग्भूता इत्यर्थः। लक्षं पूर्णान्तमित्युक्त्या प्रतिदिनं चतुस्त्रिंशदधिकं त्रिशतं त्रिसहस्रादूर्ध्वं जपेदित्यर्थः। एतदुक्तं भवति—पुरश्चरणं चिकीर्षुः गुरुं स्वशक्त्यानुरूपं वित्तैराराध्य तदनुज्ञातो लोहितमित्यादिकपूजामण्डपवर्त्ती अयोग्यप्रलापरहितः नियताहारः स्त्रीसङ्गवर्जी अव्याकुलचेताः सुगन्धिसलिलैः स्नातः परार्द्ध्यारुणाम्बरलेपनस्रगाभरणः सन्ध्यासु तिसृषु स्वनित्यक्रमानन्तरं प्रोक्तरूपां क्रमपूजां कृत्वा प्रतिसन्ध्यं द्वादशाधिकशतं सहस्रवारं जपं तद्दशांशसङ्ख्यं च तर्पणं तावत्त्रिमध्वक्तैः पलाशपुष्पैः कुसुम्भकुसुमैः कह्लारैर्वा दशांशक्रमहोमं च कृत्वा तत्सङ्ख्ययाऽरुणैः कुसुमैः सौरभाद्यैर्वा समर्चनं जपं च तत्पूर्णादि, पूर्णान्तं लक्षसङ्ख्यां पूरयन्नुक्तलक्षसङ्ख्यां जपेत् सर्वत्रेति॥७३॥एवं लक्षत्रयमिति। एतदुक्तं भवति—सर्वेषु पिण्डकर्त्तरीबीजमन्त्रेषु अपुनरुक्ताक्षराणि प्रत्येकमक्षरत्रिलक्षं कृतयुगे जपेत्। त्रेताद्वापरकलियुगेषु त्रिषु पादार्द्धत्रिपादक्षयाज्जपसंख्या प्रागुक्ता द्विगुणा त्रिगुणा चतुर्गुणा चेति। एकादिनवाक्षरान्तानां मन्त्राणां पिण्डकर्तरीबीजसंज्ञकानामपुनरुक्ताक्षरलक्षेण प्रोक्तयुगक्रमाभिवृद्ध्या जपः। दशाक्षरादिविंशाक्षरान्तानां मन्त्राणां प्राग्वत् युगानुरूपमक्षरलक्षं जपः। एकविंशादिशताक्षरान्तादीनां मन्त्राणां

---

(१) सेन्दुसज्जलैरिति मू० पुस्तके पाठः। (२) त्रिसहस्रं इति मू० पु० पाठः।
(३) लक्ष्यं इति सो० पुस्तके पाठः।

तेनान्येषु युगेषु स्यात् संख्या त्र्यंशवृद्धिरुदीरिता ।
वनिताक्षोभतोभोगान्न विघ्नं जायते यदि ॥ ७६ ॥
तासु संख्यासु पूर्णासु सम्प्रार्थ्य स्वाश्रयेत्क्रमम्(१) ।
वर्ज्यानि शृणु देवेशि ! तद्दिनेषु (२)सदापि च ॥ ७७ ॥
नास्तिकैः सह संलापो मैथुनं परनिन्दितम्(३) ।
निद्राशोकौ(४) तथाऽऽलापं देशान्तरपरिभ्रमम् ॥ ७८ ॥
तद्वासरेषु वर्ज्यानि प्रोक्तान्यन्यानि शाङ्करि !
शृणु सर्वत्र सर्वेषां सर्वदा नाशकानि च(५) ॥७९॥
परद्वेषगृहस्त्रीस्ववाञ्छातन्निन्दनानि च ।
स्त्रीषु रोषं प्रहारं च दुष्टास्वपि न योजयेत् ॥८०॥

---

केवलं लक्षमात्रं जपः, । तदूर्ध्वं सङ्ख्याविशिष्टाक्षराणां मन्त्राणां दशसहस्रो जपः । इत्येवं मन्त्रतन्त्रप्रकाशिकोक्तः । एतत्सर्वस्मिंस्तन्त्रे पुरश्चरणजपसङ्ख्याविशेषानुक्तावेवाङ्गीकरणीयम् ॥७४॥ तार्तीयसप्तसङ्ख्या सा—विद्यायास्तार्तीयखण्डे सप्ताक्षराणामपुनरावृत्तित्वात् । एकविंशतिः लक्षमिति शेषः । प्रथमे कृतयुगे सम्भूय जपसङ्ख्या एकविंशतिलक्षमित्यर्थः ॥७५॥ तेन—क्रमेण । अन्येषु युगेषु—त्रेतादिषु । वनिताक्षोभतो भोगात्—युवतिजनानुज्ञातो भोगतः । प्रोक्तपुरश्चरणजपसाङ्ख्यायाः युवतिजनभोगविघ्नरहितम् ॥७६॥ सम्पूर्तिः—सिद्धिः । स्वक्रमं—नित्यानुष्ठानप्रोक्तम् ॥

वर्ज्यानीत्यादिनाश्लोकोत्तरार्द्धेन विद्याजनपराणि भवर्ज्यानि प्रस्तौति । तत्र तद्दिने—पुरश्चरणदिनेषुसर्वदा—सर्वस्मिन् काले च ॥७७॥

नास्तिकैरित्यादिभिर्योजयेदित्यन्तैस्त्रिभिः श्लोकैः पुरश्चरणकाले सर्वकाले च वर्जनीयान्युपदिशति ॥७८॥ तत्र तद्वासरेषु पुरश्चरणादिदिनेषु—अन्यानि । सर्वकालवर्ज्यानि॥७९॥तन्निन्दनानि – परनिन्दनानि। दुष्टास्वपि—अविधेयास्वपि॥८०॥

---

(१) स्वभजेत्क्रमं इति मू० पु० पाठः । (२) तद्दिने सर्वदापिचेति मू० पुस्तके पाठः ।
(३) परिनिन्दित मिति सो० पु० पा० । (४) चिन्ताशोकं इति मू० पु० पा० ।
(५) सर्वनाशकराणि च इति मू० पुस्तके पाठः ।

सिद्धचिह्नानि चोक्तानि वासना कथने(१) मया ।
आनुकूल्यस्य चिह्नानि शृणु साधयतस्तदा(२) ॥८१॥
स्वप्ने पोतेषु वनितावृन्दैः संमेलनं निशि ।
गजाद्रिसौधशृङ्गेषु विहारो राजदर्शनम् ॥८२॥
गजानामङ्गनानां च दर्शनं नृत्यगीतयोः ।
उत्सवं ससुरामांसदर्शनं स्पर्शनं तथा ॥८३॥
निन्द्यानि शृणु देवेशि ! विघ्नानर्थकराणि च ।
कृष्णवर्णैर्भटैः स्वप्ने प्रहारस्तैललेपनम् ॥८४॥
मैथुनं परनारीभिरिन्द्रियच्यवनं तथा ।
राष्ट्रक्षोभो वह्निवायुजलभीबन्धुनाशनम् ॥८५॥
गुरावुपेक्षाऽसम्पत्तिर्वस्तूनां व्याधिबाधनम् ।
अन्यमन्त्रार्चनश्रद्धा(४) विघ्नो नित्यार्चनेऽनिशम् ॥८६॥
नराणां यच्च दुष्पुण्यैः(४) कृतैर्बहुषु जन्मसु ।
श्रद्धास्थैर्यं सम्प्रदायसिद्धिर्नित्यार्चनं(५) भवेत् ॥८७॥

---

सिद्धेत्यादिभिस्तथा इत्यन्तैस्त्रिभिः श्लोकैः साधकस्य देवतामुख्यचिह्नान्युपदिशति। तत्र वासना कथने पञ्चत्रिंशे पटले। साधयतः—साधनपरस्य। तदा—प्रागुक्ते सर्वकाले ॥८१॥ नृत्यगीतयोर्दर्शनमित्यन्वयः। स्पर्शनं तथा तयोरिति शेषः ॥८२॥८३॥

निन्द्यानीत्यादिभिः अनिशमित्यन्तैस्त्रिभिः श्लोकैः प्राक्तनपापबाहुल्याद्देवताभिमुख्यप्रत्यूहचिह्नान्युपदिशति। तत्र विघ्नानर्थकराणि च—विघ्नकराणि अनर्थकराणि वस्तूनामसम्पत्तिरित्यन्वयः। एतदुक्तं भवति अत्र कृष्णवर्णभटतैलाभ्यङ्गेन्द्रियच्यवनदर्शनगुरूपेक्षामन्त्रान्तरभजनश्रद्धा चेत्येतानि पञ्चानर्थकराणि। इतराणि विघ्नकराणीति ॥८४॥८५॥८६॥

नराणामित्यादिना श्लोकेन सञ्चितस्थैर्यसम्प्रदायनित्यार्चनप्राप्तिकारणमुप-

---

(१) कथ्यते इति मू० पुस्तके पाठः।
(२) तः सदा इति मू० पुस्तके पाठः
(३) र्चनं श्रद्धाविघ्नो इति मू० पुस्तके पाठः।
(४) नराणां बहुभिः पुण्यैरिति मू० पुस्तके पाठः।
(५) शुद्धनित्यर्चनं इति पुस्तके पाठः।

कूर्म्मस्थितिमविज्ञाय योजपादिविधिस्थितः ।
स नाप्नोति फलान्युक्तान्यन्यथा नाशमेति च ॥८८॥
तस्मात् कूर्म्मविभागं तु विज्ञायाऽखिलमाचरेत् ।
स चतुर्द्धा ततोलोके तत्प्रकारान् शृणु प्रिये ! ॥ ८६ ॥
प्रथमस्तु परः कूर्म्मस्ततो देशगतस्तथा ।
ग्रामगोगृहगश्चेति चतुर्धा तद्व्यवस्थितिः ॥ ९० ॥
देशं ग्रामं गृहं वास्तु नवधा विभजेत्ततः ।
प्रागादि पश्चिमान्तं तु कादिमान्तानि विन्यसेत् ॥ ९१ ॥
अक्षराणि समान्येव चत्वारि परयोर्न्यसेत् ।
ईशे द्वयमथोमध्ये स्वरात्प्रागादि विन्यसेत् ॥ ९२ ॥

---

दिशति। बहुषु जन्मसु-चिरकालम्। सम्प्रदायसिद्धिरित्यत्र सम्प्रदायशब्दस्य अर्थनिर्वाहे अभियुक्तोक्तिः।

"समा सम्यक्त्वमुदितं प्रेणोत्कर्षश्च दायतः ।
वस्तु, तेनोत्तमा विद्या साऽस्तुनः सम्प्रदायत" इति ॥

एतदुक्तं भवति सद्गुरोः सम्प्रदाय-लब्धा मनीषितार्थप्राप्तिकरीविद्या सत्-सम्प्रदायवतीति ॥८७॥

कूर्मेत्यादिभिः सदा इत्यन्तैरेकादशभिः श्लोकैः सर्वतन्त्रसाधारणं कूर्मस्थिति—विभागं तज्ज्ञानफलं तदनङ्गीकरणे प्रत्यवायं चोपदिशति। उक्तानि-देवता-भजनादीनि प्रोक्तानि। अन्यथा—न केवलं प्रोक्तफलानाप्तिः अखिलं गृह-मण्डलग्रामनगरपत्तनखेटखर्वटादिकरणम्॥८८॥ स—कूर्मः। तत्प्रकारं—कूर्म-स्थितिप्रकारम् ॥८६॥ परः कूर्मः पञ्चाशत्कोटियोजनविस्तीर्णायाः पृथिव्या धारकःस्थिरः कूर्मः। ततः द्वितीय इति—उक्तप्रकारेण। तद्व्यवस्थितिः—कूर्मव्यवस्थितिः ॥९०॥ नवधा विभजेदिति, एतदुक्तं भवति। प्राक्प्रत्यग्दक्षिणोदक् च समान्तरालेन रेखाचतुष्टयेन नवकोष्ठानि भवन्ति। तेषु प्राक्दिक्पङ्क्तिकोष्ठमारभ्य पश्चिमदिक्पङ्क्तिमध्य कोष्ठान्तेषु पञ्चसु कोष्ठेषु प्रतिकोष्ठं प्रादक्षिण्येन पञ्च पञ्चक्रमेण कादि मान्तान्यक्षराणि वर्गशः समा लिख्य तदनु यादि हकारान्तान्यक्षराणि चत्वारि चत्वारि वायूत्तरदिग्गतयोः (१)

---

(१) दिग्गतयोरिति [illegible]

ईशान्ते (१) द्विद्विशः पश्चान्नामाद्यर्णं(२) यतो भवेत् ।
तन्मुखं पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः ॥८३॥
पुच्छमेकमथो (३) मध्ये पृष्ठमेवं षडङ्गवत् ।
मुखे सर्वार्थसिद्धिः स्यात्करयोर(४)ल्पसिद्धिकृत् ॥८४॥
कुक्षोरुनित्यनैष्फल्यं पादयोः सर्वदुःखकृत् ।
पुच्छे मृत्युस्तु नियतं पृष्ठे सर्वार्थदायकम् ॥८५॥
तस्मात्तत् साधु विज्ञाय कुर्यात् सर्वं समीरितम् ।
व्यञ्जनं देशकूर्मे* स्यात् गृहकूर्मे स्वरास्तथा ॥८६॥
ग्रामादिकूर्मे द्वितयं परकूर्मे न तत्त्रयम् (५) ।
नित्यं पूर्वमुखो यस्मात्तेन तत्सिद्धिरीरिता ॥८७॥

---

कोष्ठयोर्विलिख्य अवशिष्टं लक्ष इत्यक्षरद्वयं ईशकोष्ठे समालिखेदिति। सर्वमध्यकोष्ठे प्रागादिषु ईशान्तास्वष्टसु दिक्षु प्रत्येकं अकारादिविसर्जनीयान्तान् षोड़श स्वरान् प्रादक्षिण्येन द्वयं द्वयं समालिखेत्। एवं कृते प्रागुक्तानां गृहादीनां नामाद्यक्षरं प्रोक्ते चक्रे यस्मिन् कोष्ठे दृश्यते तत्कोष्ठं तस्य कूर्मस्य मुखं ज्ञेयम्, तत्कोष्ठपार्श्वयोः स्थितं कोष्ठद्वयं तस्य कूर्मस्य करयुगं, तदनन्तरं कोष्ठद्वयं तस्य जठरम् ॥८३॥ तदनन्तरमेकं कोष्ठं तस्य पुच्छं, सर्वमध्यं स्वराक्षरोपेतं तन्नवमकोष्ठं तस्य पृष्ठं, एवं मुखकरजठरपादपुच्छपृष्ठाख्यषड़ङ्गवत्तस्य कूर्मस्य स्वरूपं, सर्वत्र नामाक्षरकोष्ठमारभ्य तस्य कूर्मस्य मुखादिकल्पनमिति ॥ ८४ ॥ सर्वार्थदायकं—भजनमिति शेषः ॥८५॥ सर्वं समीरितं(६) भजनप्रयोगादिति शेषः। व्यञ्जनं—नामाक्षरगतम्। स्वराः—नामाद्यक्षरगताः ॥८६॥ द्वयं—स्वराक्षरं(७) व्यञ्जनाक्षरं च। एतदुक्तं भवति। प्रोक्ते चक्रे देशकूर्मस्य नामाद्यक्षरे व्यञ्जनाक्षरं यत्र कोष्ठे दृश्यते तत्तस्य मुखं गृहकूर्मस्वनामाद्यक्षरे स्वराक्षरं यस्य कोष्ठे दृश्यते तत्तस्य

---

(१) ईशान्तासुदिशः पश्चादिति सू० पु० पा०।
(२) वर्ण्यं यतो इति सो० पु० पा०।
(३) मधोमध्यं इति सू० पु० पाठः।
(४) करयोस्त्वल्प इति सू० पु० पाठः।
(५) न तद्द्वयमिति सो० पु० पा०।
(६) समीहितं इति टी० पु० पा०।
(७) नामाक्षरमितिटी० पु० पा०।
* दशकूर्मे इति सो० पु० पा०।

एवं कूर्मविभागोऽयमीरितस्ते चतुर्विधः ।
मन्त्राणां तेन सिद्धिः स्यात्सर्वेषां सर्वतस्तदा ॥९८॥
सम्वर्ध्यायामविस्तारं (१) हृत्वाऽष्टाभिस्तु शेषतः ।
विज्ञाय वर्गं तेष्वेकमाद्यं (२) नाम्नि प्रकल्पयेत् ॥९९॥
वास्तुष्वज्ञातरूपेषु(३) प्रसिद्धं नामतो भवेत् ।
तत्तत्स्थानेषु नियतमनर्थं शून्यता तथा(४) ॥१००॥
व्योमतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

---

मुखम्, ग्रामादीनां कूर्मस्य नामाद्यक्षरे स्वरव्यञ्जनाक्षरे यत्र कोष्ठे दृश्येते तत्तस्य मुखंतद्द्वयानुगुणे अङ्गे उक्तानि कुर्यात् । तद्द्वयस्यान्योन्याननुगुणेष्वङ्गेषु यथेष्टमन्यतरानुगुणे अङ्गे कुर्यात् । देशकूर्मस्य नामाद्यक्षरे केवलं स्वराक्षरे सति तत्कोष्ठदिग्गतबाह्यकोष्ठं मुखं तस्य कल्पयेत् । पूर्वाभिमुखः—परकूर्मं इति शेषः । तेन—नियतस्थितित्वात्—तत्सिद्धिरीरिता—तदवयवावस्थानाधीना ॥ ९७ ॥ येन—कूर्मविभागज्ञानेन ॥ ९८ ॥

सम्वर्ध्येत्यादिना तथेत्यन्तेन श्लोकद्वयेन ग्रहादीनां प्रोक्तवास्तुविशेषाणामज्ञातसंज्ञानां नामकल्पनप्रकारमुपदिशति । तत्र आयामेन—दैर्घ्यमानेन । अष्टाभिः—अष्टसङ्ख्याभिः । शेषतः—आवाहनशेषतः । वर्गं—अष्टस्वेकम् । तेषु—वर्गाक्षरेषु एकं अक्षरं—आद्यमक्षरम् ॥९९॥ अज्ञातरूपेषु—अज्ञातनामसु । एतदुक्तं भवति—अज्ञातनामकस्य स्वमनीषितस्य वास्तोः आयामेन विस्तारं संवर्ध्य तां सङ्ख्यां अष्टसङ्ख्यया आहृत्य अवशिष्टसङ्ख्यायाः स्वरेषु—अकचटतपयशरूपवर्गेषु अन्यतमं ज्ञात्वा तद्वर्गजेष्वक्षरेषु अन्यतमाद्यक्षराद्यन्तस्य नाम कल्पयेदिति । प्रसिद्धं नामतः (५) ज्ञातनामसु वास्तुष्विति शेषः । तेन कूर्मावयवान् कल्पयेत् तत्स्थानेषु—पादपुच्छकुक्षिस्थानेषु । शून्यता निष्फलता ॥१००॥

---

(१) संवर्ध्यायोगविस्तारं इति मू० पु० पा० । (२) तेष्वेके नामाद्यं नाम्नि कल्पयेत् इति सो० पु० पाठः । (३) अज्ञानरूपेषु इति मू० पु० पा० । (४) सता इति मू० पु० पा० । (५) प्रसिद्धान् नामत इति टी पु० पा० ।

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमते(१) पञ्चमं
पटलं परिपूर्णं परामृष्टम् ।

---

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां ललितानित्यार्चनक्रमादिप्रकाशनपरं पञ्चमं पटलं परिपूर्णं परामृष्टम् ।

ग्रन्थसङ्ख्या—

पञ्चमे यन्त्रमेकं स्यात् ग्रन्थव्याख्यानगामिनः ।
शतद्वयं पञ्चषष्ट्या समेतमिति वीक्षितम् ॥

---

(१) नैमित्तिकार्चनं नाम इत्यधिकं मूलपुस्तके ।

(२) ग्रन्थसङ्ख्यानगामिनः इति सो० पु० पा० ।

---

## अथ षष्ठं पटलम् ।

---

अथ षोड़शनित्यानां नित्यार्चानिरतात्मनाम् ।
नैमित्तिकं च काम्यं च वच्येऽहं शृणु सुन्दरि ! ॥१॥
नित्यं नैमित्तिकं काम्यं सापेच्तं पूर्वपूर्वतः ।
अन्यथा भजनं चेच्छन् (१) करोत्यापत्परम्पराम् ॥२॥
नित्यार्चनरतैः सिद्धैः कार्यं नैमित्तिकार्चनम् ।
तद्विधानमतो वच्ये चैत्राद्यं फाल्गुनावधि ॥३॥
चैत्रे दमनकैः कुर्यात् समूलैर्वाऽथ गुच्छकैः ।
पूर्वपच्चचतुर्दश्यां निशि संस्थाप्य विद्यया ॥४॥

---

अथ षष्ठं पटलम् ।

पूर्व्वस्मिन् पटले ललिताया नित्यपूजाविधानमुपदिश्यानन्तरं तन्निष्ठानां सर्व-नित्यासाधारणं नैमित्तिककाम्यपूजाक्रमसुपदिशति—अथ षोड़शनित्येत्यादिना तन्मयोभवेदित्यन्तेन श्लोकशतरूपेण षष्ठेन पटलेन । तत्र अथ षोड़शेत्यादिभिः तेष्व पीत्यन्तैर्द्वात्रिंशत्श्लोकैर्नैमित्तिकार्चनक्रमसुपदिशति । तत्र अथ षोड़शेत्यादिना आपत्परम्परामित्यन्तेन श्लोकद्वयेन पटलार्थोद्देशान्नैमित्तिककाम्ययोरप्राप्तक्रमानु-ष्ठाने प्रत्यवायं चोपदिशति । तत्र नैमित्तिकं काम्यं च—अर्चनमिति शेषः ॥ १ ॥ सापेच्तं पूर्वपूर्वतः—पूर्वपूर्वतः सापेच्तम्—एतदुक्तं भवति-नित्यार्चानिरतानामेव नैमित्तिकार्चासु योग्यता, उभयार्चानिरतानां काम्यार्चा योग्यतेति । अन्यथा भजनं—उक्तक्रमविपर्यासभजनम्, एतत्सर्वसाधारणम् ॥२॥

नित्यार्चन इत्यादिना श्लोकेन सर्वासां नैमित्तिकार्चाविधानेन गुणविधानं तत्प्रकारं च प्रस्तौति ॥ ३ ॥

चैत्रे इत्यादिना पूजनमित्यन्तेनार्द्धाधिकैकेन श्लोकेन दमनकार्चनक्रमसुपदिशति, समूलैः—दमनकैरितिशेषः । गुच्छकैः—शाखाभिः तेषां एष गौणपच्चः । संस्थाप्य विद्यया, एतदुक्तं भवति—सर्वत्र नैमित्तिकार्चासु प्रोक्तानि पूजाद्रव्याणि पूर्वेद्युर्निशि पवित्रे पात्रे विद्याभ्युक्षिते निधाय तद्दिननित्याविद्यया च गन्धपुष्पधूपदीपनैवेद्य-

---

(१) भाजमं चेच्छन् इति मू० पु० पा०

परेद्युर्नित्यपूजान्ते कुर्यादेतैस्तु पूजनम्।
अस्मिन्मासि च पूर्णायां वसन्तोत्सवपूजनम् ॥५॥
कुर्यात्तत्कालसम्भूतैः प्रसूनैश्चन्द्रचन्दनैः।
सौगन्धिकैः सकाश्मीरैः पूजां पूर्ववदुज्ज्वलाम् ॥६॥
वैशाखे मासि पूर्णायां पूजयेद्धिमपुष्करैः (१)।
अपि वा चन्द्रकस्तूरीचन्दनैः शिशिरोदकैः ॥७॥
ज्येष्ठे मासि च पूर्णायां कदलीपनसाम्रजैः।
फलैस्तु पूजयेद्देवीं पूर्ववत् सर्वसिद्धये ॥८॥
आषाढे मासि पूर्णायां चन्दनैः कुङ्कुमान्वितैः।
(२)एला कक्कोलजातीभिरुपेतैः पूजयेच्छिवाम् ॥९॥
श्रावणे मासि पूर्णायां पवित्रैः पूजयेच्छिवाम्।
तद्विधानमिदं भद्रे ! शृणु सौभाग्यदायकम् ॥१०॥

नमस्कारैः पञ्चभिरुपचारैः समभ्यर्च्य क्वचित्सपर्यास्थाने निधाय ॥४॥ परेद्युः स्वनित्याक्रमार्चनान्ते तैः सविशेषं पूजनं यथाशक्ति वित्तैर्गुरुपूजनं च कुर्यादिति ॥५॥

अस्मिन्नित्यादिना उज्ज्वलमित्यन्तेनार्द्धाधेन श्लोकेन वसन्तोत्सवपूजनमुपदिशति। अस्मिन् मासे—चैत्रमासे। चन्दनकर्पूरसौगन्धिकैः सकलहारैः सकाश्मीरैः कुङ्कुमार्पितैः पूर्ववत्—प्रागुक्ताधिवासपूर्वकम् ॥६॥

वैशाखेत्यादिना श्लोकेन वैशाखमासपूजामुपदिशति। तत्र हिमपुष्करैः हिमजलैरपि चेति पद्यान्तरम्। अशक्तविषयः। चन्द्रकस्तूरीचन्दनैः—वासितैरिति शेषः। अत्राप्यधिवासपूर्वकं कर्तव्यम् ॥७॥

ज्येष्ठेत्यादिना श्लोकेन ज्येष्ठमासपूजामुपदिशति। तत्र तत्र पूर्ववत्—साधिवासम् ॥७॥

आषाढेत्यादिना श्लोकेनाषाढपूजामुपदिशति—अत्रापि साधिवासं पूजयेत् ॥८॥

श्रावणेत्यादिभिर्विनश्यतीत्यन्तैर्दशभिः श्लोकैः श्रावणे मासे पवित्रारोप-

(१) हिमपुष्करैरिति सो० पु० पा०। (२) एलाकङ्कोल इति मू० पु० पा०।

(३) पवित्रारोहणी इति सो० पु० पा०।

सौवर्णै राजतैर्वापि सूत्रैः पट्टसमुद्भवैः ।
कार्पाससम्भवै रक्तैर्नवधा गुणितैः शुभैः ॥११॥
कुर्यात्पवित्रं शक्तीनां सर्वासां षोड़शाङ्गुलैः ।
नवाङ्गुलैर्वा तत्सङ्ख्यै (१) सरग्रन्थ्यादिसंयुतम् ॥१२॥
अथवा वृत्तिशक्तीनां तत्तत्सङ्ख्याङ्गुलादिकम् ।
कृत्वाऽधिवासपूर्वं तु पूजयेत्तैर्यथाक्रमम् ॥१३॥
होमे त्वेकसरग्रन्थि तन्मानं स्यात्पवित्रकम् ।
अष्टोत्तरशतैः सूत्रैः कुर्याच्छक्त्या* च तारकम् ॥१४॥
पूजा विष्टरमानेन वितानादवलम्बयेत् ।
वाराहीकुरुकुल्लादिशक्तीनां मूलशक्तिवत् ॥१५॥

णोत्सवार्चनक्रममुपदिशति । तत्र—पवित्रैर्वक्ष्यमाणैः तत्त्वात्मभिः । तद्विधानं—पवित्रविधानम् ॥१०॥ वा पक्षान्तरे । रक्तैः—कुङ्कुमचन्दनाद्यरुणितैः ॥११॥ नवाङ्गुलैः—सूत्रैरित्यन्वयः । वा पक्षान्तरे, तत्सङ्ख्यासरग्रन्थ्यादिसंयुतम् (२) षोड़शाङ्गुलायामपक्षे षोड़शसरं षोड़शग्रन्थिकं च कुर्यात् । नवङ्गुलायामपक्षे नवसरं नवग्रन्थिकं च कुर्यात् । अत्रादिशब्दो रञ्जनविषयः प्रतिग्रन्थि रञ्जनं कुर्यात् इत्यर्थः ॥१२॥ अथवेति पक्षान्तरं परम् । तत्सख्याङ्गुलादिकम्—अत्रादिशब्दः सरग्रन्थ्यादिविषयः । एतदुक्तं भवति—यस्मिन्यस्मिन्नावरणे या या शक्तिसङ्ख्या तावत्सख्याङ्गुलायामसरग्रन्थिसंयुतं पवित्रं कुर्यादित्येकः पक्षः । इत्यस्मिन् पक्षे हेतोनामष्टाङ्गुलायाममाष्टसरग्रन्थिकं, नवानां नाथानां नवाङ्गुलायामं नवसरग्रन्थिकं, कामेश्वर्यादीनां तिसृणां त्र्यङ्गुलायामं त्रिसरग्रन्थिकं, मध्यस्थायाः प्रधानायाः षोड़शनित्यात्मकत्वात् षोड़शसरग्रन्थिकं, अन्यासां पञ्चदशनित्यानां ललिताङ्गभूतानां पञ्चदशाङ्गुलायामं पञ्चदशसरग्रन्थिकं पवित्रं कुर्यादिति । कृत्वेति अधस्तादन्वयः । अधिवासपूर्वं—प्राग्वत् । तैः—पवित्रैः ॥१३॥ तन्मानं—पक्षत्रये(३) यदङ्गीकृतं तन्मानायामं, तैरष्टोत्तरशतैः सरग्रन्थियुक्तैरिति शेषः ॥१४॥ वाराहीकुरुकुल्लादिशक्तीनां—आदिशब्देन पञ्चदशनित्या उच्यन्ते । मूलशक्तिवत् प्रधानदेव-

(१) तत्सङ्ख्यारसग्रन्थ्यादिसंयुताम् इति सो० पु० पा० ।　(३) पक्षद्वये इति टी० पु० पा० ।
(२) तत्सङ्ख्यारसग्रन्थ्यादिसंयुतं इति सो० पु० पा० ।　* च्छक्त्योवतारकम् इति मू० पु० पा०

स्वमानेनात्मनः कुर्यात् पवित्रं (१) प्रोक्तसङ्ख्यया ।
क्रमागमज्ञशिष्याणामात्मवत्समुदीरितम् ॥१६॥
अन्येषां योगिशक्तीनामेकग्रन्थिसरं न च (२) ।
परिधानप्रमाणेन मण्डपस्यैकसूत्रतः ॥१७॥
सग्रन्थ्यङ्गुलैर्युक्तं षण्णवत्या तु सङ्ख्यया ।
कृत्वा पवित्रत्रितयं तानि देव्यै समर्पयेत् ॥१८॥
उक्त(३) मानत्रयेष्वेकं ग्राह्यं भवति सर्वतः ।
न कुर्यान्मानसाङ्कर्यं यदि कुर्याद्विनश्यति ॥१९॥
अथ भाद्रपदे मासि पूर्णायां क्षेत्रकोद्भवैः ।
प्रसूनैरर्चयेद्देवीं पूर्वोक्तविधिना युतम् ॥ २० ॥
आश्वयुज्यां विशेषस्तु दर्शान्तप्रतिपत्तिथिम् ।
आरभ्य पूजयेद्देवीं गन्धपुष्पोपहारकैः ॥ २१ ॥
होमे शतादि तद्वृद्ध्या पूर्णायां षट्शताधिकम् ।
सहस्रं जुहुयान्नित्यं जपं चैव समाचरेत् ॥ २२ ॥

---

तायाः प्रोक्तपक्षत्रये यः पक्षोऽङ्गीकृतस्तद्वत् । अङ्गनित्यानां चतुर्दशसरादिकं, मध्यस्थायाः पञ्चदशसरादिकम् ॥१५॥ स्वमानेन—स्कन्धादिनाभ्यवधिना । क्रमः अक्षरक्रमः । आगमः—कादिमतादि ॥१६॥ परिधान प्रमाणेन - शक्तियोगिनीनां मानेन ॥१७॥ सग्रन्थ्यत्यादुक्तः पक्षःपूर्वोक्तपक्षत्रयानुष्ठानाशक्तविषयः ॥१८॥ मान-साङ्कर्यं उक्तानां पक्षत्रयाणामन्योन्यमानसाङ्कर्य्यम् ॥१९॥

अथ भाद्रपदेत्यादिना श्लोकेन भाद्रपदमासपूजामुपदिशति, तत्र पूर्वोक्तविधिना युतं—अधिवासपूर्वम् ॥२०॥

आश्वयुज्यामित्यादिभिरर्चनमित्यन्तैश्चतुर्भिः श्लोकैराश्वयुजमासपूजाक्रममुपदिशति। तत्र दर्शान्तप्रतिपत्तिथिं—अमावास्यानन्तरप्रतिपत्तिथिम् । उपहारः—निवेद्यम् ॥२१॥ शतादितद्वृद्ध्या—शतादिशतवृद्ध्या । एवं पूर्णायां षट्शताधिकं

---

(१) तूक्तसङ्ख्यया इति मू॰ पु॰ पा॰ ।　　(२) योगशक्तीनामेकोग्रन्थिसरानव इति मू॰ पु॰ पा॰ ।
(३) उक्तं इति मू॰ पु॰ पा॰ ।

कन्यकायां समावाह्य देवीं सम्पूज्य भक्तितः ।
दत्वा भूषणवस्त्रादि दक्षिणां च समुद्धरेत् ॥ २३ ॥
एव(१)मेकादिसंवृद्ध्या पूर्णान्तं पूजयेत् प्रिये ! ।
तेन विद्वान् भवेत्सिद्धो नृपतिं कुरुतेऽर्चकम् ॥२४॥
कार्तिके मासि पूर्णायां कुङ्कुमेन समर्चयेत् ।
रात्रौ प्रदीपकैर्होमैः कुर्यात् घृतसमेधितैः ॥२५॥
देव्यग्रे स्थापयेद्दीपान् विद्यया षोड़श क्रमात् ।
शक्तीनामेकमेकं तु स्थापयेत्तत्तदग्रतः ॥२६॥
अथवा भाजने मध्ये त्वेकं तमभितो नव ।
कृत्वा निवेदयेन्मूलविद्यया सप्रसूनकम् ॥२७॥
मार्गशीर्षे च पूर्णायां नालिकेराम्बु चन्द्रयुक् ।
निवेद्याभ्यर्चयेन्माषपिष्टापूपैर्यथाविधि ॥२८॥

---

मूलविद्यया जुहुयादित्यर्थः। जपं चैवम्—शतादितद्वृद्ध्या जपं च समाचरेदित्यर्थः। सम्पूज्य—नित्योक्तक्रमेण ॥२३॥ एवमेकादिसंवृद्ध्या पूर्णायां षोड़श कन्याः समर्चयेत्। तेन—यजनेन। एतदुक्तं भवति—देवीशेषार्चाहोमाद्यनन्तरं कन्यकापूजनं कुर्यादिति ॥२४॥

कार्त्तिकेत्यादिभिः प्रसूनकमित्यन्तैस्त्रिभिः श्लोकैः कार्त्तिकदीपोत्सवपूजाक्रममुपदिशति, तत्र होमं कुर्यात्—नित्योक्तमन्त्रतइति, (२) ॥२५॥ विद्यया—श्रीविद्यया। शक्तीनां—वाराहीकुरुकुल्लादीनां परिवारशक्तीनां तत्तन्मन्त्रेणेति शेषः। अस्मिन् पक्षे पञ्चदशनित्यानां पृथक् पूजायां पञ्चदशदीपान् स्थापयेत् तत्तद्विद्याभिरिति सम्प्रदायः। वाराहीकुरुकुल्लयोर्देवीवत् ॥२६॥ अथवा पक्षान्तरं एष गौणः पक्षः ॥२७॥

मार्गशीर्षेत्यादिना श्लोकेन मार्गशीर्षमासपूजामुपदिशति। तत्र चन्द्रयुक्—कर्पूरयुतम्। नारिकेलाम्बु निवेद्य तदर्घ्योपेतं माषपिष्टापूपैः पूजयेदित्यर्थः। यथाविधि—अधिवासपूर्वम् ॥२८॥

---

(१) एकमेकादि इति सो॰ पु॰ पा॰। (२) नित्योक्तक्रमेणेति व॰ पु॰ पा॰।

पुष्ये मासि च पूर्णायां शर्कराभिर्गुडेन वा ।
पूजयेदिष्टसंसिद्ध्यै गव्यं दुग्धं निवेदयेत् ॥२९॥
माघे मासि च पूर्णायां तिलैः शुक्लैस्तथेतरैः ।
पूजयेद्दुग्धनैवेद्यसितापूपादिभिः सदा ॥३०॥
फाल्गुने मासि पूर्णायां पङ्कजैः स्वर्णराजतैः ।
चूतसौगन्धिमधुकैः पूजयेदीप्सिताप्तये ॥३१॥
विषुवायनदर्शासु युगादिषु समर्चनम् ।
कुर्याद्वैशेषिकं पुण्येष्वागमोक्तेषु तेष्वपि ॥३२॥
नित्यनैमित्तिकार्चासु निरतानां यतात्मनाम् ।
प्रोच्यन्ते काम्यरूपाणि षट्कर्माणि समर्चनैः ॥३३॥
यन्त्रहोमक्रियाध्यानयोगतर्पणपूजनैः ।
प्रोक्तानि काम्यकर्माणि प्रयोगेऽन्यत्समर्चयेत् ॥ ३४ ॥

---

पुष्ये मासीत्यादिना श्लोकेन पुष्यमासपूजामुपदिशति—तत्र वा पक्षान्तरे। गव्यं—गोसम्बन्धि। गव्यग्रहणं अजमहिष्यादिक्षीरव्यावृत्त्यर्थम् ॥२९॥

माघे मासीत्यादिना श्लोकेन माघमासपूजामुपदिशति—तत्र—शुक्लैः—श्वेतैः। इतरैः—कृष्णैः। तथेति—पक्षान्तरे। सिता—शर्करा। आदिशब्दः फलादिविषयः। सदा—सर्वदिनार्चनेषु ॥३०॥

फाल्गुने मासीत्यादिना श्लोकेन फाल्गुनमासपूजामुपदिशति। तत्र स्वर्णराजतैः—पुष्पैरिति शेषः ॥३१॥

विषुवेत्यादिना श्लोकेन पुण्येषु दिवसेषु पूजाविशेषानुपदिशति। तत्र युगादिषु—युगादिसंज्ञासु वैशाखादिमासोक्तासु तिथिषु। वैशेषिकं—त्रिःक्रमार्चनं-नित्यार्चनं नैमित्तिकार्चनं च। आगमोक्तेषु—गुरुजन्मदिवसादिषु ॥ ३२ ॥

अनन्तरं नित्येत्यादिभिरष्टषष्ठ्या श्लोकैः काम्यपूजाविधानमुपदिशति। तत्र नित्येत्यादिना समर्चनादित्यन्तेन श्लोकद्वयेन काम्यपूजाकरणयोग्यान् पूजयैव कामावाप्तिं चोपदिशति। तत्र—यतात्मनां—विवेकिनाम्। काम्यरूपाणि—यष्टव्यानि अभिमतानीत्यर्थः। समर्चनैः—यन्त्रहोमादिविकारैः। क्रिया—पुत्तलिकासु कण्टक-

रक्षा शान्तिर्जयो लाभो निग्रहो निधनं तथा ।
षट्कर्माणि तदङ्गत्वादन्येषां न पृथक् स्थितिः ॥३५॥
तानि(१) चैत्रादि चैत्रान्तं तिथिवारैश्च पार्वति !
पूजाद्रव्यैर्देशकालैः कथ्यन्ते साध्वनुक्रमात् ॥३६॥
रक्षायै भूपुरे शान्त्यै पूजयेद्वारिमण्डले ।
जयाय दहनागारे लाभायानिलमण्डले ॥३७॥
शेषयोर्व्योमगेहेऽस्याः पीताश्वेतारुणासितैः ।
द्रव्यैः षोढा विभज्याहः क्रमाद्रात्रिं च पूजयेत् ॥३८॥
तानि चैत्रादिऋतवः खण्डानि समुदीरिताः ।
तानि(२) पूजाविधौ प्रोक्तैर्देव्यास्तैर्नवनामभिः ॥३९॥
ललिता कामदा कामेत्येताभिर्द्वादश(३) क्रमात् ।
चैत्रादिमासनामानि तेषु तैर्दानपूजनैः ॥४०॥

---

वेधनादिः । ध्यानं–भूतोदयसमयस्मरणम् । योगः–साध्यस्वात्मनोरैक्यभावनम् । ॥३३॥ प्रयोगेऽन्यत् समर्चनात् । एतदुक्तं भवति–स्वस्वकाम्यावाप्त्युपायभूतेषु प्रोक्तेषु सप्तसु चरमभूतात् सप्तमात् पूजनादन्यदुपरिष्टाद्वक्ष्यते । अत्र केवलं सप्तमेन सपर्याविशेषेणैव वाञ्छितावाप्तिकथनमिति ॥ ३४ ॥

रक्षेत्यादिना श्लोकेन षट्कर्मस्वरूपमुपदिशति–तत्रान्येषां–वश्याकर्षणविद्वेषणादीनाम् ॥ ३५ ॥

तानीत्यादिना श्लोकेन काम्यपूजाविधानक्रमकथनप्रकारमुपदिशति । तत्र–तानि–षट्कर्माणि । देशकालैरित्यत्र कालशब्दोमुहूर्तादिवाची ॥३६॥

रक्षेत्यादिभिः समस्तु त इत्यन्तैः पञ्चदशभिः श्लोकैः भूतमण्डलेषु पूजया ऋतुमासतिथिवारेषु द्रव्यविशेषैः पूजया च फलविशेषानुपदिशति । तत्र भूपुरे–रेखाग्राष्टकशूलोपेते चतुरस्रे । वारिमण्डले–अर्द्धचन्द्राकारे शृङ्गद्वयपद्मोपेते मण्डले । दहनागारे–प्रतिकोणं स्वस्तिकोपेते त्रिकोणे । अनिलमण्डले–एकान्तरितमन्त्रवह्निर्विरचितविन्दुषट्कयुक्ते वृत्ते ॥३७॥ शेषयोः–निग्रहनिधनयोः । व्योमगेहे–केवले

---

(१) एतौ श्लोकौ सो० पुस्तके न स्तः । (२) नित्यपूजा इति मू० पुस्तके पाठः ।
(३) एतानि द्वा इति सो० पुस्तके पाठः ।

अभीष्टं समवाप्नोति बलारोग्यादिसिद्धिभिः ।
व्रीहिमाषयवक्षौद्रघृततैलपयोम्बरैः(१) ॥४१॥
हेम रत्नं तिलं मुद्गमिति द्रव्याण्यनुक्रमात् ।
चैत्रादिषु कृतं नाद्यं(२) दद्याद्विद्याविदेऽर्चयेत् ॥४२॥
श्लेष्मान्तककरञ्जाम्रनिम्बाश्वत्थकदम्बकाः* ।
बिल्वोवटश्च मातॄणां पादपाः समुदीरिताः ॥४३॥
चन्दनद्वयकर्पूरचूता व्युत्क्रमपीठगाः ।
तेषु चैत्रादिषु यजेदाज्ञासिद्धिर्दृढा भवेत् ॥४४॥
चैत्रादिकृतुसम्भूतैः प्रसूनैर्नित्यमर्चयेत् ।
आयुः कान्तिं श्रियं भूमिं विजयं शश्वदश्नुते ॥४५॥
प्रतिपत्तिथिमारभ्य क्रमादेकाभिवृद्धितः ।
मोचां गुडं नारिकेलं पूर्णान्तं(३) होमयेदपि ॥४६॥
ततः(४) प्रतिपदारभ्यदिनमेकैकशः क्रमात् ।
दर्शे त्वेकमथैवं स्यात् कृते लक्ष्म्या नृपो भवेत् ॥४७॥

---

वृत्ते। पीतश्वेतारुणासितैः--वायुनाभसोरसितवर्णैः। एतानि द्रव्याणि भूतमण्डलपूजायामिव। षोढाविभज्याह्नः—पञ्चभिः पञ्चभिर्घटिकाभिः, रात्रिं च उत्क्रमेण विभिद्य ॥३८॥ खण्डानि—घटिकाः। पञ्चपातिवेषु विषयेषु(?)। अहश्च रात्रिं च पञ्चभिर्घटिकाभिः षोढ़ा विभिद्य तेषु षड्कृतुभूतेषु क्रमात्तद्द्रव्यादीनि कुर्यात् इति। नवनामभिः त्रिपुरेत्यादिभिः ॥३९॥ क्रमात्—उत्क्रान्तोतिशेषः ॥४०॥ सिद्धिभिः—सममिति शेषः। पयः—क्षीरम् ॥४१॥ हेम इति पदच्छेदः। अर्चयेत् तमिति शेषः ॥४२॥ मातॄणां वशिन्यादिपरमार्थानाम्॥४३॥ व्युत्क्रमपीठगा इति। एतदुक्तं भवति। चूतकर्पूररक्तचन्दनचन्दनाख्याः—कामरूपपूर्णगिरिजालन्धरोड्यानपीठगा इति। तेषु—द्वादशसु विष्टरेषु ॥४४॥ नित्यं—नित्यकर्म्म ॥४५॥ होमयेत्—नित्यहोमान्ते विद्यया प्रोक्तद्रव्यसङ्ख्यायुक्तया जुहुयात्॥४६॥ ततः—पूर्णादिनात्। एवं कृते लक्ष्म्या नृपोभवेदित्य-

---

(१) पयो नरैः इति सो॰ पुस्तके पाठः।　　* कदम्बकैरिति मू॰ पु॰ पाठः।
(२) चैत्रादिषु कृतनाम्ना दद्याविद्या इति मू॰ पुस्तके पाठः।
(३) चूर्णान्तं इति सो॰ पुस्तके पाठः।　　(४) प्रतिपदारभ्याधीरमे इति सो॰ पुस्तके पाठः।

रविवारेऽरुणाम्भोजैः (१) कुमुदैः सोमवारके (२) ।
भौमे रक्तोत्पलैः सौम्ये वारे तगरसम्भवैः ॥४८॥
गुरुवारेषु कल्हारैः शुक्रवारे सिताम्बुजैः ।
उत्पलैः शनिवारेषु पूजयेदब्दमादरात् ॥४९॥
निवेदयेत् क्रमात्तेषु(३) रविवारादिसप्तसु ।
पायसं दुग्धकदलीनवनीतं सितिं घृतम् ॥५०॥
एवमब्दं समाराध्य देवीं गन्धादिभिः क्रमात् ।
ग्रहपीडां विजित्याशु सुखानि च समश्नुते ॥५१॥
चतुरस्रं समारभ्य नव(४) चक्राण्यनुक्रमात् ।
उन्नतोन्नतमामध्याच्चक्रं स्यान्निधनं धनम्(५) ॥५२॥
त्रित्रिक्रमादुन्नतं तत् सुप्रजत्वं श्रियं(६) लभेत् ।
एक द्विषट्क्रमोन्नामः श्रियै कीर्त्यै च कल्पते ॥५३॥
नवानि समरूपाणि(७) सर्वाभीष्टार्थसिद्धये ।
रत्ने हेमनि रूप्ये च ताम्रे दृषदि च क्रमात् ॥५४॥

---

न्वयः ॥४७॥ तगरसम्भवैः—जलजविशेषैः नन्द्यावर्तैर्वा ॥४८॥४९॥ सितिं—पिण्डसिकताविग्रहे ॥५०॥ गन्धादिभिरित्यत्र आदिशब्देन उपचारान्तराण्युच्यन्ते ॥५१॥

चतुरस्रमित्यादिभिः सर्वथा इत्यन्तैः षड्भिः श्लोकैः श्रीचक्रनिर्माणस्वरूपविशेषेण फलसिद्धिविशेषानुपादानद्रव्यविशेषैः फलविशेषान्निषिद्धाधिकरणानि तेषु करणे प्रत्यवायं चोपदिशति। तत्र आमध्यात् देवतानिवासत्रिकोणमध्यावधि निधनं धनावाप्त्यनन्तरं निधनं भवति ॥५२॥ त्रित्रिक्रमादुन्नतं—चतुरस्रपद्मद्वयरूपात् चतुर्दशारदशारद्वयमुन्नतं तस्मान्नवयोनिकम्। तत्—श्रीचक्रमितिशेषः। एकद्विषट्क्रमोन्नामः—चतुरस्रोत् पद्मद्वयमुन्नतं तस्माच्चतुर्दशारादिकं समुन्नतम् ॥५३॥ नवानि इति

---

(१) रविवारेरुणां भोजौ इति सो० पुस्तके पाठः। (२) सोमकारकैः इति सो० पुस्तके पाठः।
(३) निवेदयन् कासां तेषु इति मू० पुस्तके पाठः। (४) पञ्चवक्त्रान्य इति मू० पुस्तके पाठः।
(५) धनं धनें इति सो० पुस्तके पाठः। (६) त्रिविक्रमादुन्नत्तं तत्र सुप्रजत्त्वं श्र्यं इति मू० पु० पा० तदप्रजत्त्वं इति सो० पु० पा०। (७) श्रमरूपाणि इति मू० पुस्तके पाठः।

कृत्वा श्रीचक्रनिर्माणं स्थापयेत् पूजयेदपि ।
लक्ष्मीकान्तियशःपुत्रधनारोग्यादिसिद्धये ॥५५॥
सीसकांस्यादिषु पुनः पूर्वोक्तविपरीतकृत् ।
फलकायां पटे भित्तौ स्थापयेन्न कदाचन ॥५६॥
स्थापितं यदि लोभेन मोहेना ऽज्ञानतोऽपि वा ।
कुलवित्तमपत्यं च निर्मूलयति सर्वथा ॥५७॥
पर्वताग्रे यजेद्देवीं पलाशकुसुमैर्निशि ।
सिद्धद्रव्यैश्च(१) सप्ताहात् खेचरीमेलनं भवेत् ॥५८॥
अरण्ये वटमूले वा कुञ्जे(२) वा धरणीभृताम् ।
कदम्बजातीपुष्पाभ्यां सिद्धद्रव्यैः शिवां यजेत् ॥५९॥
मासेन सिद्धा यक्षिण्यः प्रत्यक्षा वाञ्छितप्रदाः ।
केतकीकुसुमैः सिद्धाश्चेटका वारिधेस्तटे ॥६०॥
आज्ञामभीष्टां वनितां रणे मायां महाद्भुतम् ।
वसूनि मालाभूषादि दद्यादस्येच्छयाऽनिशम् ॥६१॥

---

दिव्यत्वान्नवेत्यर्थः । समरूपाणि — नवचक्राणि इत्यर्थः । समस्थलानि । रत्ने — षोड़शस्वन्यतमे । दृषदि — शिलायाम् । एतान्यधिकरणानि सर्वनित्यार्चनप्रस्तारसाधारणानि ॥ ५४ ॥ स्थापयेत् — प्रतिष्टां कुर्यात् ॥ ४५ ॥ सीसकांस्यादीत्यत्रादिशब्देन नागमायसं च गृह्णाति । पूर्वोक्तविपरीतकृत्-अलक्ष्म्यादिकरमित्यर्थः ॥ ५६ ॥ लोभेन — वित्तेच्छया । मोहेन — अविवेकात् । अज्ञानतः निषेधाज्ञानतः ॥ ५७ ॥

पर्वताग्रे इत्यादिभिर्विनोदवानित्यन्तैः पञ्चदशभिः श्लोकैः सप्तविधसिद्ध्युपायमुपदिशति । तत्र सिद्धद्रव्यैः—सिद्धद्रव्यं गुरुमुखादेवागन्तव्यम् । खेचरीमेलनं— अप्सरोमेलनम् ॥५८॥ कुञ्जे — कन्दरायाम् ॥५९॥ यक्षिण्यः — नीलपताकापटले वक्ष्यमाणाः षट्त्रिंशत्विग्रहाः । चेटकाः—चेटकानाम चतुःषष्टिविग्रहाः देवतास्तत्पटले वक्ष्यमाणाः ॥६०॥ मायां — इच्छाधीनान् कृत्रिमविग्रहान् दर्शयितुं सामर्थ्यं

---

(१) सिद्धिद्रव्यैरिति सी० सू० पुस्तके पाठः ।
(२) आरण्ये वटमूलेन वा वज्रे वा इति सी० पुस्तके पाठः ।

पीठमन्त्रद्रुमैः कृत्वा तत्र देवीं यजेन्निशि ।
शाल्मलीकुसुमैः सिद्धद्रव्यैर्मासं तु निर्भयः ॥६२॥
श्मशाने(१) देवदेवेशि ! सिद्ध्यन्त्यस्य पिशाचिकाः ।
अश्मपातप्रहाराद्यैरस्य(२) घ्नन्ति द्विषश्चिरम् ॥६३॥
निर्जने विपिने रात्रौ मासमात्रं तु निर्भयः ।
यजेद्देवीं चक्रगतां सिद्धद्रव्यसमन्विताम् ॥६४॥
मालतीजातिपुन्नागकेतकीमनुभिः(३) क्रमात् ।
तेन सिद्ध्यन्ति वेतालास्ता नारुह्य स्वेच्छया चरेत् ॥६५॥
श्मशाने चण्डिकागेहे निर्जने विपिनेऽपिवा ।
मध्यरात्रे यजेद्देवीं कृष्णवस्त्रादिभूषणः ॥६६॥
कृष्णचक्रे तिकृष्णां तामतिक्रुद्धाशयो जपेत्(५) ।
(५)साध्ययोनिं तदग्रे तु बलिं(६) दद्यान्निवेदयेत् ॥६७॥
सिद्धद्रव्यसमोपेतं मासं तद्भाललोचनात् ।
जायन्ते भीषणाः कृत्यास्ताभ्यः साध्यं निवेदयेत् ॥६८॥
विश्वसंहारसन्तुष्टाः पुनर्यान्ति निजेच्छया ।
देव्या ललाटनेत्राः स्युः प्रार्थनेन तिरोहिताः ॥६९॥

दद्यात्, एकैक इति शेषः ॥६१॥ निर्भयः—पिशाचादिदर्शनात् अचकितचित्तः ॥६२॥ पिशाचिकाः—पिशाचिका नाम काश्चन भीमविग्रहा देवताः ॥६३॥ चक्रगतां—नित्यसपर्याप्रोक्तचक्रे तदुक्तप्रकारेण सप्तसु प्रोक्तसिद्ध्युपायेषु समर्चयेदित्यर्थः । अन्यासामपि तत्तन्नित्यपूजाचक्रे नैमित्तिककाम्यार्चनम् ॥६४॥ वेतालास्ते च विरूपाः । भीषणाकाराः असङ्ख्याताः काश्चन देवताः ॥६५॥ कृष्णवस्त्रादिभूषणः—आदिशब्देन गन्धमाल्यानुलेपनादिकम् ॥६६॥ कृत्यचक्रे अञ्जनद्रवागुरुपङ्काभ्यां निर्मिते । साध्ययोनिं—उत्तरत्र वक्ष्यमाणां साध्यनक्षत्रयोनिम् । तासां

(१) श्मशानदेशे देवेशि इति मू० पुस्तके पाठः । (२) दौर्जीयात्ताभिर्द्विष इति मू० पुस्तके पाठः ।
(३) मरुभिः इति सो० पुस्तके पाठः । (४) कृष्णचक्रे प्रतिकृष्णां तामति क्रुध्वाशयो यजेत् इति मू० पु० पा० ।
(५) मध्ययोनिमिति मू० पुस्तके पाठः । (६) बलिं छिन्दन्निवे इति मू० पुस्तके पाठः ।

रक्तभूषाम्बरालेपमालाभूषितविग्रहः ।
उद्याने निर्जने देवीं चक्रे सञ्चिन्त्य पूजयेत् ॥७०॥
कह्लारचम्पकाशोकपाटलाशतपत्रकैः ।
सिद्धद्रव्यसमोपेतैर्मायाः सिद्ध्यन्ति मासतः ॥७१॥
यासां प्रसादलाभेन कामरूपोभवेन्नरः ।
याभिर्विश्वमयोविश्वचारी विश्वविनोदवान् ॥७२॥
षड़ाधाराब्जमध्ये तु चक्रं सञ्चिन्त्य पूजयेत् ।
चन्द्रचन्दनकस्तूरीमृगनाभिर्महोदयैः ॥७३॥
त्रिकालज्ञो भवेद्देवीं तेषु सम्यग्विचिन्तयेत् ।
पूर्णप्रतीतौ भव्यानि विकलेऽभव्यमीरितम् ॥७४॥
देवीं चक्रेण सहितां चुलुके सलिले स्मरेत् ।
मातृकासहितां विद्यां त्रिरावृत्त्यामृतात्मकम्(१) ॥७५॥
नाड़ीं सारस्वतीं जिह्वां दीपाकारां स्मरन् पिबेत् ।
अब्दाच्चतुर्विधं तस्य पाण्डित्यं भुवि जायते ॥७६॥

---

विग्रहानुपरिष्टाद्वक्ष्यति ॥ ६७ ॥ प्रार्थनेन—युष्मत्प्रसादात् सिद्धमस्मत्समोहितम्, यथागतं गच्छत इति प्रार्थनेन ॥६८॥६९॥ मालाभूषितविग्रहः—साधकः इति शेषः ॥ ७० ॥ कह्लारादिभिः समस्तैरन्यतमेन वा । एवं सर्वत्रापि ॥७१॥ विश्वविनोदवान् इन्द्रजालादिप्रदर्शनेन ॥ ७२ ॥

षड़ाधारेत्यादिना इंगित इत्यन्तेन श्लोकद्वयेन भविष्यद्वर्तमानार्थापरोक्षोपायमुपदिशति । तत्र षड़ाधाराब्जादीनि उत्तरत्र वक्ष्यति । चक्रं सञ्चिन्त्य—तेष्वन्यतमे । महोदयः—गुरुमुखादवगन्तव्यः॥७३॥ देवीं—ललिताम् । सम्यक्—नित्यपूजोक्तविग्रहतः । पूर्णप्रतीतौ—प्रोक्तरूपभावनासिद्धौ । भव्यानि—मङ्गलानि सिद्ध्यन्तीति शेषः । विकले--आयुधवर्णावयवादिवैकल्यस्फुरणे । अभव्यं—अमङ्गलम् ॥७४॥

देवीमित्यादिभिरात्मविदित्यन्तैस्त्रिभिः श्लोकैश्चतुर्विधपाण्डित्यादिसिद्ध्युपाय-

---

(१) मृतात्मिकाम् इति मू० पु० पा० ।

एवं नित्यमुषःकाले यः कुर्याच्छुद्धमानसः ।
स योगी ब्रह्मविज्ज्ञानी शिवयोगी तथाऽऽत्मवित् ॥७७॥
अनुग्रहोक्तचक्रस्थां देवीं ताभिर्वृतां यजेत् ।
चम्पकेन्दीवरैर्मासादारोग्यमुपजायते ॥७८॥
ज्वरभूतग्रहोन्मादशीतिकाकामलाचिरुक् (१) ।
दन्तकर्णज्वरशिरःशूलगुल्मादिकुक्षिजाः ॥ ७९ ॥
व्रणप्रमेहकुष्ठार्शोग्रहण्यन्यत्रिदोषजाः ।
सर्वे तया समं यान्ति पूजया परमेश्वरि ! ॥८०॥
द्रव्यं चक्रस्य निर्माणे काश्मीरं समुदीरितम् ।
सिन्दूरं गैरिकं लाक्षा दरदं चन्दनेऽपिवा ॥८१॥
बिलद्वारे लिखेच्चक्रं षोड़शत्र्यस्रसंयुतम् ।
दरदेनास्य मध्यस्थां पूजयेत्परमेश्वरीम् ॥८२॥

---

मुपदिशति । तत्र अमृतात्मकं सलिलमिति शेषः ॥७५॥ जिह्वां—एतदुक्तं भवति—सरस्वतीनाड़ीविग्रहां जिह्वां स्वात्मतेजोविग्रहां विभाव्य तत्तेजसि तदमृतं होमबुद्ध्या पिबेदिति । चतुर्विधं पाण्डित्यं वादित्वकवित्ववाग्मित्वव्याख्यातृत्वरूपम् ॥७६॥ नित्यं—यावज्जीवम् । सयोगीत्याद्युक्तस्य पञ्चप्रकारस्यैकरूप्येऽपि एवं नानारूपकथनं लोकोक्त्यनुमत्यर्थम् ॥७७॥

अनुग्रहोक्तेत्यादिना परमेश्वरीत्यन्तेन श्लोकत्रयेण सर्वव्याधिपरिहारपूजामुपदिशति । तत्र अनुग्रहोक्तचक्रस्थां—नित्यानित्यापटलोक्तानुग्रहचक्रस्थाम् । ताभिः—तत्रोक्ताभिर्डाकिन्यादिभिरष्टचत्वारिंशच्छक्तिभिर्यजेत् । तत्रोक्तविधानत इति शेषः । इन्दीवरैर्नीलोत्पलैः ॥७८॥ ज्वर इत्यादि षोड़शविधव्याधिकथनं सर्वेषां व्याधीनामुपलक्षणार्थम् । तत्र दन्तकर्णज्वर इत्यत्र ज्वरशब्दः पीड़ावाची । शिरःशूलं - शिरोरोगः । त्रिदोषजाः वातपित्तश्लेष्मणां एकैकव्याधिसङ्कीर्णजनिता रोगाः सर्वरोगाइति शेषः ॥७९॥८०॥

द्रव्यमित्यादिना श्लोकेन अभिषेकादिषु श्रीचक्रनिर्माणद्रव्यसप्तकमुपदिशति । तत्र चन्दने—शीतरक्ते ॥८१॥

---

(१) शान्तिकाकामलाचियुक् इति म० पाठः ।

ताभिस्तच्छक्तिभिःसार्कं सिद्धद्रव्यैः सुगन्धिभिः ।
कुसुमैर्मासमात्रेण नागकन्याः समेत्य तम् ॥८२॥
पातालादिषु लोकेषु रमयन्ति प्रियाश्चिरम् ।
यक्षराक्षसगन्धर्वसिद्धविद्याधराङ्गनाः ॥ ८३ ॥
पिशाचा गुह्यका वीराः किन्नरा उरगाः प्रिये !
सिद्ध्यन्ति पूजनात्तत्र तथा तत्प्रोक्तकालतः ॥ ८४ ॥
किंशुकैर्भूषणावाप्त्यै (१) पाटलैर्गजसिद्धये ।
रक्तोत्पलैरश्वसिद्ध्यै (२) कुमुदैः खरसिद्धये ॥८५॥
उत्पलैरुष्ट्रसंसिद्ध्यै तगरैः पशुसिद्धये ।
जम्बीरैर्महिषावाप्त्यै (३) लकुचैरजसिद्धये ॥८६॥
दाडिमैर्निधिसंसिद्ध्यै मधुकैर्नागसिद्धये (४) ।
बकुलैरङ्गनासिद्ध्यै कल्हारैः पुत्रसिद्धये ॥८७॥
शतपत्रैर्जयावाप्त्यै केतकैर्वाहनाप्तये ।
सौरभाद्यैः प्रसूनैस्तु नित्यं सौभाग्यसिद्धये ॥८८॥

---

बिलद्वारे इत्यादिभिः कालतः इत्यन्तैश्चतुर्भिः श्लोकैर्नागकन्याद्येकादशसिद्ध्युपायमुपदिशति । तत्र बिलद्वारे—पातालप्रवेशमार्गद्वारोपकण्ठतः । षोडशवरास्त्रसंयुतं—पूर्णाभिषेकप्रोक्तप्रक्रियया ॥८१॥ ताभिः—षण्णवतिसङ्ख्याताभिः । तच्छक्तिभिः—सचत्वारिंशच्चतुःशताधिकसहस्रसङ्ख्याताभिः । एतच्चक्रार्चनं ललितानित्याया एव, नान्यासाम् । तं—साधकम् ॥८२॥ यक्षेत्यादयो देवताविशेषाः ॥८३॥ तत्र वीरा—मनुष्यसिद्धरूपाः ॥८४॥

किंशुकैरित्यादिभिः सौभाग्यसिद्धये इत्यन्तैश्चतुर्भिः श्लोकैः पञ्चदशविधैः प्रसूनैरर्चनात् पञ्चदशविधवाञ्छितसिद्धिमुपदिशति । तत्र रक्तोत्पलैः—रक्तकुसुमैः । तगरैः—प्राग्वत् । जम्बीरैः—नारङ्गैः । वाहनाप्तये—स्यन्दनान्दोलिकादिसिद्धये ॥८५॥८६॥८७॥८८॥

---

(१) व्याप्त्यै पालाशैरिति मू० पु० पा० । (२) रक्तसिद्ध्यै इति सौ० पु० पा० ।
(३) व्याप्तैरिति मू० पु० पा० । (४) गोनसिद्धये इति मू० पु० पा० ।

पूजयेन्मासमात्रं वा द्विगुणं त्रिगुणं तु वा ।
यावत्फलाप्ति वा क्षीरशर्कराघृतपायसैः ॥८९॥
सचक्रपरिवारां तां देवीं सलिलमध्यगाम् ।
तर्पयेत् कुसुमैः साध्यैः (१) सर्वोपप्लवशान्तये ॥९०॥
घृतैः पूर्णायुषः सिद्ध्यै क्षौद्रैः सौभाग्यसिद्धये ।
दुग्धैरारोग्यसंसिद्ध्यै त्रिभिरैश्वर्यसिद्धये ॥९१॥
नालिकेरोदकैः प्रीत्यै हिमतोयैर्नृपाप्तये ।
सर्वार्थसिद्धये तोयैरभिषिञ्चेन्महेश्वरीम् ॥९२॥
पूगोद्याने यजेद्देवीं सिद्धद्रव्यैर्दिवाऽनिशम् ।
निवसंस्तत्र तत्पुष्पैर्जायते मन्मथोऽपरः ॥९३॥
पूर्णासु नियतं देवीं कन्यकायां समर्चयेत् (२) ।
कृत्याः परैरिता मन्त्रा विमुखास्तान् ग्रसन्ति वै ॥९४॥

---

पूजयेदित्यादिना श्लोकेन काम्यफलावाप्तिकालान् सर्वत्र निवेद्यद्रव्याणि चोपदिशति । तत्र क्षीरादीनि चत्वारि द्रव्याणि सर्वनैवेद्यानीत्यर्थः ॥८९॥

सचक्रेत्यादिना श्लोकेन सर्वोपद्रवशान्त्यै साद्र*क्रमतर्पणादिकमुपदिशति । तत्रैतदुक्तं भवति—राजक्रोधत्रिविधोत्पातवैरिपीडाग्रहवैकृतरोगार्त्यादिषु जलाशये स्नातः धौताम्बरः पद्मविष्टरोपविष्टः कृतन्यासः कृतार्चो नाथाज्ञया श्रीचक्रं सलिलोपरि विभाव्य तन्मध्यगां देवीं स्वर्णरूप्यताम्रेष्वन्यतमचषकपूरितं सलिलं अर्घ्यं कर्पूरादिभिः सुरभिप्रसूनजुष्टं प्रतिशक्तिकं नित्यपूजामन्त्रैस्तत्क्रमेण दद्यात्, तेन सर्वोपप्लवशान्तिर्भवति ॥९०॥

घृतैरित्यादिना महेश्वरीमित्यन्तेन श्लोकद्वयेन देव्याः षड्भिरभिषेकद्रव्यैः सप्तविधाभिषेकं तत्फलानि चोपदिशति । तत्र त्रिभिः—प्रोक्तैः (३)॥ ९१ ॥ प्रीत्यै—स्वनिर्वृत्तये ॥ ९२ ॥

पूगेत्यादिभिः घोरतरैरपीत्यन्तैः षड्भिः श्लोकैः प्रतिश्लोकमेकैकप्रकारेण

---

(१) साद्रैरिति सं० पु० पा० । (२) समर्चनात् इति मू० पु० पा० ।
(३) श्लोकैरिति सं० पु० पा० । * साद्र इति टी० पु० पा० ।

लिङ्गत्रयगतां देवीं चक्रस्थाभिः (१) स्वशक्तिभिः ।
पूजयन्निष्ट(२)मखिलं लभतेऽत्र परत्र च ॥९५॥
शतमानकृतैः स्वर्णपुष्पैः सौरभ्यवासितैः ।
पूजयेन्मासमात्रेण प्रागजन्माघैर्विमुच्यते ॥९६॥
तथा रत्नैश्च नवभिः मासं मासन्तु पूजयेत् ।
विमुक्तः सर्वपापौघैस्तां पश्यति च चक्षुषा ॥९७॥
अंशुकैरर्चयेद्देवीं मासमात्रं सुगन्धिभिः ।
मुच्यते पापकृत्यादिदुःखैर्घोरतरैरपि ॥९८॥
देवीरूपं स्वमात्मानं चक्रं शक्तीः समंततः ।
भावयन्विषयैः पुष्पैः पूजयंस्तन्मयो भवेत् (३) ॥९९॥

---

षट्प्रकारभजनमुपदिशति । तत्र तत्पुष्पैः—पूगप्रसूनैः ॥९३॥९४॥ लिङ्गत्रयगतां स्वयम्भुबाणेतरलिङ्गस्थां मूलाधारहृदयब्रह्मरन्ध्रगताम् । चक्रस्थाभिः—अणिमा—दिभिः । अत्र इदन्ताविषये । परत्र—पराहन्ताविषये । एतदुक्तं भवति—मूलाधार-हृदयब्रह्मरन्ध्रेषु अन्यतमे नित्यसपर्याप्रोक्तचक्रस्थां तत्रस्थाभिरणिमादिभिः परिवृतां विभाव्य पूजयन् इष्टफलं लभेतेति ॥९५॥ प्रागजन्माघैः—चिरन्तनाभिर्दुर्वा-सनाभिः ॥९६॥ मासंमासं—प्रतिरत्नमेकैकं मासम् । पापौघैः—सङ्कोचभावैः । चक्षुषा इत्युक्त्या मनसाऽनुभवसिद्धं कथयति ॥ ९७ ॥ पापकृत्यादिदुःखैः—पापैः—स्वकीयविवेकैः । कृत्यादिदुःखैररातिभिर्दुष्प्रयोगोत्थाभिः ताभिः कृत्यादिभिः आदिशब्देन यन्त्रचूर्णौषधनिक्षेपा उच्यन्ते तैश्च जनितैर्दुःखैरित्यर्थः ॥ ९८ ॥

देवीरूपमित्यादिना श्लोकेन अखण्डविश्वरूपतादेवताभावनाज्जीवन्मुक्तरूपं परिपूर्णं फलमुपदिशति । तत्र चक्रं—सकलदेवतावासभूतं श्रीचक्रम् । शक्तीः—आवरणशक्त्याद्यनन्तसङ्ख्यात्मशक्तीः । विषयैः—शब्दादिरूपैः । तन्मयोभवेत्—तदहङ्कारे स्वाहङ्कारं विलापयेदित्यर्थः (५) ॥ ९९ ॥

---

(१) चक्रस्थाभिश्च इति म० पु० पा० ।　　(२) पूजयेन्नित्यमिति सो० पु० पा० ।

(३) लभ्यते इति म० पु० पा० ।　　(४) पूजयेन्मन्त्रयोजपेत् इति सो० पु० पा० ।

(५) प्रत्येकं पटलेषु श्लोकानां शतं वर्तते परमस्मिन् पटले बहुवारमादर्शपुस्तकानुसन्धाने कृतेऽपि श्लोकस्यैक-स्यादर्शनात् प्रमादादेकः श्लोकः प्रभ्रष्ट इत्यनुमीयते ।

गन्धतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति श्रीषोड़शनित्यातन्त्रेषु कादिमते षष्ठं
पटलम् ।

---

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमते प्रपञ्चसारसिंहराजप्रकाशाभि
धानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां
षोड़शनित्यानैमित्तिककाम्यार्चनप्रकाशनपरं षष्ठं पटलं
परिपूर्णं परामृष्टम् ॥ ६ ॥

ग्रन्थसङ्ख्या—

षष्ठे यन्त्राणि सप्त,स्युर्व्याख्या ग्रन्थशतात्परम् ।
षट् त्रिपादास्त्रिषष्टिः स्युरिति सम्यक् समीरितम् ॥

## अथ सप्तमं पटलम् ।

अथ षोड़शनित्यासु द्वितीया या समीरिता ।
कामेश्वरीति ताः सर्वकामदाः (१) शृणु तत्त्वतः ॥१॥
तत्त्वन्यासं ध्यानभेदांस्तच्छक्तीस्तत्प्रपूजनम् ।
तद्योगभेदांस्तद्यन्त्राण्यभीष्टार्थप्रदानि च ॥२॥
विद्यारूपं तु (२) ते देवि ! प्रोक्तं प्रागेव तत्स्फुटम् ।
मूलविद्याक्षरैरेवं कुर्यादङ्गानि षट्क्रमात् ॥३॥
एकेन हृदयं शीर्षं तावताथोऽद्वयं(३) द्वयात् ।
चतुर्भिर्नयनं तद्वदस्त्रमेकेन चोदितम् ॥४॥

---

## अथ सप्तमं पटलम् ।

पूर्वं प्रथमाया अङ्गिनित्याललितायाः नित्यपूजां सर्वनित्यासाधारणनैमित्तिक-काम्यसपर्यादिक्रमं चतुर्थपञ्चमषष्ठपटलैरुपदिश्यानन्तरं द्वितीयायाः कामेश्वरी-नित्याया विधानमुपदिशति—अथ षोड़शेत्यादिना क्वचिदित्यन्तेन श्लोकशत-रूपेण सप्तमपटलेन। तत्र अथ षोड़शेत्यादिना अर्थप्रदानि च इत्यन्तेन श्लोकद्वयेन पटलार्थानुपदिशति। तत्र—तत्वतः—यथावत्॥ १ ॥ तच्छक्तीः—तदावरणभूताः शक्तीरित्यर्थः ॥ २ ॥

विद्यारूपमित्यादिना क्रमेण वै इत्यन्तैश्चतुर्भिः श्लोकैर्विद्यान्यासक्रममुपदिशति। ऐं सक्लीं नित्यक्लिन्ने मदद्रवे सौः। तत्र प्रागेव—तृतीयपटले ॥३॥ एकेन हृदयमिति। तावता—एकेन। एतदुक्तं भवति—कामेश्वरीमूलविद्यायाः प्रथमाक्षरेण हृदयं, द्वितीयेन शीर्षं, तृतीयचतुर्थाभ्यां शिखा, पञ्चमषष्ठाभ्यां कवचं, सप्तमाष्टमनवमदशमैश्चतुर्भिर्नेत्रं, एकादशेनान्त्येनास्त्रम्। एवं षोढा विभिन्नेन जाति-युक्तेन मूलमन्त्रेण षड़ङ्गन्यासं कराग्रयोः कुर्यादिति, उत्तरत्र नवमे पटले

---

(१) तान् सर्वं कामदां इति सो० पु० पा०। (२) देवेशि इति मू० पु० पा०।

(३) तावताथोद्वयं इति सो० पु० पा०।

दृक्श्रोत्रनासाद्वितये जिह्वाहृन्नाभिगुह्यके ।
व्यापकत्वेन सर्वाङ्गे मूर्द्धादि प्रपदावधि ॥५॥
न्यसेद्विद्याक्षराख्येषु स्थानेषु तदनन्तरम् ।
समस्तेन व्यापकन्तु कुर्यादुक्तक्रमेण वै ॥६॥
अथ ध्यानं प्रवक्ष्यामि नित्यपूजासु चोदितम् ।
येन देवी सुप्रसन्ना ददातीष्टमयत्नतः(१) ॥७॥
बालार्ककोटिसङ्काशां माणिक्यमुकुटोज्ज्वलाम् ।
हारग्रैवेयकाञ्चीभिरूर्मिकानूपुरादिभिः ॥८॥
मण्डितां रक्तवसनां रत्नाभरणशोभिताम् ।
षड्भुजां त्रीक्षणामिन्दुकलाकलितमौलिकाम् ॥९॥
पञ्चाष्टषोड़शद्वन्द्वषट्कोणचतुरस्रगाम् ।
मन्दस्मितोल्लसद्वक्त्रां दयामन्थरवीक्षणाम् ॥१०॥

---

स्वयमेव वक्ष्यति—यथा—अङ्गुष्ठादिकनिष्ठान्तं* अधऊर्द्धं क्रमेण हृदयादिभिर्नेत्रान्तैः उभयकरपञ्चाङ्गुलीषु अस्त्रेणान्योन्यमार्जनात् करतलद्वये(न च न्यसेदिति। ऐं हृदयाय नमः इत्यादिभिः ॥ ४ ॥

दृगित्यादिना क्रमेण वै इत्यन्तेन श्लोकद्वयेन विद्याया एकादशाक्षरेण स्वमूर्द्धादिपादद्वयांगुलिनखावधि स्वकरतलाभ्यां परामृश्य पादद्वयाग्रादारभ्य हृदयान्तमूर्द्धं परामृशेत्। हृदये अञ्जल्यन्तं नाथदर्शितप्रक्रियया व्यापकं न्यासं कुर्यादिति। एवं सर्वेषां मन्त्राणां सर्वन्यासान्ते व्यापकं न्यासं कुर्यादित्यर्थः। मन्त्राक्षरन्यासक्रमसुपदिशति। तत्र गुह्यके-मूलाधारे। मूर्द्धादिप्रपदावधि। एतदुक्तं भवति—एषु प्रोक्तेषु दशसु स्थानेषु सर्वाङ्गे च समस्तेन मूलमन्त्रेणेतिशेषः। व्यापकं च पूर्ववत् पुनरपि कुर्यादित्यर्थः ॥ ६ ॥

अथ ध्यानमित्यादिभिः तत्र वै इत्यन्तैः षड्भिः श्लोकैर्देव्या नित्यसपर्याध्यानमुपदिशति। तत्र येन—ध्यानेन॥७॥ ऊर्मिका—अङ्गुलीयकम् ॥८॥ इन्दुकलाकलितमौलिकां—चन्द्रकलावतंसत्वं पञ्चदशानां नित्यानां साधारणं नाम ॥ ९ ॥ पञ्चाष्टषोड़शद्वन्द्वषट्कोणचतुरस्रगाम्। एतदुक्तं स्यात्—समान्तरालं सूत्रद्वयमन्त

---

(१) ददामीष्टमिति सो॰ पु॰ पा॰।

* अङ्गुष्ठादिकवियान्तं इति वं॰ पु॰ पा॰।

पाशाङ्कुशौ च पुण्ड्रेक्षुचापं पुष्पशिलीमुखम् ।
रत्नपात्रं सुधापूर्णं वरदं बिभ्रतीं करैः ॥११॥
एवं ध्यात्वाऽर्चयेद्देवीं नित्यपूजासु सिद्धये ।
प्रयोगादिषु सर्वत्र वक्ष्ये ध्यानानि तत्र वै ॥१२॥
मदनोन्मादनौ पश्चात्तथा दीपनमोहनौ ।
शोषणश्चेति कथिता बाणाः पञ्च पुरोदिताः ॥१३॥
कुसुमा मेखला पश्चान्मदना मदनातुरा ।
अनङ्गपदपूर्वास्ताः पञ्चमी मदवेगिनी ॥१४॥
ततो भुवनपाला स्यात् शशिरेखा त्वनन्तरा ।
रेखा गगनपूर्वाऽन्या पूज्या पत्रेषु चाष्टसु ॥१५॥

---

र्बहिर्विभागेन समचतुरस्राकारं कृत्वा तदन्तर्वृत्तद्वयं कृत्वा तत्र च वक्ष्यमाणक्रमेण षट्कोणं विधाय तदन्तर्वृत्तद्वयं एकाङ्गुलान्तरालं विधाय तदन्तश्चतुरङ्गुलान्तरालं वृत्तं कृत्वा तदन्तरेकाङ्गुलमानेन वृत्तं कृत्वा एवं प्रवेशगत्या त्रिः कृत्वा (१) समान्तर्वृत्तवीथ्यां पञ्च दलानि कृत्वा तद्बहिः वृत्तवीथ्यां * अष्टदलानि कृत्वा तद्बहिरपि वृत्तवीथ्यां षोड़शपत्राणि कुर्यात्। एवं पञ्चदलाष्टदलषोड़शदलषट्कोणचतुरस्रगामित्यर्थः। एतेषां मानविशेषश्च उपरिष्टाद्वक्ष्यमाणत्वादिह न प्रपञ्चितः ॥१०॥ पाशाङ्कुशाविति। एतान्यायुधादिवामोर्ध्वहस्तादि वामाधरहस्तान्तं वामदक्षिणक्रमेणाधरहस्तयोर्दक्षिणवामक्रमेण च कल्पयेत् ॥११॥ तत्र वै—प्रयोगोपदेशस्थानेषु ॥१२॥

मदनोन्माद इत्यादिना श्लोकेन पञ्चसु दलेषु पूज्याः पञ्चबाणशक्तीरुपदिशति। तत्र—पुरोदिताः—प्रागुदीरिताः। पञ्चबाणशक्तीः। एतदुक्तं—स्यात्—(२) चतुर्थपटलोक्तशैवबाणपञ्चकैः एकैकाक्षरमन्त्रपूर्वैः मदनोन्मादनेत्यादिभिर्नामभिः पञ्चबाणशक्तीः पूजयेत् ॥१३॥

कुसुमेत्यादिना अष्टस्वित्यन्तेन श्लोकद्वयेन द्वितीयतृतीयावरणे अष्टसु दलेषु

---

(१) सर्वान्तर्वृत्तवीथ्यां इति टी० पु० पा० सर्वान्तर्वृत्तवीथ्यामिति सो० पु० पा०।

(२) भवति इति टी० पु० पा०।　　* षोड़श इति सो० पु० पा०।

श्रद्धा प्रीती रतिश्चैव धृतिः कान्तिर्मनोरमा ।
मनोहराऽष्टमी प्रोक्ता देवी साऽत्र मनोरथा ॥१६॥
मदनोन्मादिनी पश्चान्मोहिनी दीपनी ततः ।
शोषणी च वशंकारी सिंजिनी सुभगा ततः ॥१७॥
सस्वराः षोड़श प्रोक्ताः प्रियदर्शन (१) कान्तिकाः ।
पूज्यास्ताः प्रतिपत्त्रं तु प्रत्येकं षोड़शच्छदे ॥१८॥
पूषाविशा (२) सुमनसा रतिः प्रीतिर्धृतिस्तथा ।
ब्रद्धिसौम्या (३) मरीचिश्च परतस्त्वंशुमालिनी ॥१९॥
शशिनी चाङ्गिरा छाया ततः सम्पूर्णमण्डला ।
तुष्ट्याऽमृताख्या कथिताः कलाः स्युः सस्वरा विधोः ॥२०॥
षोड़शेष्वपि पत्रेषु पूजयेत्ता यथाक्रमम् ।
बहिः षट्कोणकोणेषु डाकिन्याद्यास्तथाऽर्चयेत् ॥२१॥

---

पूज्याः शक्तीरुपदिशति। तत्र अनङ्गपदपूर्वास्ता इति पूर्वोक्ताश्चतस्रः एतदुक्तं स्यात्—अनङ्गकुसुमा अनङ्गमेखला अनङ्गमदना अनङ्गमदनातुरा इति ॥१४॥ रेखा गगनपूर्वा—गगनरेखेत्यर्थः। अन्या - अष्टमो ॥१५॥

श्रद्धेत्यादिभिः षोड़शच्छदे इत्यन्तैः तृतीयावरणे षोड़शदलपूज्याः शक्तीरुपदिशति। तत्र अष्टमी मनोरथेत्यन्वयः ॥१६॥ मदनोन्मादिनीत्येका। वशंकारी-वशंकरीत्यर्थः ॥१७॥ सस्वराः—षोड़शस्वराक्षरेषु एकैकाक्षरपूर्विकाः। प्रियदर्शन-कान्तिकाः—षोड़श प्रियदर्शना इत्यर्थः ॥१८॥

पूषेत्यादिना यथाक्रममित्यन्तेनाध्यर्द्धेन श्लोकद्वयेन चतुर्थावरणे बहिः षोड़श-पत्रेषु पूज्याः शक्तीरुपदिशति ॥१९॥ तुष्ट्यामृता—तुष्ट्या सह अमृता तुष्टिरित्येका अमृता इत्येकेत्यर्थः। सस्वरा—एताश्च प्राग्वत्। स्वराक्षरेषु एकैकाक्षरपूर्विकाः विधोधः—चन्द्रस्य ॥

बहिरित्यादिना श्लोकोत्तरार्द्धेन पञ्चमावरणे षट्कोणेषु पूज्याः शक्तीरुप-

---

(१) प्रियदर्शिनि इति सो० पु० पा०।  (२) पूषाविवा इति सो० पु० पा०।
(३) ऋद्धिसौम्या मरीचीश्च इति म० पु० पा०।

तद्बहिः चतुरस्रस्थां लोकेशां तत्समां यजेत् (१)।
बटुकं गणपं दुर्गां क्षेत्रेशं चाभितो यजेत् ॥२२॥
अग्न्याद्यस्रेषु (२) विद्यादि सप्ताक्षर्यन्तराश्रितैः।
तन्नामभिर्बलिं तेभ्यो दद्याद्गन्धादि चोदितैः ॥२३॥
ततस्तामङ्गविद्याभ्यां क्लृप्तार्घ्यैः पूजयेच्छिवाम्।
प्रागुक्तैरुपचाराद्यैर्होमं कुर्यात्ततस्तथा (३)॥२४॥

---

दिशति। तत्र तथाऽर्चयेत्—एतदुक्तं स्यात्—उपरिष्टान्नित्यानित्यापटलप्रोक्तक्रमेण निर्ऋतिवायुवासवकोणेषु प्रोक्तक्रमेण, डाकिनीराकिनीलाकिनी शक्तित्रयमभ्यर्च्य वह्नीशवरुणकोणेषु त्रिषु प्रोक्तक्रमेण काकिनीशाकिनी—हाकिनीति शक्तित्रयमर्चयेत् इति ॥२१॥

तद्बहिरित्यादिना चोदितैरित्यन्तेन श्लोकद्वयेन षष्ठावरणे चतुरस्रे तदन्तःकोणचतुष्टये पूज्यशक्त्यादिकमुपदिशति। तद्बहिः—षट्कोणाद्बहिः। लोकेशान्(?)—शक्तीरिति शेषः। तत्समाः—प्रधानदेवतासमानवर्णाभरणकरायुधधराः। एतत्सर्वावरणशक्तिसाधारणं यजेत्। प्रागादीशान्तमष्टसु दिक्षु अध ऊर्ध्वं च प्रादक्षिण्येन, अन्यांस्तु षट्कोणमन्तरेणावरणशक्तीर्देव्यग्रादारभ्य प्रादक्षिण्येनार्चयेदिति सम्प्रदायार्थः ॥२२॥ अग्न्याद्यस्रेषु—चतुरस्रषट्कोणबाह्यवृत्तान्तरालस्थेषु। विद्यादिसप्ताक्षर्यन्तराश्रितैः—तत्तन्नामभिः। एतदुक्तं स्यात्—प्रोक्तानामावरणशक्तीनां सर्वासां मूलविद्याद्यक्षरपुरस्सरैः तत्तन्नामभिः सप्ताक्षर्यन्तैः षोडशच्छदद्वयेपि विद्याक्षरानन्तरं षोडशस्वराक्षरसहितं प्रोक्तक्रमेण पूजयेत्। तेभ्यः—बटुकगणपतिदुर्गाक्षेत्रपालेभ्यः। गन्धादिचोदितैः—वक्ष्यमाणैर्द्रव्यैरिति शेषः ॥२३॥

तत इत्यादिभिः सिद्ध्यन्तीत्यन्तैः पादाधिकैस्त्रिभिः श्लोकैर्देव्या नित्यपूजाक्रमं तत्फलं चोपदिशति। तत्र अङ्गविद्याभ्यां क्लृप्तार्घ्यैः—एतदुक्तं स्यात्—प्राग्वदाधारचषकसलिलानि वह्निसूर्य्यसोमात्मकानि बुद्ध्वा तत्षडङ्गमन्त्रैः प्रोक्तक्रमेणाभ्यर्च्य स्पृष्टार्घ्यो(४) मूलविद्यामेकादशवारं जपित्वा साधितेनार्घ्येण प्राग्वत् सपर्यां कुर्यात् इति। एवं—सर्वासां वक्ष्यमाणानां नित्यानामर्घ(५)क्लृप्तिर्विधेये-

---

(१) तत्समा जपेत् इति मू० पुस्तके पाठः। (२) अग्न्याद्यस्त्रिषु इति मू० पुस्तके पाठः।
(३) दतस्तथा मू० पुस्तके पाठः। (४) स्पष्टार्घो इति टी० पु० पा०।
(५) मर्घक्लृप्तिरिति सो० पु० पा०।

घृताक्तैर्मधुराक्तैर्वा प्रसूनैररुणैः शुभैः ।
अन्नाद्याभ्यां प्रजुहुयात्ततः प्राग्वत् समापयेत् ॥२५॥
एवं नित्यं पूजयितुरायुरारोग्यसम्पदः ।
लोकानुरञ्जनं नारीनृपावर्जनकर्म च ॥२६॥
अपृथक्त्वे न सिद्ध्यन्ति तद्योगान् शृणु सुन्दरि ! ।
महाचमत्कारकरांस्त्रैलोक्यक्षोभणक्षमान् ॥२७॥
पुरा देवी पञ्च कामान् पञ्च ज्ञानात्मकान्निजान् ।
ससर्ज (१) बाणानुक्तांश्च त्रिविधान् प्रागुदीरितान् ॥२८॥

---

त्यर्थः । प्रागुक्तैरुपचाराद्यैः—सपर्याविशेषैरिति शेषः । तथा—ललिताविद्याहोम-प्रोक्तक्रमवत् ॥२४॥ प्राग्वत् समापयेत् । एतदुक्तं स्यात्—देवतातनौ तत्परिवारशक्तीस्तेजोरूपाः समाविष्टा बुद्ध्वा तां च तेजोरूपिणीं प्रवहन्नासामार्गेण खेचर्या मुद्रया स्वान्तं नीत्वा प्राग्वत् समापयेत् इति । पञ्चदशानां नित्यानां विशेषानुपदेशे सपर्यारम्भे षोडशाक्षरमन्त्रेण बलिप्रदानम् । अवसाने कुरुकुल्लासमाख्यां बलिप्रदानं सर्वावरणादौ देवतापश्चिमभागे प्राग्वत् त्रिपङ्क्तिकस्य नाथनवकस्य पूजनं च(२)कुर्यादित्यर्थः ॥२५॥ आवर्जनं—वशीकारः ॥२६॥ अपृथक्त्वे न—अनवाप्तत्वेनेत्यर्थः । अत्रापि युगानुरूपमक्षरलक्षं जपित्वा तद्दशांशं तर्पणहोमादिकं च कुर्यादिति ।

तद्योगानित्यादिना प्रागुदीरितानित्यन्तेन त्रिपादाद्येन श्लोकेन पञ्चकामस्तवनसुखेनैतान् प्रस्तौति । तत्र तद्योगान्—पञ्चकामात्मदेवीमन्त्रयन्त्रयोगान् । महाचमत्कारकरान्-मनीषितार्थप्रापकत्वतः । चमत्कार—आश्चर्यम् । त्रैलोक्यक्षोभणक्षमान्—अशेषभुवनप्रथाकरान्, एतत्तद्योगानित्यस्य विशेषणम् ॥२७॥ देवी—कामेश्वरीसम्प्रदायः । मदनोन्मादनेत्यादिशक्तित्वेनोक्तान् पञ्चज्ञानात्मकान् पञ्चेन्द्रियज्ञानविग्रहान्, सर्वेषां ज्ञानेन्द्रियज्ञानात्मकत्वात् । ससर्ज—तद्रूपेण परिणतेत्यर्थः । त्रिविधान्—स्थूलसूक्ष्मपरत्वेन । प्रागुदीरितान्—पञ्चमे पटले बाणाः स्युरित्यादिभिः प्रोक्तान् ॥२८॥

---

(१) बहुवक्त्रांश्च इति सो॰ पुस्तके पाठः ।

(२) तद्योगात् पञ्चकामान् इत्यधिकं टी॰ पु॰ पा॰ ।

तेषां नामानि रूपाणि मन्त्रांश्च क्रमतः शृणु ।
यैर्विश्वं वशमायाति तत्त्वात्तद्भावनादिना ॥२९॥
प्रथमः कामराजाख्यो द्वितीयोमन्मथस्तथा ।
कन्दर्पस्तत्तृतीयोऽभूत्ततो मकरकेतनः ॥३०॥
मनोभवः पञ्चमः स्यात् नामान्येतानि वै क्रमात् ।
ध्यानं (१)तेषां शृणु प्राज्ञे ! विश्वविक्षोभकारिणाम् ॥३१॥
पीतश्वेतारुणाकारास्त्रयोऽन्यौ धूम्रनीलकौ(२) ।
सर्वे त्रिनेत्रा द्विभुजाः स्मेरवक्त्रसरोरुहाः ॥३२॥
पुण्ड्रेक्षुचापपुष्पेषुधरा भूतात्मकाः क्रमात् ।
विश्वाकारा विश्वमनोविक्षोभनियतात्मकाः ॥३३॥
एषां मन्त्रान् शृणु प्राज्ञे ! क्रमादेकाक्षरानपि ।
यैरेकैकैः सङ्गतैश्च(३) यन्त्राणि स्युः पृथक् पृथक् ॥३४॥
सहंसदाहवह्निस्वैः कामराजः समीरितः ।
प्राणोरसावह्नियुतस्तथा स्वेनापि मन्मथः ॥३५॥

---

तेषां नामानीत्यादिना क्रमादित्यन्तेनार्द्धाधिकेन श्लोकद्वयेन तेषां कामानां नामरूपमन्त्रप्रस्तावपूर्वं नामान्युपदिशति। तत्र तेषां—पञ्चानां कामानाम्। यैः—नामरूपमन्त्रैः। तद्भावनादिना—तेषां नाममन्त्ररूपाणाम्। आदिशब्दोऽभिषेकन्यासादिविषयः ॥२९॥ तत्तृतीयः—तेषु तृतीयः ॥३०॥

ध्यानं इत्यादिना नियतात्मका इत्यन्तेन तेषां ध्येयस्वरूपाण्युपदिशति ॥३१॥ तत्र पीतश्वेतारुणाकारास्त्रयः। द्वौ धूम्रनीलकौ। पञ्चभूतशक्तिरूपत्वात्तत्तद्भूतवर्णाः ॥३२॥ भूतात्मकाः—भूतसामर्थ्यविग्रहाः। विश्वाकाराः—भूतसामर्थ्यरूपत्वात्। विश्वमनोविक्षोभकरत्वं च भूतात्मकत्वादेव ॥३३॥

एषामित्यादिना श्लोकेन तेषां मन्त्रान् यन्त्राणि च प्रस्तौति—तत्र एकैकैः—एकैकाक्षरतः एकैकयन्त्रसङ्गतैः समुदितैः पञ्चभिस्त्रीणि यन्त्राणि ॥३४॥

सहंसेत्यादिना मनोभव इत्यन्तेनार्द्धार्द्धेन श्लोकद्वयेन तेषामेकाक्षरान् पञ्चमन्त्रा-

---

(१) मेषां इति सो० पु० पा०।　　(२) धूमनलकौ इति सो पु० पा०।

(३) यैरेकैकस्य मन्त्रैश्च इति मु० पुस्तके पाठः।

शुचिः स्वसंयुतः प्रोक्तः कन्दर्पोऽम्बुरसायुतम् ।
त्वमया स्वेन च सम्प्रोक्तः सोऽयं मकरकेतनः ॥३६॥
सहृद्रयैर्दा(१)हवह्निस्वैरुक्तोभून्मनोभवः(२) ।
भालवक्त्र(३)सहृन्नाभिगुह्येषु न्यासतस्त्वमी ॥३७॥
समस्तान्वशगान् कुर्युर्बाणानेष्वेव मूलतः ।
भालान्तं(४) विन्यसेन्नित्यं यः स सर्वाङ्गनास्मरः ॥३८॥
एषां यन्त्राणि सर्वाणि त्रैलोक्यक्षोभणानि च ।
तानि क्रमेण कथयाम्याकर्णय समाहिता ॥३९॥

---

नुपदिशति । तत्र सहंसदाहवह्निस्वैः—क्लीं‌कारः कामराजमन्त्र इत्यर्थः । प्राणो-रसावह्नियुतःस्वेनापि-ककारलकारईकारविन्दुभिः क्लीं‌कारः मन्मथमन्त्रः ॥३५॥ शुचिः स्वसंयुतः—विन्दुसहितद्वादशस्वरः कंदर्पमन्त्रः । अंबुरसात्त्वमया स्वेन च—वकारलकारऊकारविन्दुभिः मकरकेतनः ॥३६॥ हृद्रयैर्दाहवह्निस्वैः—सकारतकाररेफईकारविन्दुभिः स्त्रीं‌मनोभवमन्त्रः ।

भाल इत्यादिना स्मर इत्यन्तेनार्द्धाधिकेनैकेन श्लोकेन तन्मन्त्राणां बाणमन्त्राणां च न्यासस्थानक्रममुपदिशति । तत्र भालं—ललाटम् । गुह्यमितिमूलाधारस्थान मुच्यते । अमी—पञ्चकाममन्त्राः ॥३७॥ बाणान्—बाणानां शैवानामेकैकाक्षरान् कूटमन्त्रान् । एष्वेव—उक्तेषु स्थानेषु एव । मूलतः—मूलाधारमारभ्य । एतदुक्तं भवति—पञ्चानां तेषां कामानां प्रत्येकमेकाक्षरभूतान् प्रोक्तान् कूटरूपान् पञ्चमन्त्रान् तत्तन्नाम्नाऽन्वितान् ललाटादिमूलाधारान्तं प्रोक्तेषु पञ्चसु स्थानेषु न्यस्य मूलाधारादिललाटान्तं च प्रोक्तेषु विन्यस्य चतुर्थपटलोक्तानेकाक्षरान् कूटरूपान् पञ्चसङ्ख्यान् शैवबाणमन्त्रान् तत्तत्स्थानादि नमोऽन्तान् विन्यसेदिति ॥३८॥

एषामित्यादिभिः शिवे इत्यन्तैरर्द्धाधिकैः पञ्चभिः श्लोकैस्तेषां कामानां प्रत्येकं क्रमेण पञ्च यन्त्राण्युपदिशति । तत्र - क्रमेण—प्रोक्तकूट(५)मन्त्रक्रमेण ॥३८॥

---

(१) सहृद्र्यैर्दाह इति सी॰ पुस्तके पाठः ।
(२) स्वैरुक्तो इति सी॰ पुस्तके पाठः ।
(३) भालचक्र स इति सी॰ पुस्तके पाठः ।
(४) लाभान्तं वि इति सी॰ पुस्तके पाठः ।
(५) कूटतन्त्र इति टी॰ पु॰ पा॰ ।

तेषु पञ्चसु बीजेषु पुनरुक्तिविवर्जितैः ।
योजयेदष्टभिस्तैस्तैः स्वरान् षोड़श मायया ॥४०॥
अष्टाविंशतिसंयुक्तं शतं तेन(१) भवन्ति वै ।
तैर्यन्त्राणि विधेयानि पञ्चानां क्रमतः शिवे ! ॥४१॥
वृत्तत्रयस्थं(२) षट्कोणं कृत्वा मध्ये स्वमक्षरम् ।
लिखेत् साध्याख्ययोपेतं षट्सु कोणेषु तत् पुनः ॥४२॥

---

पुनरुक्तिविवर्जितैः—अपुनरावृत्तिरूपैः । अष्टभिः—हकाररेफककारलकार-ऐकारवकारसकारतकारैः तथाविधैरक्षरैरितिशेषः । अत्र ऐकारस्वरयोजनं नाम अकारादिविसर्जनीयान्तानां षोड़शस्वराणां यथाक्रममुच्चारणम् । एवं सर्वत्र स्वरेषु स्वरयोजनमितञ्च स्वराणां स्वातन्त्र्यात् । मायया—विसर्जनीयेन तेषां षोड़शस्वरयोजनेन । एतदुक्तं भवति—तेषु पञ्चसु काममन्त्रेषु अपुनरुक्तैर्हकारा-दिभिरष्टभिरक्षरैः प्रत्येकं विसर्जनीयान्तान् षोड़श स्वरान् योजयेत् तेनोक्त-सङ्ख्याक्षराणि भवन्तीति । ते यथा—हः हाः इत्यादयः । पञ्चत्रिंशदक्षरेषु पुन-र्विसर्जनीययोजनम् ॥४०॥ तैः—स्वरविकृताक्षरैः ॥४१॥

वृत्तत्रयस्थमित्यादिना शिवेइत्यन्तेनार्द्धाधिकेन श्लोकद्वयेन पञ्चानां यन्त्राणां स्वरूपमुपदिशति । तत्र स्व—मक्षरम्—पञ्चसु कामकूटाक्षरेषु स्वाभिहितमेक-मक्षरम् । एतदुक्तं भवति—इष्टप्रमाणेन भ्रमणेन मध्यसूत्रपुरःसरं वृत्तं निष्पाद्य तद्व्यासार्द्धमानेन ब्रह्मसूत्रवृत्तसन्धिद्वयावष्टम्भेन वृत्तपार्श्वयोर्लाञ्छनानि कृत्वा तेषु वृत्तावधिकं दक्षिणोत्तरं सूत्रद्वयमास्फाल्य तयोः पूर्वसूत्राग्रद्वयवृत्तसन्धिमवलम्ब्य मध्यसूत्रपश्चिमाग्रवृत्तसन्ध्यन्तं सूत्रद्वयमास्फाल्य तद्वत् पश्चिमसूत्रपर्यन्तं तद्द्वयात् मध्यसूत्रपूर्वाग्रवृत्तसन्ध्यवधिसूत्रद्वयमास्फाल्य एवं षट्कोणं कृत्वा तत् षट्कोणं तिर्यग्रेखास्पृष्टास्पृष्टिकया मध्यतोवृत्तं कृत्वा पूर्वलिखितषट्कोणबाह्यवृत्ताद्बहि-रेकाङ्गुलान्तरालं क्रमेण वृत्तद्वयं निष्पाद्य सर्वमध्यवृत्तमध्ये कामकूटाक्षर(३)मन्त्रेषु पञ्चसु प्रथमाक्षरभूतां ह्स्क्लें खां सविन्दुकामालिख्य तस्या रेफगर्भे साध्याख्यां चतुर्थ-स्वरगर्भे साधकाख्यया मुभयोरन्तरा कर्म च समालिख्य बहिः षट्सु कोणेषु अध-

---

(१) भविष्यति इति मू० ०स्तके पाठः । (२) त्रयस्थ इति सो० पुस्तके पाठः ।
(३) क्षरं तन्त्रेषु इति टी० पु० पा० ।

विभज्य विन्दुमायाभ्यामध ऊर्ध्वं लिखेत् क्रमात् ।
वृत्तान्तरालयोर्बाह्ये चतुःषष्ट्या द्विरालिखेत् ॥४३॥
एवं यन्त्राणि पञ्च स्युः पञ्चानां क्रमतः शिवे ! ।
पञ्चभिश्चैकमस्त्यन्यद्यन्त्रं सुमहदद्भुतम् ॥४४॥
द्वितीय जठरे (१)त्वाद्यं सनाम विलिखेत्तयोः ।
बहिस्तृतीयरूपेण षट्कोणेन प्रवेष्टयेत् ॥४५॥
चतुर्थं विलिखेत् कोणेष्वेषु षट्स्वपि पार्वति ! ।
वेष्टयेत् पञ्चमेनैव तद्यन्त्रं सर्वमोहनम् ॥४६॥

---

स्तनेषु त्रिषु कोणेषु तां ह्लखें सविन्दुकामालिख्य उपरितनेषु त्रिकोणेषु तामेव विसर्जनीयान्तां समालिख्य षट्कोणबाह्यवृत्तवीथ्यां प्रोक्तस्वरविकृताक्षराणि क्रमेण अग्रात् प्रादक्षिण्येन प्रथमचतुःषष्टिं तद्बाह्यवृत्तवीथ्यां (२)तृतीयचतुःषष्टिमक्षराणि च समालिख्य मनीषितेषु कर्मसु नियुञ्ज्यात् । एवमन्यान्यपि कूटाक्षराणि चत्वारि तथाविधे यन्त्रे प्रोक्तक्रमेण समालिख्य प्राग्वत्तत्तद्गर्भाक्षरषोडशकादिकं बाह्यचतुःषष्टिकद्वयमालिखेत् । एवं पञ्च यन्त्राणि मनीषितेष्वर्थेषु विनियुञ्ज्यात् ॥४२॥४३॥

पञ्चभिरित्यादिना सर्वमोहनं इत्यन्तेनार्द्धाद्येन श्लोकद्वयेन प्रोक्तकूटमन्त्रपञ्चकसमुदायात्मकं षष्ठं यन्त्रमुपदिशति ॥४४॥ तत्र द्वितीयकूटजठरे—मन्मथकूटजठरे । आद्यं—कामराजकूटम् । सनाम—साध्यसाधकनामकर्मसहितं साधकनामकर्मसहितम् । तृतीयरूपेण—कन्दर्पकूटरूपेण । षट्कोणेन—कन्दर्पमन्त्ररूपस्य द्वादश स्वरस्य लिपिवशात् त्रिकोणात्मकत्वं, तद्युगलयोगतः षट्कोणत्वम् ॥४५॥ चतुर्थं—मकरकेतनकूटम् । पञ्चमेन—मनोभवकूटेन । तद्यन्त्रं—एवं निर्मितमिति शेषः । एतदुक्तं स्यात्—ह्लखें प्राग्वन्नामसहितां समालिख्य तां प्रथमभूतां द्वितीयस्य कूटाक्षरस्य गर्भगां कृत्वा तद्द्वितीयतृतीयेन एकाक्षररूपेण(३ त्रिकोणपुटितरूपषट्कोणेनावेष्ट्य तस्य षटसु कोणेषु चतुर्थं मकरकेतनकूटाक्षरमालिख्य तत्षट्कोणं पञ्चमकूटाक्षरवह्निस्थानगं यथा स्यात्तथा(कोणं) गुरूक्तक्रमतः समालिख्य वाञ्छितार्थेषु विनियुञ्ज्यादिति ॥४६॥

---

(१) चापं न नाम इति मू० पुस्तके पाठः । (२) द्वितीय इति टी० पु० पा० ।
(३) एञ्काराक्षररूपेण इति वं० पु० पा० ।

तस्यापि परतो बाह्ये तैरावेष्ट्य पुरोदितैः।
यन्त्रान्तरं तु जनयेद्बहिर्मातृकयाऽपि च ॥४७॥
यन्त्राण्यष्टौ भवन्त्येवं पञ्च कामात्मकानि वै।
तैरसाध्यं जगत्स्वेषु न(१) किञ्चिन्न कदाचन ॥४८॥
मनुजं मनुजेशं वा महिलां वा मदाविलाम्।
अष्टसूत्रेषु मध्यस्थं भावयेत् स्वेन तेजसा ॥४९॥
एकीभूतं जपेदेतान्यक्षराण्यपि पञ्च तैः।
तेन ते वशगाः क्षिप्रं यावज्जीवं(२)सुनिश्चितम् ॥५०॥

---

तस्यापीत्यादिना कदाचन इत्यन्तेन श्लोकद्वयेन सप्तममष्टमं च यन्त्रद्वयं तत्सङ्ख्यानिगमनं तदनुभावं चोपदिशति। तत्र तस्य—प्रोक्तरूपस्य षष्ठस्य महायन्त्रस्य। परतः—परं सप्तमं यन्त्रमित्यर्थः। पुरोदितैः—तैः स्वरवर्ज्जितैरष्टभिरक्षरैरित्यर्थः। एतदुक्तं भवति—षष्ठयन्त्रबाह्याक्षरस्पृष्टास्पृष्टं वृत्तं कृत्वा। तद्बहिः—प्राग्वदेकैकाङ्गुलान्तरालं वृत्तद्वयं विधाय यन्त्रबाह्यवृत्तत्रयवीथीद्वये पूर्ववत् चतुःषष्ठिद्वयं समालिखेत्। एतत् सप्तमं यन्त्रं, यन्त्रान्तरं—अष्टमं यन्त्रम्। बहिः प्रोक्तचतुःषष्टिद्वयवेष्टनादितिशेषः। मातृकया अकारादिक्षकारान्तैरेकपञ्चाशदक्षरैरावेष्टनादित्यर्थः। अपिचेति (च) समुच्चये। एतदुक्तं भवति—सप्तमयन्त्रस्वरूपस्य बहिरप्येकाङ्गुलान्तरालं वृत्तं विधाय तस्यां वीथ्यां प्राग्वदादिक्षान्तान्यक्षराणि समालिखेदेतदष्टमं यन्त्रमिति ॥४७॥ तेषां पञ्चानां कामानां प्रोक्तध्येयविग्रहेण स्थूलत्वं, प्रोक्तमन्त्रपञ्चकविग्रहेण सूक्ष्मत्वं, प्रोक्तपञ्चभूतसामर्थ्यरूपपञ्चेन्द्रियप्रभवज्ञानपञ्चकविग्रहेण पररूपत्वं च बुद्ध्वा तैरसाध्यकथनमित्यादि सम्प्रदायरहस्यार्थः ॥४८॥

मनुजं इत्यादिभिर्मुद्रया इत्यन्तैः पञ्चभिः श्लोकैः प्रोक्तानामष्टानां यन्त्राणां मनीषितार्थयोगेन ज्ञानान्तरभावनया फलावाप्तिमुपदिशति। तत्र मदाविलां—गन्धगजवत्। अष्टसूत्रेषु—प्रत्येकमितिशेषः। स्वेन तेजसा—स्वात्मस्वरूपेण ॥४९॥

---

(१) न किञ्चन इति मू॰ पुस्तके पाठः।

(२) निश्चितमिति मू॰ पु॰ पा॰।

तेषु(१) मध्यस्थमाध्यस्थमात्मसाध्ये जपारुणाम् ।
तन्मन्त्रार्णप्रकाशैश्च तथाऽरुणतरैर्वृतम् ॥५१॥
भावयन्नात्मना ग्रस्तं जपेत्तान्यक्षराण्यपि ।
तेन ते वशगाः क्षिप्रं दद्युः प्राणान् धनानि च ॥५२॥
तस्य षष्ठस्य मध्यस्थबीजे मन्त्रेण वेष्टयेत् ।
प्राग्वन्निजसुषुम्णान्तर्भावयेद्योनिमुद्रया ॥५३॥
एवं(२) तदष्टमध्यस्थं कुम्भं कृत्वा यथाविधि ।
तेनाभिषिञ्चेत्(३) दौर्भाग्यरोगदारिद्र्यमुक्तये ॥५४॥
कुचन्दनैर्वा सिन्दूरैर्गैरिकैर्दरदैस्तु वा ।
कृत्वा चक्राष्टकं भूमौ फलकायां शिलासु च ॥५५॥

---

एकीभूतमित्यत्र भावनाप्रकारो गुरुमुखादवगन्तव्यः । तैर्मन्त्रैरेकीभूतमित्यन्वयः । मन्त्रतेजोभिरेकीभूतमित्यर्थः । तेन - प्रयोगेण ॥५०॥ तेष्वित्यादिः श्लोकः स्पष्टार्थः ॥५१॥ प्राणान् धनानि च—किमुतान्यवस्तूनीत्यर्थः ॥५२॥ मध्यस्थबीजे—कामराजमन्मथकूटद्वयमित्यर्थः । मन्त्रेण—कामेश्वरीविद्यया । अत्र गुरुमुखावाप्तार्थविशेषस्तु मयोच्यते । यथा षष्ठस्य मध्यबीज इत्युक्त्या प्रोक्तानामष्टानां यन्त्राणां मध्यस्थं बीजं कामेश्वरीनित्याविद्यया वेष्टयेत्, तेनाप्यष्टौ यन्त्राणि भवन्ति । एवं सम्भूय षोडश यन्त्राणि स्युः । अत्र पञ्चकामप्रसङ्गात् कामेश्वरीविद्यया वेष्टनसम्बन्धो ज्ञापित इति प्राग्वत्—मन्त्रार्णप्रकाशैरित्याद्युक्तप्रकारेण । योनिमुद्रया—उपरिष्टाद्वक्ष्यमाणया सुषुम्णान्तर्मूलाधारादि ब्रह्मरन्ध्रान्तं वह्निसूर्यसोमात्मकतेजस्त्रयात्मकस्वरूपेण गमागमानुसन्धानस्य योनिमुद्राबन्ध इति सामयिकी संज्ञा, तया एषां षोडशानामन्येषां च यन्त्राणां साधारणरूपतेति सम्प्रदायः ॥५३॥

एतदित्यादिना श्लोकेन प्रोक्तेष्वष्टसु यन्त्रेषु सम्प्रदायप्राप्तेष्वेषु यन्त्रेषु च कुम्भस्थापनं तेनाभिषेकं तत्फलं चोपदिशति, तत्र यथाविधि—एतदुक्तं भवति । तन्तुवेष्टनत्रिलोहधान्यनवरत्नप्रक्षेपमूलपल्लवमुखपिधानवासोयुगलवेष्टनाष्टत्रिंशत्कलावर्तनपूर्वकं उद्दिश्यं तत्क्रमेणार्चयेदिति ॥ ५४ ॥

---

(१) षष्ठस्य मध्यमात्मसाध्यं इति मू० पुस्तके पाठः ।
(२) एतदष्टकम इति मू० पुस्तके पाठः ।
(३) सिषिंच्य इति सो पु पा ।

मध्ये विद्यावृतं कृत्वा तत्राऽऽवाह्याभिपूज्य ताम् ।
कामेश्वरीतदग्रस्थो जपेल्लक्षं पयोव्रतः ॥५६॥
तेनास्य पूर्वजन्मान्त(१) दुष्कृतान्यपयान्ति वै ।
अस्मिन् जन्मनि सल्लक्ष्मीमवाप्य सुखमेधते ॥५७॥
नरं नारीं नृपं चान्यं नगरं वाऽथ पत्तनम् ।
देशं जनपदं विश्वं तन्मध्ये प्रविलिख्य तत् ॥५८॥
पूजयेदरुणैः पुष्पैर्गन्धैः काश्मीरसंयुतैः(२) ।
नैवेद्यैः कदलीदुग्धशर्करापायसादिभिः ॥५९॥
मण्डलं वा तदर्द्धं (३) वा सप्तवासरमेव वा ।
कन्दर्पसमसौभाग्यो जायते नियतं नरः ॥६०॥
सुवर्णादिषु संलिख्य धारणा(४)द्धरणीतले ।
लक्ष्मीकान्तिधनारोग्यैरायुः पूर्णमवाप्नुयात् ॥६१॥

कुचन्दनैरित्यादिभिरेधते इत्यन्तैस्त्रिभिः श्लोकैर्यन्त्रलेखनद्रव्यविशेषैस्तेषु कामेश्वरीनित्यार्चनक्रमतः फलान्युपदिशति। तत्र चक्राष्टकमित्यनेन रहस्य-यन्त्रात्मकमप्युक्तं भवति ॥५५॥ मध्ये विद्यावृतं—प्राग्वत् । तत्र - प्रत्येकं यन्त्रषोड़-शकस्य मध्येषु । अभिपूज्य उक्तक्रमतः । पयोव्रतः—क्षीराहारी ॥५६॥ पूर्व-जन्मान्तदुष्कृतानि—चिरकालोपात्तानि दुष्कर्माणि इत्यर्थः । अस्मिन् जन्मनि—तादात्विककाले ॥५७॥

नरमित्यादिभिरवाप्नुयादित्यन्तैश्चतुर्भिः श्लोकैस्तैरेव यन्त्रैर्विश्ववशीकरणोपायमुप-दिशति । तत्र तन्मध्ये—प्रोक्तयन्त्रषोड़शकस्य मध्ये । तत्—यन्त्रम् ॥५८॥ पायसा-दिभिः—अत्रादिशब्देनापूपादिकं कथयति ॥५९॥ मण्डलं-- मण्डलमिति सप्तानां वाराणां प्रत्येकमङ्गाङ्गिभावेन सप्तविधत्वादेकोनपञ्चाशद्दिनानि सर्वैरुच्यन्ते ॥६०॥ सुवर्णादिष्वित्यत्रादिशब्देन रजतताम्रभूर्जपत्रादीन्युच्यन्ते । संलिख्य—यन्त्रषोड़श-कमिति शेषः ॥६१॥

(१) जन्मपूर्वान्त इति सो० पु० पाठः । (२) संभवैः इति सो० पु० पा० ।
(३) तदूर्ध्वं इति मू० पु० पाठः । (४) धारणांधर इति म० पु० पा० ।

अनावृत्तैस्तु विद्यार्णैः षोड़शस्वरयोजनात् ।
द्वानवत्या शतं वर्णा जायन्ते मन्त्रसम्भवाः ॥६२॥
स्वराणां सर्वमन्त्रेषु योजनं केन हेतुना ।
क्रियते परमेशान ! तन्मे कथय साम्प्रतम् ॥६३॥
स्वराः षोड़श देवेशि ! व्यञ्जनानि तथा पुनः ।
पञ्चत्रिंशत् समाख्यातं तयोरन्योन्यसङ्गतैः ॥६४॥
भारत्या देहभूतैस्तैर्व्यञ्जनैः स्वरयोजनम् ।
तत्प्राणयोजनं विद्धि रहस्यं परमेश्वरि (१) ! ॥६५॥
भारत्या वर्णरूपाया हसौ नेत्रे समीरिते ।
प्राणाः स्वराः समाख्याता विन्दुसर्गौ तु चेतना ॥६६॥
अन्यान्यवयवानि(२) स्युरन्यानि परमेश्वरि ! ।
तेन तद्युक्तितो वर्णाः प्रसीदन्ति न चाऽन्यथा ॥६७॥
विन्दुसर्गौ हसौ तुर्यस्वरश्चेति च पञ्चमम् (३) ।
भारत्या मातृकादेहे विद्धि चैतन्यजृम्भणम् ॥६८॥

---

अनावृत्तैरित्यादिभिः सिद्धिदा इत्यन्तैर्दशभिः श्लोकैः कामेश्वरोमन्त्रे (४) अनावृत्तैरेकारादिभिर्द्वादशभिरक्षरैः षोड़शस्वरयोजनं अन्येषामपि सर्वेषां मन्त्राणां तथा स्वरयोजनं तद्वासनां चोपदिशति । तत्र—अनावृत्तैः—अपुनरावृत्तैः । विद्यार्णैः कामेश्वरीनित्याविद्याक्षरैर्द्वादशभिरिति शेषः । तानि कानि । ऐ७ सकलहरनतयमदव इति । अत्र पूर्वलकाराङ्गीकारात् लकार उपेक्षितः ललयोरभेदात् ॥६२॥ योजनं—अपुनरावृत्तैरक्षरैरिति शेषः । तत्—कारणं कथयेत्यन्वयः ॥६३॥ व्यञ्जनानि—कादिक्षान्तानि । पञ्चत्रिंशदिति व्यञ्जनविशेषणम् । समाख्यातं—तयोः स्वरव्यञ्जनयोरन्योन्यसङ्गतैरेव समाख्यातमित्यर्थः ॥६४॥ कथमित्यपेक्षायामाह—भारत्याः इति । भारत्या—मातृकायाः । देहभूतैः—अवयवभूतैः । तत्प्राणयोजनं—भारत्याः प्राणयोजनम् ॥६५॥ हसौ—हकारसकारौ । नेत्रे—शिवशक्तिरूपत्वात् । चेतना—चिद्रूपम् ॥६६॥ तेन—कारणेन । तद्युक्तितः—हकारसकारस्वरैर्योगतः ॥६७॥

---

(१) परमं शिवे इति मू० पु० पाठः ।
(२) अन्योन्यावयवानि इति सो० पु० पा० ।
(३) पञ्चकं इति मू० पु० पा० ।
(४) यन्त्रे इति व० पु० पा० ।

तेन तैर्हीनरूपास्तु मन्त्रा विद्यास्तथाऽपरे।
निष्प्राणदेहवत् कार्यकरणेष्वक्षमाः स्मृताः ॥६९॥
तेन सर्वत्र तु मया स्वरैर्योग उदीर्यते।
ये ये मन्त्राः प्रोक्तवर्णविहीनास्तैश्च योजयेत् ॥७०॥
तेन ते बलवन्तः स्युः कार्येषु च फलान्विताः।
तस्मात् सर्वत्र संयोगात् स्वरैः सर्वार्थसिद्धिदाः ॥७१॥
एवं तैरेव जायन्ते यन्त्राणि सबलानि वै।
द्वात्रिंशद्विनियोगाऽश्च वक्ष्ये तेषामनुक्रमात् ॥७२॥
वृत्तद्वयान्तः षट्कोणं कृत्वा मध्ये निजेप्सितम्।
मायागर्भं समालिख्य वेष्टयेन्मातृकाक्षरैः ॥७३॥

बिन्दुसर्गावित्यादिना श्लोकेन उक्तमर्थं निगमयति। चैतन्यजृम्भणं—चैतन्यप्रसरः ॥६८॥६९॥ तैः—पञ्चभिः परतेजोरूपदेवतायाः। प्रोक्तवर्णविहीनाः—प्रोक्तवर्णपञ्चकविहीनाः। योजयेत्तद्वर्णपञ्चकमितिशेषः ॥७०॥ ते—मन्त्राद्याः। अत्र दशभिः श्लोकैरेतदुक्तं भवति—आदिक्षान्ताक्षररूपमातृकाविग्रहाया भारत्याः सर्वावयवभूतेषु सर्वाक्षरेषु स्थितेष्वपि तुरीयस्वरविन्दुस्वरा हकारसकारषोड़शस्वराक्षराणां देहिनां देहेषु प्राणचैतन्यादिविजृम्भणवत् कार्यकारणत्वाद्वर्णपञ्चकविहीनेषु तत्पञ्चकयोजनात् सर्वत्र स्वरयोगेन च सर्वेषां बलयोजनं च भवति ॥७१॥

एवमित्यादिना श्लोकेन कामेश्वरीविद्यायाः स्वरविकृतै(२)रक्षरैर्द्वात्रिंशद्यन्त्राणि प्रस्तौति। तत्र तैः—कामेश्वरीविद्यायाः स्वरवर्द्धितैर्द्वानवत्यधिकशतसङ्ख्यैरक्षरैरित्यर्थः ॥७२॥

वृत्तद्वयेत्यादिना श्लोकेन द्वात्रिंशद्यन्त्रसाधारणं स्वरूपमुपदिशति। तत्र मायागर्भं—ह्रींलेखामध्ये। समालिख्य प्रागवत्। एतदुक्तं भवति—प्राग्वद्भ्रमेण(३) वृत्तं निष्पाद्य तत्र प्राग्वत् षट्कोणं कृत्वा तन्मध्ये ह्रींलेखां प्रोक्तक्रमेण वाञ्छितार्थलिपिगर्भामालिख्य षट्कोणकोणेषु षट्सु अग्रादारभ्य प्रादक्षिण्येन कामेश्वरीविद्यायाः स्वरविकृतेषु द्वानवत्यधिकशतसङ्ख्येष्वक्षरेषु आदि-

(१) सर्वते इति सो० पु० पा०। (२) स्वरवर्द्धितैरिति वं० पु० पा०।
(३) क्रमेण इति० वं० पु० पा०।

प्रथमे कनकावाप्तिर्द्वितीये भूषणोदयः ।
तृतीये कन्यकासिद्धिश्चतुर्थे भूपरिग्रहः ॥७४॥
पञ्चमे वाहनावाप्तिः षष्ठे स्त्रीवश्यमीरितम् ।
सप्तमे भवनावाप्तिरष्टमे धेनुसङ्गमः ॥७५॥
नवमे वशयेद्भूपं दशमे वारणं हयम् ।
एकादशेन विजयी नरः समरसीमनि ॥७६॥
वादेषु व्यवहारेषु द्यूतेषु विविधेष्वपि ।
द्वादशेऽभीप्सिताऽऽवाप्तिः परेणारिविनाशनम् ॥७७॥
गजवाजिखरोष्ट्राणां नरगोमृगपक्षिणाम् ।
भुजङ्गमेषमहिषवाजिनान्त्वाशु (१)नाशनम् ॥७८॥
तत्तत्त्वचि (२) च तद्रक्तैर्लिखितं तत्र तत्र च ।
स्थापितं मण्डलान्मासात् सप्तरात्रादथापि वा ॥७९॥
चतुर्दशेन वृष्टिः स्यात् परेण जृम्भणं रिपोः ।
क्रोधवैरसमुद्योगगमनादेरपि ध्रुवम् ॥८०॥

---

षट्कमालिख्य वृत्ताद्बहिरेकाङ्गुलान्तरालं वृत्तं निष्पाद्य तद्वीथ्यां प्रागवदादिक्षान्तान्यक्षराणि लिखेत्। एतत् प्रथमं यन्त्रम्। अस्यैव यन्त्रस्य षट्सु कोणेषु पूर्वयन्त्रलिखिताक्षरषट्कादुपरितनाक्षरषट्कमालिखेत्। एतत् द्वितीयं यन्त्रम्(१)। एवं तेषु षट्सु कोणेषु क्रमेण षडक्षरत आसमाप्ति लेखनात् सम्भूय द्वात्रिंशद्यन्त्राणि क्रियन्त इति ॥७३॥

प्रथमइत्यादिभिर्यन्त्रशक्तय इत्यन्तैरष्टादशभिः श्लोकैर्द्वात्रिंशद्यन्त्राणामसाधारणानि फलान्युपदिशति। तत्र सर्वाणि यन्त्राणि प्रत्येकं सर्वाभीष्टप्रदानि। अमितावाप्तिरित्यादीनि अमितावाप्तिरित्यादिनियमात्तदसाधारणत्वात्। विविधेषु सजीवनिर्जीवभेदतः। ॥७४—७६॥ परेण—त्रयोदशेन। गजादीनां नाशनं त्रयोदशेन यन्त्रेण ॥७७॥७८॥

---

(१) वाजिनां पशुनाशनं इति म० पु० पा०   (२) तत्तद्गविचः इति मी० पु० पा०।

षोड़शेन घृतेनाग्नौ (१) भूताद्यैर्नैव बाध्यते ।
ततः परेण यन्त्रेण खातेन धरणीतले (२) ॥८१॥
रक्षा भवति सर्वत्र प्राणिनां भवति ध्रुवम् ।
अनन्तराभ्यां खननात् कलहोद्वेगयोर्द्वयोः (३) ॥८२॥
सस्यानां (४) बहुभिः क्लेशैर्नाशः स्याद्भूरुहामपि ।
देशानामपि चान्योन्यकलहात् पीड़नं भवेत् ॥८३॥
अनन्तरेण यन्त्रेण विरोधो भूभुजां भवेत् ।
राष्ट्रसन्धितले तस्य खननेनाल्पकालतः ॥८४॥
एकविंशेन यन्त्रेण रोगार्ता वैरिणो ध्रुवम् ।
द्वाविंशेन गवां रोगस्त्रयोविंशेन दन्तिनाम् ॥८५॥
चतुर्विंशेन वाहानां पञ्चविंशेन भूभुजाम् ।
षड्विंशेन प्रधानानां रोगावाप्तिर्दृढ़ं भवेत् ॥८६॥
सप्तविंशेन तेषान्तु प्रोक्तानां क्लेशनाशनम् ।
अष्टाविंशेन यन्त्रेण कृत्या प्रतिनिवर्तते ॥८७॥
धारणाद्भूषु खननात् वृक्षाग्रादिषु बन्धनात् ।
तड़ागकूपवाप्यादिष्वर्पणाद्याति सा ध्रुवम् ॥८८॥
ततः परेण यन्त्रेण वाग्मी मूकोऽपि जायते ।
तत ऊर्ध्वेन यन्त्रेण वैरिवाक्स्तम्भनं भवेत् ॥८९॥
एकत्रिंशेन यन्त्रेण वाहानां दन्तिनामपि ।
रक्षा भवति तद्भूषु खननाद्धारणादपि ॥९०॥

---

तत्रतत्र — गजादीनामालानस्थानेषु । मण्डलात् — प्राग्वत् ॥७९॥८०॥८१॥ खननात् । सस्यादीनां स्थानेष्वित्यर्थः ॥८२॥ प्रोक्तानामत्र प्रकरणे क्लेशनाशनम् ॥८३॥८४॥८५॥

(१) घृतेनाग्नौ इति मू० पु० पा० । (२) शतेन धरणीतलम् इति मू० पु० पा० ।
(३) अन्येन्तरानन्तराभ्यां खननात् भूतले द्वयम् इति मू० पु० पा० ।
(४) संस्थापनामिति मू० पु० पा० ।

द्वात्रिंशेनाम्बुधौ पोता न क्लिश्यन्ति कदाचन ।
पारं प्रयान्ति (१) चाऽक्लेशाद्विचित्रा यन्त्रशक्तयः ॥९१॥
षोडशानां तु नित्यानां प्रत्येकं तिथिषु क्रमात् ।
तत्तत्तिथौ तद्भजनं जपहोमार्चनादिना ॥९२॥
घृतं च शर्करा दुग्धमपूपं कदलीफलम् ।
क्षौद्रं गुडं नालिकेरं फलं लाजां तिलं दधि ॥९३॥
पृथुकं चणकं मुद्गं पायसं च निवेदयेत् ।
प्रतिपत्तिथिमारभ्य क्रमात्पञ्चदशस्वपि ॥९४॥
कामेश्वर्यादिशक्तीनां सर्वासामपि चोदिताम् (२) ।
आद्याया ललितायास्तु सर्वाण्येतानि सर्वदा ॥९५॥
निवेदयेच्च जुहुयाद्वह्नौ दद्यान्नृणामपि ।
विद्याशक्तिमतां नित्यमभीष्टावाप्तयेऽनिशम् ॥९६॥
तत्तद्विद्याक्षरप्रोक्तमौषधं तत्प्रमाणतः ।
संपिष्य गुटिकां कृत्वा ताभिः सर्वत्र साधयेत् ॥९७॥

---

८६॥८७॥ प्रोक्तानां धारणादिति । सर्वत्र यन्त्राणि धारणस्थापनार्चनाद्यैः फलप्रदानीत्यर्थः ॥८८॥८९॥९०॥९१॥

षोडशानामित्यादिना श्लोकेन प्रतिपदादिपञ्चदशयन्तासु तिथिषु तत्तत्तिथिनित्याभजनक्रममुपदिशति । तत्र जपहोमार्चनादिना -- आदिशब्देन तर्पणाऽभिषेका उच्यन्ते ॥९२॥

घृतमित्यादिभिरनिशमित्यन्तैश्चतुर्भिः श्लोकैः पञ्चदशसु तिथिषु पञ्चदशनिवेद्यद्रव्याणि तद्विनियोगप्रकारांश्चोपदिशति । तत्र क्रमादिति । प्रतितिथिनिवेद्यद्रव्याणां प्रत्येकं क्रमं दर्शयति । सर्वाण्येतानि—निवेद्यद्रव्यादीनि । सर्वदासर्वा— अपि पञ्चदशनित्यामयत्वात् ॥९३॥९४॥९५॥९६॥

---

(१) प्रयान्ति वै इति सो० पुस्तके पा० ।

(२) चोदितमिति सो० पु० पा० ।

अर्घ्यवस्त्रार्पणं नित्यं स्नानं पानं च भोजनम् ।
पटीरसंयुतं भाले धारणं सर्वसिद्धिकृत् ॥९८॥
राज्ञां विशेषतो रक्षां कुर्यादेतैस्तु नित्यशः ।
स्नाने पाने धारणे च गुलिकायोजनेन वै ॥९९॥
रोगापमृत्युकृत्यादिदोषा ग्रहसमुद्भवाः ।
न बाधन्ते ततो नित्यमर्चयेत् स्वगृहे क्वचित् ॥१००॥
एषा रसमयी व्याप्तिरिति सम्यक्समीरिता ।
अस्या निष्फालनाच्चित्ते(१) तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति श्रीषोडशनित्यातन्त्रेषु श्रीकादिमते सप्तमं
पटलं परिपूर्णं परामृष्टम् ॥ ७ ॥

---

तत्तदित्यादिभिः क्वचित् इत्यन्तैः श्लोकैः सर्वासां विद्यानां तत्तदक्षरौषधिभिर्गुलिकानिर्माणं तद्विनियोगं तत्फलं चोपदिशति । तत्र—तत्प्रमाणतः—तत्तदक्षरावृत्तिसंख्यामानतः ॥९७॥ पटीरं—चन्दनम् ॥९८॥ एतैः—गुलिकाकृतैरौषधैः ॥९९॥ क्वचित्—देवतासपर्यास्थाने ॥१००॥१०१॥

इति श्रीषोडशनित्यातन्त्रेषु श्रीकादिमते प्रपञ्चसारसिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां कामेश्वरीनित्याभिधानप्रकाशपरं सप्तमं पटलं परिपूर्णं परामृष्टम् ॥ ७ ॥

---

ग्रन्थसङ्ख्या—

यन्त्राणि स्युः सप्तमेऽष्टौ चत्वारिंशच्च सङ्ख्यया ।
व्याख्याग्रन्थाः सत्रिपादाः चतुर्दशशतद्वयम् ॥ १ ॥

---

(१) तस्या निष्कालनाच्चित्ते इति मू० पु० पा० ।

## अथ अष्टमं पटलम् ।

अथ षोडशनित्यासु तृतीयां भगमालिनीम् ।
शृणु देवि ! प्रवच्यामि साङ्गां सावरणां क्रमात् ॥१॥
तदङ्गान्यथ तद्ध्यानं तदावरणदेवताः ।
तत्पूजायाः क्रमं होमं यन्त्राणि विविधानि च ॥२॥
तन्मन्त्रोद्धार उदितः पूर्वमेव मया तव ।
अङ्गानि मन्त्रवर्णैः स्यादाद्येन हृदुदीरितम् ॥३॥
ततश्चतुर्भिः शीर्षं स्यात् शिखा त्रिभिरुदीरिता ।
चतुष्टयत्रयैः शेषाण्यङ्गानि षडिति क्रमात् ॥४॥
अरुणामरुणाकल्पां सुन्दरीं सुस्मितान्नाम् ।
त्रिनेत्रां बाहुभिः षड्भिरुपेतां कमलासनाम् ॥५॥

---

## अथ अष्टमं पटलम् ।

पूर्वस्मिन् सप्तमे पटले द्वितीयायाः कामेश्वरीनित्याया विधानमुपदिश्यानन्तरं तृतीयाया भगमालिनीनित्याया विधानक्रममुपदिशति। अथ षोडशेत्यादिना अस्य सा इत्यन्तेन श्लोकशतरूपेणाष्टमेन पटलेन। तत्राऽथ षोडशेत्यादिना विविधानि चेत्यन्तेन श्लोकद्वयेन पटलार्थानुद्दिशति ॥ २ ॥

तन्मन्त्रोद्धारइत्यादिना क्रमादित्यन्तेन श्लोकद्वयेन षडङ्गन्यासक्रममुपदिशति। तत्र पूर्वं तृतीयपटले। अङ्गानि—षट् न्यसेदिति शेषः। आद्येन—मूलविद्याया आद्येनाक्षरेण ॥३॥ चतुष्टयत्रयैः—चतुर्भिश्चतुर्भिरक्षरैः। शेषाण्यङ्गानि कवचनेत्रास्त्राणि। अत्रापि प्रागुक्तजातियोजनं कुर्यात् ॥४॥

अरुणामित्यादिभिर्मदालसभिरित्यन्तैस्त्रिभिः श्लोकैर्देव्याः सपरिवाराया नित्यपूजाध्यानमुपदिशति, तत्र कमलासनाम्—अम्बुजासने स्थिताम्। वामबाहुभिरूर्ध्वादि-

कल्हारपाशपुण्ड्रेक्षुकोदण्डान्वामबाहुभिः ।
दधानां दक्षिणैः पद्ममङ्कुशं पुष्पसायकम् ॥६॥
तथाविधाभिः(१) परितो वृतां शक्तिगणैस्तुतैः ।
अक्षरोत्थाभिरन्याभिः स्मरोन्मादमदात्मभिः ॥७॥
पञ्चत्रिंशच्छतार्णैस्तै रूपिणीशक्तिपञ्चकम्(२) ।
सप्ताक्षरीं च संयोज्य शक्तीस्तत्सङ्ख्यका यजेत् ॥८॥
मदनां मोहिनीं लोलां जम्भिनीमुद्यमां शुभाम् ।
ल्हादिनीं द्राविणीं प्रीतिं रतिं रक्तां मनोरमाम् ॥९॥
सर्वोन्मादां सर्वसुखाममनङ्गा(३)मभितोद्यमाम् ।
अनल्पां व्यक्तविभवां विविधक्षोभविग्रहे ॥१०॥
एताः स्युः शक्तयः पञ्चपञ्चाशद्भिः शतद्वयम् ।
ताभिर्वृतां तु तां देवीं पूजयेद्वाञ्छिताप्तये ॥११॥

---

क्रमतः ॥६॥ तथाविधाभिः शक्तिगणैरित्युक्तिः स्वातन्त्र्यात् । अन्याभिः—मदनामित्याद्याभिरक्षरशक्तिव्यतिरिक्ताभिः । स्मरोन्मादमदात्मभिः स्मरोन्मादश्च मदश्च येषां एतद्विशेषणं सर्वशक्तिगणसाधारणम् (४) ॥ ७ ॥

(एवं) पञ्चत्रिंशदित्यादिना श्लोकेन देव्याः परिवारभूता मन्त्राक्षरात्मिकाः पञ्चत्रिंशच्छतसङ्ख्याताः शक्तीस्तावत्सङ्ख्यास्तद्विद्याश्चोपदिशति । एतदुक्तं भवति—सबिन्दुकं द्वादशस्वरमुच्चार्य तदनु मन्त्राक्षराणि पञ्चत्रिंशच्छतसङ्ख्याकानि क्रमतः प्रत्येकमुच्चार्य तदुपरि रूपिणीशक्तिपादुकां पूजयामीत्युच्चरेत् तेन पञ्चत्रिंशदधिकशतविद्याक्षरसङ्ख्याका विद्यास्तावत्सङ्ख्याः शक्तयश्च सम्भवन्ति ॥८॥

मदनामित्यादिभिर्वाञ्छिताप्तय इत्यन्तैस्त्रिभिः श्लोकैर्विंशतिशक्तिभिर्मन्त्राक्षरशक्तिभिश्चावरणद्वयमुपदिशति । तत्र विविधक्षोभविग्रहे—विविधविग्रहा क्षोभविग्रहा च ॥९॥१०॥ एताः स्युः शक्तय इति । मदनाद्याभिर्विंशतिशक्तिभिरक्षरो-

---

(१) तथाविधापि इति मू० पु० पा० । (२) शक्तिपञ्चमम् इति मू० पु० पा० ।
(३) सुखासीना मभङ्गामिति मू० पु० पा० । (४) सर्वशक्तिरावरण साधारणमिति मो० पु० पा० ।

अथ पूजाक्रमं देवि ! शृणु सर्वार्थदायकम् ।
येन विश्वं वशे भूयादपि स्थावरजङ्गमम् ॥१२॥
चतुरस्रद्वयं कृत्वा कुर्याद्द्वारं तु पश्चिमे ।
तन्मध्येऽब्जं पञ्चदलं कृत्वा तत्कर्णिकागतम् ॥१३॥
योनिद्वयं(१) तयोर्मध्ये तिर्यग्रेखाविधानतः ।
पञ्चत्रिंशच्छतं सङ्ख्यायोनयः(२) परितःस्थिताः ॥१४॥
अग्राद्विलोमगास्तास्तु शक्तीः संस्थाप्य पूजयेत् ।
मध्ये वृत्तत्रयं कुर्यात्†त्तत्र विंशतिरेखया ॥१५॥
निष्पाद्य तावतीर्योनीर्मदनाद्याः समर्चयेत् ।
वृत्तान्तराले त्वभितो यजेदङ्गानि षट् क्रमात् ॥१६॥

---

त्याभिः शक्तिभिश्च पञ्चपञ्चाशच्छतं शक्तय इत्यर्थः । (३)द्वयं — आवरणयोरितिशेषः । प्रोक्तसङ्ख्याः शक्तयः—प्रोक्तक्रमेण आवरणद्वयमित्यर्थः ॥११॥

अथ पूजेत्यादिभिर्नराधिपानित्यन्तैरर्द्धाधिकैस्त्रयोदशभिः श्लोकैर्देव्या नित्यपूजाक्रमं तत्फलानि चोपदिशति । तत्र येन - पूजाक्रमेण ॥१२॥ चतुरस्रद्वयमित्यादिभिः क्रमादित्यन्तैश्चतुर्भिः श्लोकैरेतदुक्तं भवति—अन्तर्बहिर्विभागेन चतुरङ्गुलान्तरालां समचतुरस्रां वीथीं कृत्वा तस्याः पश्चिमदिग्भागतो मध्ये द्वारं कृत्वा तस्य चतुरस्रस्य मध्ये पञ्चदलकमलं विधाय वृत्तद्वययुक्तायां तत्कर्णिकायां समत्रिरेखां कर्णिकामध्यवृत्तस्पृष्टास्रत्रयां यथामानं योनिं कृत्वा ( तस्य एकां रेखां चतुर्विंशतिधा विभज्य तैरंशैस्त्रयोविंशतिचिह्नानि कृत्वा तस्यास्तिसृषु रेखासु तथा कृत्वा तेषु एकांशमानमभितस्त्यक्त्वा तदन्तः प्राग्वत् समत्रिरेखां योनिं विधाय ) तस्या योन्या एकां रेखामेकविंशतिधा विभज्य तेषु विंशतिचिह्नानि रेखासु प्रत्येकं कृत्वा तेषु बाह्याभ्यन्तरचिह्नेषु चिह्नाच्चिह्नमिति क्रमेण पञ्चचत्वारिंशद्रेखास्तिर्यग्रूपाः प्रतिपार्श्वं विलिखेत् । एवं कृते बाह्यरेखाग्राणि आन्तररेखाग्राणि च त्रिकोणानि पञ्चत्रिंशदधिकशतसंख्याकानि भवन्ति । तदन्त

---

(१) योनिर्ध्येयमिति मू० पु० पा० ।
(२) योनिं कृत्वाचतत्सङ्ख्यायोनय इति मू० पु० पा० पञ्चविंशच्छत सङ्ख्या इति सो० पु० पा० ।
(३) द्वयोरावरणयोरिति वं० पु० पा० ।
† कृत्वा इति मू पु० पा० ।
( ) एतच्चिन्हान्तर्गतोग्रन्थः टी० पु० नास्ति ।

तन्मध्ये भगमालां तामावाह्योक्तस्वरूपिणीम्(१) ।
संस्थापनादिभिर्युक्तामर्चयेदुपचारकैः ॥१७॥
अर्घ्यमङ्गैश्च मूलेन संसाध्याभ्युक्ष्य मूलतः ।
द्वारस्य पार्श्वयोरागद्वे षशक्तीस्तथाऽर्चयेत्(२) ॥१८॥
शब्दस्पर्शौ तथा रूपं रसं गन्धं च पूर्ववत् ।
तदन्तवृत्तयोर्मध्ये षड़ङ्गानि तथाऽर्चयेत् ॥१९॥
तदन्तर्भगमालायां मदनाद्यास्तथाऽर्चयेत् ।
मध्ये च देवीमभितो (षडे) यजेतान्यायुधान्यपि(३) ॥२०॥
ततो देवीं षोडशभिरुपचारैरुदीरितैः ।
पूजयेदाद्यवर्णेन विदध्यात्तद्बलिद्वयम् ॥२१॥

---

स्त्र्यस्त्ररेखात्रयसृष्टरेखं क्रमेण वृत्तं निष्पाद्य तदन्तरेऽपि तद्व्यासपञ्चमांशमान-क्रमेण वृत्तं निष्पाद्य तयोर्विष्कम्भषोड़शांशसहितं विष्कम्भमानं त्रिगुणीकृत्य-तत् समुदायमानं दशधा विभज्य तेषु एकैकांशचिह्नानि परितस्तद्वृत्तद्वये दश दश विधाय तेषु क्रमेण बाह्यादाभ्यन्तरं तस्माद्बाह्यमिति गोमूत्रिकाक्रमेण तिर्यग्रूपा विंशतिरेखा विलिखेत् । एवं कृते बाह्यवृत्तस्थाष्टाग्राणि आन्तरवृत्तस्थाष्टाग्राणि च त्र्यस्त्राण्यभितो विंशतिसङ्ख्यानि सम्भवन्ति । अन्तर्बहिर्विभागेन चतुरङ्गुलान्तरालां समचतुरस्त्रां वीथीं तेषु सर्वेषु उक्तक्रमेण उक्ताः शक्तीः पूजयेदिति ॥१३॥१४॥१५॥१६॥१७॥ अभ्युक्ष्य—स्वात्मादीनि । मूलतः—मूलविद्यया । पूर्ववत् स्वरूपिणीति त्र्यक्षरसहितम्॥१८॥ तदन्तवृत्तयोर्मध्ये—पञ्चदल पद्मस्य कर्णिकावृत्त-द्वयवीथ्याम् । तथाच वायव्यादिक्रमेण तदन्तर्योन्योर्मध्यस्थपञ्चत्रिंशत्कृतसङ्ख्यात्रि-कोणमध्येषु,अग्रायप्रादक्षिण्येन॥१९॥ तदन्तर्भगमालायां—वृत्त(द्व)योर्मध्यस्थविंशति-त्रिकोणेषु मध्येऽथ देवीमभितः एतदुक्तं भवति—तदन्तर्वृत्तवीथीमध्ये देव्याः षड़ायुधानि। तां वृत्तवीथीं तिर्यग्रेखाषट्कोणं षोढ़ा विभज्य देव्या वामाधरहस्तस्थादीनि दक्षिणाधरहस्तस्थान्तानि(४) अग्राद्यप्रादक्षिण्येन क्रमेणार्चयेदिति ॥२०॥ आद्यवर्णेन—मन्त्राद्येनाक्षरेण सार्द्धमिति शेषः। मूलमन्त्राद्यक्षरं सबिन्दुकं द्वादश-

---

(१) स्वरूपतामिति मू० पु० पा० । (२) रागद्वे षशक्तीमथार्चयेत् इति मू० पु० पा० ।
(३) आयुधानि षट इति मू० पु० पा० । (४) हस्तादीनि इति टी० पु० पा० ।

जपेदष्टोत्तरशतमग्रे देव्यास्तु नित्यशः ।
प्राग्वदग्निमुखं कृत्वा होमं * कुर्याद्दशांशतः ॥२२॥
संयोज्य विन्दौ तां प्राग्वो(१) मूलेनाभ्यर्च्य तां तथा ।
स्वात्मन्युद्वासयेदुक्तप्रकारेण महेश्वरीम् ॥२३॥
देव्यात्मा वशयेद्विश्वं नरनारीनराधिपान् ।
काम्यहोममथो वक्ष्ये नानाभीष्टाप्तिदायकम्(२) ॥२४॥
त्रिमध्वक्तैः पुण्डरीकैर्होमाद्विप्रा वशं नयेत् ।
आरग्वधैस्तु राजानं करवीरैस्तु वैश्यकम् ॥२५॥
उत्पलैर्वशयेच्छूद्रं वनितां जपया हुतैः ।
बिल्वै र्लक्ष्मीर्भवेद्धोमैर्भूः स्याद्यैः कमलैर्हुतात् ॥२६॥
कैरवैर्वाहनावाप्तिर्व(र्द)रपुष्पै र्महद्यशः ।
सौभाग्यं चम्पकैः सिद्धै(३) रक्तसौगन्धिकं हुनेत् ॥२७॥
तगरैर्वस्त्रसंसिद्धौ पुन्नागैर्भूषणाप्तये ।
मधुकैः कन्यकासिद्धौ पलाशैः स्वर्णसिद्धये ॥२८॥

---

स्वरं सर्वासामावरणशक्तीनां मन्त्राक्षरं कुर्यात् इत्यर्थः । बलिद्वयं—पूजारम्भे षोड़शाक्षरमन्त्रेण पूजावसाने कुरुकुल्लासमाक्षर्या च । सर्वत्र पूजादाववसाने च नाथार्चनं कुर्यादिति सम्प्रदायार्थः ॥२१॥ दशांशतः क्रमहोमानन्तरं जपदशांशमूलमन्त्रेण होमं कुर्यात् । एतत् सर्वासां साधारणम् ॥२२॥ (४ उक्तप्रकारेण प्रधानदेव्याः पूजावसाने उक्तेन क्रमेण ॥२३॥ देव्यात्मा—प्राग्वन्न्यासदेवीरूपाद्वयभावनयेत्यर्थः । अत्रापि पुरश्चरणार्थं केवलं दशसाहस्रं विद्या जपित्वा तद्दशांशं तर्पणादिकं कुर्यादिति सम्प्रदायार्थः ॥२४॥

काम्यहोममित्यादिभिः परमेश्वरीत्यन्तैरर्द्धाद्यैः पञ्चभिः श्लोकैः नानाविधद्रव्यहोमैर्नानाफलावाप्तिमुपदिशति । तत्र त्रिमध्वक्तैः—त्रिमधूनि—क्षौद्राज्यदुग्धानि

---

* कृत्वा इति मू० पु० पा० ।

(१) विदौ तं प्राग्वन्मू इति मू० पु० पा० ।
(२ भीष्टाविधायिकाम्इति मू० पु० पा० ।
(४) उक्तक्रमेण इति व० पुस्तके पाठः ।
(३) सिद्धैं र्हतसौगन्धिकैर्हुतैरिति मू पु० पा० ।

किंशुकैरंशुकावाप्त्यै पाटलैः पशुसिद्धये ।
रक्तोत्पलैः सर्वसिद्ध्यै होमयेत्परमेश्वरि ! ॥२८॥
अथ यन्त्राणि वक्ष्यामि वाञ्छितार्थप्रदानि तु ।
चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमैर्लिखेत् ॥३०॥
सर्वाणि सर्वतो यन्त्राण्यभीष्टावाप्तिकामुकः ।
सुवर्णे रजते ताम्रे त्वंशुके भूर्जपत्रके ॥३१॥
धारणं मूर्ध्नि बाह्वोर्वा कण्ठे कट्यां प्रकोष्ठके ।
निधाय क्वापि पूजां वा कुर्याद्यन्त्राण्यशेषतः ॥३२॥
षट्कोणं वृत्तयोर्मध्ये कृत्वा तन्मध्यतस्तथा ।
योनिं विलिख्य तन्मध्ये मायां† साध्यसमन्विताम् ॥३३॥
विलिख्य कोणत्रितये (१)वह्निं षट्केऽपि संलिखेत् (२) ।
एकैकवृत्तयोर्मध्ये शेषार्णानि समालिखेत् ॥३४॥
बहिर्मातृकया वे(३)ष्ट्यवृत्तान्तबिन्दुयुक्तया ।
एवं यन्त्राणि मन्त्राणां दशभिर्दशभिर्भवेत् ॥३५॥

---

क्षौद्रदुग्धदधीनि वा। अस्मिन् प्रकरणे सर्वाणि प्रोक्तानि होमद्रव्याणि त्रिमध्वक्तान्येव जुहुयादित्यर्थः। सर्वत्र काम्यहोमेषु पूर्वं स्वनित्यक्रमं निर्वर्त्यानन्तरं वह्नौ तत्तद्विद्यायाः परिवाराहुतीर्हुत्वा पश्चात् प्रोक्तद्रव्यैः प्रोक्तसंख्यं तत्तन्मूलमन्त्रेण प्रोक्तफलावाप्तये जुहुयात्। होमेषु सर्वत्र होमान्ते हुतसंख्यं मूलमन्त्रं जपेदिति सर्वत्रसमयः ॥२५॥२६॥२७॥२८॥ रक्तोत्पलैः—रक्तकुमुदैः ॥२८॥

अथ यन्त्राणीत्यादिभिरशेषत इत्यन्तैस्त्रिभिः श्लोकैर्यन्त्रकथनप्रस्तावपूर्वं (४)तन्त्रसाधारणं यन्त्रलेखनद्रव्यं यन्त्राधिकरणानि यन्त्रधारणप्रकारांश्चोपदिशति ॥३०॥ ॥३१॥३२॥

षट्कोणमित्यादिभिर्विधीयत इत्यन्तैः (त्रिभिः) षड्भिः श्लोकैश्चतुर्दशयन्त्रनिर्माणक्रमसुपदिशति। तत्र मायां—ह्रींखाम्। साध्यसमन्विताम्—प्राग्वत्तत्र

---

† मध्य इति म० पा०। (१) वह्निः इति सो० पु० पा०। (२) सालिखेत् इति सो० पु० पा०।
(३) वेष्ट इति म० पु० पा०। (४) तत्र इति वं० पुस्तके पाठः।

चरमेऽमृतषष्ट्यैव शेषं संपूजयेच्छिवे !
ज्याकं दावोऽम्बु हृत्स्वेन माययाऽमृतपञ्चकम् ॥३६॥
तत्पञ्चकं स्वरैर्भेदादशीतिर्माययया तथा ।
तैः षंढहीनैः (१) षष्टिः स्यान्माययया च तथा भवेत् ॥३७॥
षष्ट्या शतं समुद्दिष्टं वर्णेष्वमृतविग्रहम् ।
तेषां सर्वत्र तन्त्रेऽस्मिन् विनियोगोविधीयते ॥३८॥

---

मायामध्ये एकमेकं मन्त्राक्षरं च लिखेदिति सम्प्रदायः ३३॥३४॥ शेषार्णानि क्रमेण पञ्चविंशत्यधिकशतसंख्यानि॥३५॥ चरमे—चतुर्दशयन्त्रे। अमृतषष्ट्या—वक्ष्यमाणया ज्याकं दावोम्बुहृत्स्वेनेति। ज्या—जकारः। कं—सकारः। दावः—ठकारः। अम्ब—वकारः। हृत्—सकारः। स्वेन—विन्दुना। मायया—विसर्जनीयेन ॥३६॥ मायया तथा। बिन्दुसहितेषु—स्वरभेदादशीतिसंख्यातेष्वमृताक्षरेषु विन्दुमपास्य सर्वत्र विसर्जनोययोजनात् तान्येवाक्षराणि अशीत्यक्षराणि भवन्तीत्यर्थः। षंढहीनैः—ऋॠलृॡ इत्यक्षरविहीनैः। मायया च तथाभवेत् षण्ढचतुष्टयहीनैर्विसर्जनीययोजितैरपि षष्ठ्यक्षराणि स्युरित्यर्थः ॥ ३७ ॥ षष्ठ्याशतं समुद्दिष्टमित्युक्तिः षण्ढचतुष्टयोपेतत्वात्। वर्णेषु—मातृकायाम्। अमृतविग्रहं—वर्णपञ्चकमितिशेषः। अत्र चतुर्दश षण्ढान् विनाऽमृताक्षराणां सङ्ख्या विंशत्यधिकं शतमेव। तेषां षण्ढयुक्तानां षष्टिशतसंख्यानामम्ताक्षराणां चतुर्दशानां यन्त्राणां विरचनाक्रमोयथा- एकैकाङ्गुलान्तरालानि त्रीणि वृत्तानि क्रमेणान्तर्वहिर्विभागेन कृत्वा तेषु अन्तस्थतृतीयवृत्तमध्ये यथामानं षट्कोणं विधाय तन्मध्ये समत्रिरेखां स्वाभिमुखां योनिं विलिख्य तन्मध्ये नामोपेतां हृल्लेखामालिख्य तदन्तर्मायांशे मन्त्राद्यक्षरमालिख्य बहिस्त्रिकोणेषु मन्त्रस्य द्वितीयतृतीयचतुर्थाक्षराण्यालिख्य बहिः षट्सु कोणेषु अग्न्यादिप्रादक्षिण्येन पञ्चमादिदशमान्तानि वर्णान्यालिख्य तद्बहिर्वृत्तवीथ्यां (२ एकादशाक्षरादीनि पञ्चविंशत्यधिकशतसंख्यानि मन्त्रशेषाक्षराणि प्राग्वत् समालिख्य तद्बहिर्वृत्तवीथ्यां तथैव सविन्दुकान्यक्षराणि प्राग्वत् समालिख्य तद्बहिर्वृत्तवीथ्यां तथैव सविन्दुकान्यक्षराणि आदिक्षान्तानि समालिखेत् एतत् प्रथमं यन्त्रम्। द्वितीयादित्रयो-

---

(१) षंढिहीनैरिति मू० पु० पा०।

(२) एकविंशाक्षरादीनि इति वं० पु० पा०।

चतुर्दशानां यन्त्राणां विनियोगं शृणु प्रिये ! ।
वश्यमाकर्षणं स्तम्भमारोग्यं विजयं श्रियम् ॥३९॥
रक्षां गजाश्वगोमेषमहिषाणामनुक्रमात् ।
नरनारीनृपाणां च प्रोक्तयोगेन साधयेत् ॥४०॥
अमृतार्णैः (१) स्वमूलार्णैः ललितारहितैस्तु तैः ।
नित्याचतुर्दशार्णैश्चाप्येकषष्टिशतेन च ॥४१॥
षटपञ्चाशत्समोपेतं चतुःशतमुदीरितम ।
तैर्यन्त्ररचनायोगं फलानि च शृणु प्रिये ! ॥४२॥

दशान्तेषु द्वादशसु यन्त्रेषु प्रथमयन्त्रलिखिताक्षरदशकोपरिस्थं दशकं द्वितीये तृतीये तुर्यस्तृतीयदशकं एवं क्रमेण द्वादशसु समालिख्य बहिः शेषाक्षरवेष्टने पञ्चविंशत्यधिकशतसंख्याक्षरसिद्ध्यर्थं तन्मध्यलिखिताक्षरदशकदशमाक्षरादुपरितनमुपरितनमन्त्राक्षरमारभ्य हृल्लेखा म ध्यलिखिताक्षरपूर्वाक्षरपूर्वाक्षरावधि अक्षराणि समालिखेत्। चरमे चतुर्दशे यन्त्रे षट्कोणद्वितीयकोणादिषु पञ्चसु पञ्चामृताक्षराणि सविन्दुकान्यालिख्य बहिर्मन्त्रशेषाक्षरस्य वोथ्यां विषण्ढस्वराक्षरविकृतानि सविन्दूनि तदमृतषष्ठ्यक्षराणि ततस्तान्येव विसर्जनीययुक्तानि, ततः सविसर्जनीयान्यमृतपञ्चाक्षराणि चैवं पञ्चविंशत्यधिकशताक्षराणि समालिखेदिति ॥३८ ॥

चतुर्दशानामित्यादिना साधयेदित्यन्तेन श्लोकद्वयेन तेषां चतुर्दशयन्त्राणां यथाक्रमं चतुर्दशफलान्युपदिशति। तत्र—प्रोक्तयोगेन साधयेत्—धारणनिक्षेपादिना ॥३९॥४०

अमृतार्णैरित्यादिना उदोरितमित्यन्तेनार्द्धाधिकेन श्लोकेन त्रयस्त्रिंशद्यन्त्रनिर्माणार्थं मन्त्राक्षराणां संख्याविशेषान् संभूय संख्यां चोपदिशति। तत्र तदुक्तं भवति - षष्ठ्यधिकशतसंख्यैरमृतार्णैः पञ्चत्रिंशदधिकशतसंख्यैः स्वमूलविद्यार्णैः ललितां विना मूलविद्यारहितैरन्यैश्चतुर्दशनित्याविद्याक्षरैरेकषष्टिशतसङ्ख्यातैश्च संभूय संख्या षट्पञ्चाशत्समोपेतं चतुःशतमुदोरितमिति ॥४१॥

तैरित्यादिना श्लोकोत्तरार्द्धेन तैर्यन्त्राणि तत् फलानि च प्रस्तौति। तत्र— तैः—प्रोक्तसंख्यैरक्षरैः ॥४२॥

(१) चमूलार्णैः इति मू० पु० पा०।

त्रिकोणमष्टपत्राब्जं बहिर्वृत्तद्वयं तथा ।
(१) विधाय मध्ये मायास्थं कृत्वा नामत्रिकोणगम् ॥४३॥
अन्तरालत्रयं त्रिस्थं बहिः पत्राष्टगामिव ।
चतुर्दशार्णमालिख्य वृत्तमध्ये तु मातृकाम् ॥४४॥
विलिख्यार्चाहुतजपसेकासिद्धानि योजयेत् ।
त्रयस्त्रिंशत्तमं यन्त्रं सशक्त्यमृतपञ्चकैः ॥४५॥
ज्वरे घोरे शीतिकायां तथा चातुर्थिके गदे ।
स्फोटे मसूरिकायां च नेत्राभ्यां कुक्षिसंभवे ॥४६॥

---

त्रिकोणमित्यादिभिः पञ्चकैरित्यन्तैस्त्रिभिः श्लोकैः प्रोक्तैः षट्पञ्चाशच्चतुःशतवर्णैरमृतपञ्चाक्षरैः शक्त्याख्यया हृल्लेखया च त्रयस्त्रिंशद्रूपयन्त्रविरचनाक्रममुपदिशति। तत्र चैतदुक्तं भवति इष्टमानेन क्रमेण वृत्तद्वयमन्तर्बहिर्विभागेन एकाङ्गुलान्तरालं निष्पाद्य तदस्थाङ्गुलान्तरालेन वृत्तेन कर्णिकां तद्बहिस्त्र्यङ्गुलान्तरालेन वृत्तेन कर्णिकां तद्बहिस्त्र्यङ्गुल्यन्तवीथ्यामष्टपत्राणि च कृत्वा कर्णिकामध्ये समत्रिरेखां कर्णिकावृत्तस्पृष्टास्त्रत्रयां योनिं कृत्वा तन्मध्ये प्राग्वन्नामोपेतां हृल्लेखामालिख्य तदस्त्रेषु त्रिषु प्रोक्तसङ्ख्येष्वक्षरेषु आदितः त्रयं कर्णिकावृत्तयोन्यस्त्रान्तरालत्रये त्रयं बहिरष्टसु पत्रेषु अग्रादिप्रादक्षिण्येनाष्टाक्षराणि चैवं चतुर्दशाक्षराण्यालिख्य बाह्यवृत्तवीथ्यामकारादिक्षकारान्तां मातृकां तथैवाभिलिखेत् एतेष्वक्षरेष्वादितः चतुर्दशभिरक्षरैः प्रथमं यन्त्रम्। एवं प्रोक्तचतुर्दशाक्षरादुपरितनैश्चतुर्दशभिरक्षरैर्द्वितीयं यन्त्रम्। एवमुपरिस्थैश्चतुर्दशभिश्चतुर्दशभिरक्षरैः क्रमेणान्यानि च त्रिंशद्यन्त्राणि चरमयन्त्रम्। त्रयस्त्रिंशद्यन्त्रविनियुक्तावशिष्टाक्षराष्टकेनामृतपञ्चाक्षरेण हृल्लेखया च एवं चतुर्दशभिरक्षरैः कुर्यात्, एवं त्रयस्त्रिंशद्यन्त्राणि कृत्वा पूजाहोमजपाभिषेकैर्विनियुंज्यादिति। अत्रार्चाजपादिकं मातृकया तत्तल्लिखिताक्षरैश्च, एवं सर्वत्राक्षरयन्त्रेषु विधानम् ॥४५॥

ज्वरेत्यादिभिरीश्वरीत्यन्तैश्चतुर्दशभिः श्लोकैस्त्रयस्त्रिंशद्यन्त्राणां क्रमेण त्रयस्त्रिंशत्फलान्युपदिशति। तत्र चातुर्थिके—चतुर्थदिवसेषु पीड़ाकरशान्ति

---

(१) त्रिधास्थमध्यमायास्थ इति मू० पु० पा०।

यक्षराक्षसगन्धर्वपिशाचोरगपीड़ने ।
बालग्रहार्तौ दौर्भाग्ये वन्ध्यात्वे वैरिपीड़ने ॥४७॥
वादे चोन्मादने(१) राजक्रोधे चोरभये तथा ।
डाकिन्यादिगणैः षड्भिराक्रान्त्यां ब्रह्मराक्षसैः ॥४८॥
प्रमेहकामलाच्छर्दिदोषजेषु त्रिषु क्रमात् ।
योजयेदुक्तविधिना त्रयस्त्रिंशदितीश्वरि ! ॥४९॥
कामेश्वर्यादिनित्यानां साधारणसमर्चनम् ।
शृणु देवि ! प्रवक्ष्यामि सर्वाङ्गाङ्गित्वयोगतः (२)॥५०॥
तासां पञ्चदशानान्तु मन्त्रवर्णाः समीरिताः ।
शतद्वयं षण्णवतिं तैश्चक्रं तत्र पूजनम् ॥५१॥
प्राक्प्रत्यग्दक्षिणोदक्च रेखाविंशतिमालिखेत् ।
तेन कोष्ठानि जायन्ते चतुरस्राणि पार्वति ! ॥५२॥

---

कागदे ॥ ४६॥४७ ॥ षड्भिराक्रान्त्यामिति षड्विधानि फलान्युच्यन्ते ॥ ४८ ॥ दोषजेषु त्रिषु—वातपित्तश्लेष्मजेषु रोगवर्गेषु त्रिविधेषु । उक्तविधिना—अर्चाजपादिना ॥४९॥

कामेश्वर्यादीत्यादिना श्लोकेन ललिताया अङ्गभूतानामन्यासां ( पञ्चदशानां नित्यानामन्योन्यांगित्वेन तासां ) पञ्चदशप्रकारं साधारणमर्चनं प्रस्तौति । तत्र—कामेश्वर्यादिनित्यानां—पञ्चदशानामिति शेषः ॥५०॥

तासामित्यादिना श्लोकेन ललितादीनां पञ्चदशानां तासां सम्भूय मन्त्राक्षरसङ्ख्यामुपदिश्य तैरक्षरैस्तासां साधारणं काम्यपूजाचक्रं च प्रस्तौति । तत्र—तैः—प्रोक्तसङ्ख्यैरक्षरैः ॥५१॥

प्राक्प्रत्यगित्यादिभिः पूजयेदित्यन्तैर्विंशत्या श्लोकैः परिपूर्णपूजाचक्रनिर्माणं पूजाक्रमं पूजोपकरणविशेषादिकं चोपदिशति । तत्र प्राक्प्रत्यक् इत्यादिभिः क्रमेण वै इत्यन्तैरेकादशभिः श्लोकैस्तच्चक्रनिर्माणं तत्र पञ्चदशनित्यानां पूजाक्रमं

---

(१) न्मादके इति मू० पा० ।
(२) सर्वाङ्गानि प्रयोगत इति मू० पु० पा ।

शतत्रयं त्वेकषष्ट्या तेष्वीशादिप्रदक्षिणम् (१)।
प्रदेशगत्या(२) विलिखेद्यावत्सङ्ख्या यथान्तरम् ॥५३॥
पञ्चषष्टिस्तेषु दिक्षु प्रागादिषु* चतुष्टयम् ।
(३) अवशिष्टं भवेत्तेषु दिक्स्थेष्वेकीकृतेषु च† ॥५४॥
(४) मायां चतुष्टयान्तस्थमालिखेद्वाञ्छितं क्रमात् ।
एकोनपञ्चाशत्कोष्ठेष्वेकीभूते(न)षु तत्र वै ॥५५॥
पद्मं चतुर्दशदलं बहिर्वृत्तद्वयं तथा ।
लिखित्वा कर्णिकामध्ये योनिं मायोदरां लिखेत् ॥५६॥
दलेष्वपि तथा शक्तिं चतुर्दशसु संलिखेत् ।
भगमालां मध्यशक्त्यामावाह्याभ्यर्चयेद्बहिः ॥५७॥
पश्चिमादि तु वायून्तमन्या आवाह्य पूजयेत् ।
यथाक्रममिदं चक्रमासां साधारणं भवेत् ॥५८॥
मध्ये मध्ये (तथा) तु या पूज्या शेषास्तत्र दलाश्रिताः ।
यथाक्रमेण चित्रान्ताः पूजयेदुक्तविग्रहाः ॥५९॥

---

चोपदिशति—तत्र यथान्तरा—पञ्चषष्टिरवशिष्टानि कोष्टानि भवेयुस्तथेत्यर्थः॥५२॥ ॥५२॥तेषु—पञ्चषष्टिषु । प्रागादिष्विति । यथा प्रागादिदिक्षु चतुष्टयं चतुष्टयं मध्यतोऽवशिष्टं स्यात् । तेषु—चतुष्कचतुष्टयेषु एकीकृतेषु, मध्यरेखात्रयमार्जनेनेति शेषः ॥५४॥ एकोनपञ्चाशत्कोष्ठेषु—एकीभूतेषु तत्र वै ॥५५॥ पद्मं चतुर्दशदलं—समचतुरस्रस्वरूपेण मध्यतः एकीकृतदिग्गतचतुरस्रचतुष्कान्तसूत्रावधि एकोनपञ्चाशत्कोष्ठानि एकीकृत्य तत्र प्रोक्तरूपं पद्मं कुर्य्यादित्यर्थः ॥५६॥ मध्यशक्त्यां—मध्यशक्तिस्थ हृल्लेखा ॥५७॥ अन्याः-चतुर्दशनित्याः । आसां-

---

(१) त्रिणाम् इति मू॰ पु॰ पा॰ ।
(२) प्रवेशगत्येति मू॰ पु॰ पा॰ ।
* प्राणादिषु इति सो॰ पु॰ पा॰ ।
(३) अष्टविंशं इति मू॰ पु॰ पा॰ ।
† तु इति मू॰ पु॰ पा॰ ।
(४) माया चतु इति मू॰ पु॰ पा॰ ।

चतुरस्रद्वयं बाह्ये कृत्वा द्वाराणि दिक्षु च ।
द्वाराणां पार्श्वयोः कोणे ष्वर्चयेद्द्वादश क्रमात् ॥६०॥
ब्राह्मी माहेश्वरीं द्वारे पश्चिमे सव्यदक्षिणे ।
कौमारीं वैष्णवीं सौम्ये वाराहीन्द्रीं च पूर्वगे ॥६१॥
चामुण्डासु महालक्ष्मी याम्ये वायूदिकोणगाः ।
देशकालौ तथाकारशब्दौ प्रोक्तक्रमेण वै ॥६२॥
पूजयेत्प्रोक्तरूपैस्तु (श)प्रोक्तरूपाश्च ताः क्रमात् ।
उपचारैरासवैश्च मांसैर्मत्स्यैः सुसंस्कृतैः ॥६३॥

---

चतुर्दशनित्यानाम् ॥५८॥५९॥६०॥ पूर्वगे—द्वारे इति शेषः ॥६१॥६२॥ एवमेतैरेकादशभिः श्लोकैरेतदुक्तं भवति—पञ्च(त्रिं)विंशत्यंगुलान्तरालं समचतुरस्रं कृत्वा तस्माद्द्व्यङ्गुलादन्तः समचतुरस्रं विलिख्य तद्द्व्यङ्गुलवीथ्यां चतुर्दिक्षु द्वाराणीति । अङ्गुलमानेन (समचतुरस्रं चत्वारि सूत्राणि) कृत्वा तत्र मध्ये दक्षिणोत्तराणि प्राक्पश्चिमान्तानि चैकैकैकाङ्गुलान्तरालानि अत्राष्टादशाष्टादशसूत्राण्यास्फाल्य सर्वमध्ये एकोनपञ्चाशत्कोष्ठान्येकीकृत्य तत्र वृत्तद्वयं चतुरस्रसूत्रस्पृष्टास्पृष्टिकया भ्रमेण निष्पाद्य तन्मध्ये सकर्णिकं चतुर्दशदलपद्मं विधाय तत्कर्णिकामध्ये वृत्तत्र्यस्रस्पृष्टां समत्रिरेखां योनिं कृत्वा तन्मध्ये हृल्लेखामालिख्य तद्बहिः पश्चिमादिवायून्तं (वाह्यान्तं) वामावर्तेन चतुर्दशसु दलेषु प्रतिदलं हृल्लेखां समालिख्य तत्पद्मचतुरस्राद्बहिः प्रागादिचतुर्दिक्षु मध्यतश्चत्वारि कोष्ठान्यन्तर्बहिर्विभागेनैकीकृत्य तत्र हृल्लेखां प्राग्वद्वाञ्छितार्थगर्भां समालिख्य बहिः सर्वबाह्यपङ्क्तिस्थशिवादिकोष्ठमारभ्य प्रादक्षिण्यक्रमेण प्रवेशगत्या अनुक्तक्रमं षस्रवत्यधिकशतद्वयसङ्ख्येषु कोष्ठेषु तत्सङ्ख्यानि पञ्चदशनित्याविद्याक्षराणि कामेश्वर्यादिचित्रान्तं क्रमेण समालिख्य चतुर्षु सर्वबाह्यचतुरस्रद्वारेषु पश्चिमादिदक्षिणान्तं प्रादक्षिण्येन ब्राह्म्याद्यष्टशक्तीः सव्यदक्षिणशाखयोर्द्विद्विक्रमेणाभ्यर्च्य (वायु)वाह्यादिषु निर्ऋत्यन्तेषु कोणेषु देशकालाकाशशब्दं शक्तीः समभ्यर्च्य तदन्तः प्रागुक्तेषु कोष्ठेषु ईशकोष्ठादिप्रवेशगत्या प्रादक्षिण्येन पञ्चदशनित्याविद्याक्षराणि तैस्तैरक्षरैरभ्यर्च्य पश्चिमादिषु चतसृषु वाञ्छितगर्भहृल्लेखासु भगमालामभ्यर्च्य सर्वमध्ये च तामेव तद्विद्ययाऽभ्यर्च्य पश्चिमादिवायून्तं (वाह्यान्तं)

अपूपैः पायसैर्दुग्धैः सुशृतैः सितसंयुतैः ।
कदलीपनसाद्यैश्च फलैर्मधुभिरेव च ॥६४॥
नैवेद्यैः प्रीणयेद्देवीं नृत्यगीतादिभिस्तथा ।
एकरात्रं त्रिरात्रं वा पञ्चरात्रं तु सप्त वा ॥६५॥
नवरात्रं तथा पक्षं मासं पूर्णादिकं तु वा ।
वर्षं वा फाल्गुनान्तं वा स्यात्समस्तार्तिनाशनम् ॥६६॥
ग्रहाणां प्रातिकूल्येषु दीर्घरोगेषु वैकृते ।
देवतानामथोत्पाते त्रिविधे त्वभिचारके ॥६७॥
दारिद्र्यविजयप्राप्तौ दुर्भिक्षे शत्रुपीडने ।
कृच्छ्रेष्वन्येषु घोरेषु पूजैषा सर्वकामदा ॥६८॥
पीठे वा सुसमे कृत्वा वेदिकामण्डने तु वा(१) ।
कृत्वैतत्प्रोक्तरूपं च प्रोक्तद्रव्यै(२)स्तथाऽर्चयेत् ॥६९॥

---

तत्तद्बाह्यदलेषु नित्यक्लिन्नादिकामेश्वर्यन्तास्चतुर्दशनित्याः समर्चयेत् एवमन्यासु चतुर्दशनित्यास्वपि मध्यस्थाया अनन्तरनित्यादि तत्पूर्वनित्यान्तं तथाऽर्चयेत् इति ॥ ६२ ॥

पूजयेदित्यादिभिः पूजयेदित्यन्तैर्नवभिः श्लोकैः निवेद्यद्रव्यविशेषांस्तत्र पूजाकालावधिं पूजाविधानसमयादिकं चोपदिशति । तत्र प्रोक्तरूपैः—रक्तगन्धेत्यादिना । साधक इति शेषः । प्रोक्तरूपाः—तत्र मध्यनित्यासमानविग्रहाभरणायुधाः बाह्यदलस्थाश्चतुर्दशनित्याः अत्र प्रोक्तनिवेद्यद्रव्यविशेषाः । अस्मिन् पञ्चदशानां अङ्गाङ्गिभावकाभ्यर्चनक्रमप्रोक्तेषु पञ्चदशसु चक्रेषु निवेदनीयाः । सर्वत्र सर्वासां षोडशनित्यादीनां नैमित्तिककाम्ययोरेव एतैर्द्रव्यविशेषैः पूजादिकं कुर्यादित्युत्तरत्र स्वयमेव वक्ष्यति ॥६३॥ मधुभिः—क्षौद्रैः ॥६४॥६५॥६६ ॥ दीर्घरोगेषु—वाताद्यष्टमहारोगेषु । कृते—देवतानाम् । देवताप्रातिकूल्यत्वात् समीक्ष्य क्रिय-

---

(१) वेदिकां मण्डले तथेति मू० पु० पा०
(२) प्रोक्तं द्रव्यैरिति सी० पु० पा० ।

नमेरुचम्पकाशोकपुन्नागबकुलाम्बुजैः

मल्लिकामालतीजातीशतपत्रोत्पलादिभिः ॥७०॥

सुगन्धिभिस्तथाऽन्यैश्च पूजयेत्पूर्णमानसः।

एतद्विद्याभक्तिरूपास्तियुतानन्यांश्च पूजयेत् ॥७१॥

वंस्रुते सष्वरे तु वा चेतत्ताकं वांपि(त)परस।

यजाधाहीना पूविब्र तु(वा) चावल्पस्थनं (सका) शकं ॥

न्नु मिणुथप्राया श्र कं न(म) स कम्पल्पगावसं(ण)ध्वी

ध्वाथाड़ी (ध्वीष्ठीस्थाली) मायैतगै।

तिचिविधंवं (त्वे) तस्मृत(वित्यो)

वितवलों माषुध्वीगौचते ॥ ७४ ॥

जंद्विपिष्टे ष्टस्वाचसेद्यं द्यन्टोडं (स्वाटोल-

कामादु) षामत्वगौण्डुतनाथश्प्री

(स्तोकिल) मतत्त्वाचि(त)मुदग्रपित् द्यान्निमाचिलोविसस्मिक्

चपेटेतकामध्वजः सुनोतरकोमधास्तु।

(मौध्यात्वथो)त्यायो भूसंरवासात्त्वोमूरेयसम्यकश्मिन्।

---

माणेष्वपि सर्वत्र वैपरीत्ये उत्पाते—त्रिविधे दिव्यान्तरिक्षभौमत्वेन प्रोक्ते ॥६७॥ दुर्भिक्षे—अन्नह्रासे। कृच्छ्रेषु—देशप्राप्तमार्यादिषु। पूजैषा पञ्चदशविधा ॥६८॥ प्रोक्तरूपं—पञ्चदशनित्यासाधारणार्चनचक्रम्। सर्वत्र प्रोक्तेषु ग्रहप्रातिकूल्यादिषु प्रोक्तद्रव्यविशेषैः तत्तन्नित्यपूजाचक्रेषु (न) पूजयेदिति सम्प्रदायः। अन्यांश्च—स्वसम्प्रदायबहिर्भूता नपि ॥७०॥७१॥

अतःपरं नवत्यन्तं श्लोकरूपेण व्याख्यायते।

चतुःषष्ठितमोपेतास्त्रिःसप्तत्यादयोऽष्टमे ॥

नवत्यन्तानेकविंशाः श्लोका व्याकुलिताक्षराः ॥

देवीतन्त्रार्थगामी यस्तत्पादाम्बुजशेखरः।

वेतेसतमागमातंरसिमदुग्ने जनिन ।

पूयेषोन्ते ध्यज(श)सन्तः गुयो

(लीगलालपैः)गशालुगौगात् धु ।

(गानधूमाचंसंशय)मावयोमस एष्टीग्डध्वी प्रियैशृनायेह्निगे ।

धग्रतोर्धगु अनैःत्तलं पशयेडुग्रस्मिन् योते ।

न तत्वषिदिपेत् रजः (यं)षिकुरसातिकतम् ।

न वामे धृदितः स्थाये वां तने पनिश्वात् लोतं ॥

दयकीलि(ञ)डधुपैकं लिमतं ष्टिगानि स्फ़ूजं ।

त्तचे जंलत्वधुविते विमधंद्यह्विस्रे गांगडं ।

(रोसागुवि) निप्रामांश्रृतंयदानालस्वात्मयरंवाषाह्वी ।

जूञ्ञथमृवा(प्यथा)ष्कलालं पिषुमफेस्वास्यांसिधू ।

त्विकभमतं धीशेतषिम(वश्रि)चशृन(शै)सलेसि ।

(से)शेध्वाच प्राकया(न्)त् दिसलिह्वतं व मिहं स्वापुलि ।

जातं दुगाभं यरं नोशुल्कमस्यनाकीर्त्वं ।

रन्तु लिवातः स्यातातालल्थहिंधड़ाततम् ।

लदुकां समहंद्योसाभंवसरनिस्थरलां ।

लितकीफना तेशनालियुतेशिसथंगल ।

---

साधको वाचयेत् श्लोकानष्टमे व्याकुलक्रमान् ॥

एष वाचनाश्लोकः—त्रिससत्यादयः श्लोका नवत्यन्ता दशाष्ट च ।

सुबोधार्था अपि स्वल्पं व्याक्रियन्ते ततस्ततः ।

व्याख्यानमपि तेषां तु श्लोकैर्व्याकुलिताक्षरैः ।

षड्भिर्दिलिख्यते तैस्तु वाचयेत्प्रोक्तरूपतः ।

णं सनिस्तमांतावतैः रःपमेवो श्वतीरव्रर्थमिकास्यर्चानैमित्तिकाः कं रमान्-स्वादिका क्रतः ॥१॥ त्पगुयोतस्तु कौलधारणंस्तुतुगग(गुंगुं)योचना । ह्याशन्तः लिच्छिलतसतनः घनः मापुलो पुस ॥२॥

द्रं क्षापूफ आयेत् च्चितासयनिरप्यतसए ।
तवैद्यआवदतं शतं वपि ढाते रेणुस ।
दिवेभि आयेत् वावेर्ध्यादथँ निरधग्रोत्वातव्यै ।
स्वाकृतदेयं ह्नातद्यात् ह्नसियदानिरताध ।
ह्नाकोयसास्थचेत्मास्वधिपिसङ्गोचित् चेत्क्रसि ।
दापिनतन्नावेवेदित्तनिपितताकुर्नवी ।
चवत्त्याय: त्तनोवलन्ममयाद्य: रोचैत्तत्स ।
कति नवं भवति तध्र्की चपान्यत् गुसिवष्ठा ।
नारुदेया समावसन्नावपि स्वरादन्तड़य: ।
कीजपा च सएद्याचपांनवितत्धयोधा ।
रेसाकसान्तं च मीम्परिमेसकात्तं सदाङ्ग ।
प्रोस्थवंशिवेत् त्वयोतोभसो न्मया(१)॥९०॥
अथान्यं शृणु देवेशि ! चक्रमद्भुतदर्शनम् ।
योन्यर्णवाख्यं वनितागवपर्वतवज्रकम् ॥९१॥

---

यं लमंह्नातो गुसयज: धाकीर्तिरयं तु तत् ।
नसलेसि शेह्नाव प्राक्तर्चं चोग: दिशप्रं सत्रयो ॥३॥
शस्य तड्यां लतु तं येत् वियोकुञ्ज र निर्मलम् ।
दिशद्दीलिका अम्रतं णदोतुरिर्गुमुचम् ॥४॥
योपूफपूलं रगत: यो इक्तिरितो गर्ल्युव्या ।
लारैत्रर्द्दे ह्नावत: दाससिद्वियांवंस: ॥५॥
तूस्वातस्वास्वदारप्राक् चर्दकत्त्यास्य देशगौ ।
स्याज एधो वयत् वा क्षत् क्ष कान्यमथा सद ॥६॥
अथान्यदित्यादिभिरस्य सा इत्यन्तैर्दशभि: श्लोकै: योन्यर्णवाख्यमभंगुरु

---

(१) एतावत्पर्यन्तं श्लोका मूलपुस्तके सो० पुस्तके चाऽन्यथावर्तन्ते एषामर्थोनावबुध्यते कुत्रवा श्लोकपूर्तिस्तदपि न ज्ञायते आदर्शपुस्तके यादृशान्यक्षराणि लिखितानि तादृशान्येवाऽत्र मुद्रितानि इति ध्येयम् ।

षड्विंशाङ्गुलमानेन कृत्वा योनि(१)समे तले ।
तत्र द्व्यङ्गुलमानेषु सूत्राण्येकादशार्पयेत् ॥९२॥
तेनात्र योन्योजायन्ते त्रिकोणानि शतात्परम् ।
चत्वारिंशच्च चत्वारि तेषु मन्त्राक्षराणि तु ॥९३॥
प्रादक्षिण्यप्रवेशे(न) तु विलिखेत्तु निरन्तरम् ।
मध्येऽवशिष्टनवकं नववर्गसमन्वितं ॥९४॥
नाथान्नव लिखेत् पश्चात्साध्याख्याकर्मसंयुतम् ।
सर्वत्र विलिखेद्भूयो(२) भूयोस्त्वावर्तनेन तु ॥९५॥
अर्द्धरात्रे तु तां साध्यां स्मरन्मदनवह्निना ।
दह्यमानां हृतस्वांतां मस्तकस्थापिताञ्जलिम् ॥९६॥
विकीर्णकेशीमालोललोचनामरुणारुणाम् ।
वायुप्रेङ्खत्पताकाख्यपटोपमकलेवराम् ॥९७॥
विवेकविधुरां मत्तां मानलज्जाभयातिगाम् ।
(३)चिन्तयेन्नार्चयेच्चक्रमध्ये देवीं दिगम्बराम् ॥९८॥
जपादाड़िमबन्धूककिंशुकाद्यैः समर्चयेत् ।
अन्यैः सुगन्धिशे(षत्)फालि कुसुमाद्यैः सुगन्धिभिः ॥९९॥
त्रिसप्तरात्रादायाति प्रोक्तरूपा मदाकुला ॥५५॥
यावच्छरीरपातन्तु छायेवाऽनपगाऽस्य सा ॥१००॥

---

वनितासङ्कुलनं यन्त्रं तद्ध्यानं तत्पूजाजपक्रमं तत्फलस्वरूपं चोपदिशति। तत्र मन्त्राक्षराणि भगमालिनीविद्यायाः पञ्चत्रिंशदधिकशताक्षराणि ॥९१॥९२॥९३॥ नववर्गसमन्वितम्। अकारादीनि षोड़श स्वराक्षराणि द्विधा विभज्यान्यानि कादिक्षान्तानि अक्षराणि पञ्चशो विभजेत्। एवं कृते त्वकचटतपयसा इत्या-

---

(१) योनिं म इति सी० पु० पा० ।
(२) भूय आवर्तते इति सू० पु० पा० ।
(३) विचिन्त्यमर्चयेदिति सू० पु० पा० ।

रूपतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१ ॥
इति श्रीषोडशनित्यातन्त्रेषु श्रीकादिमतेऽष्टमं पटलम् ॥८॥

---

दयो नववर्गा नवनाथात्मकाः ॥९४॥९५॥९६॥ कलेवरं—शरीरम् ॥९७॥९८॥९९॥ प्रोक्तरूपा—मदनवह्निना दह्यमानमित्यादिना । अनपगा—अनन्यगा । अत्र एभिः दशभिः श्लोकैरेतदुक्तं भवति, वृत्तान्तः षड्विंशाङ्गुलमानरेखात्रयां योनिं स्वाभिमुखीं तस्याः कृत्वा तस्या एकां रेखां द्वादशधा विभज्य तेषु चिह्नान्येकादश कृत्वा एवमन्यस्मिन्नपि रेखाद्वये चिह्नानि कृत्वा चिह्नात् चिह्नमिति क्रमेण एकादश सूत्राण्यास्फालयेत् । एवं कृते चतुश्चत्वारिंशदधिकं शतं त्र्यस्राणि सम्भवन्ति । तेषु स्ववामोर्द्ध्वादिप्रादक्षिण्यप्रवेशगत्या भगमालिनीविद्यायाः पञ्चत्रिंशदधिकशताक्षराणि समालिख्य मध्ये ऽवशिष्टनवके प्रोक्तनववर्गोपेतनाथनवकस्य प्रत्येकं नवाक्षराणि समालिख्य सर्वत्र चतुश्चत्वारिंशदधिकशतत्रिकोणेष्वपि साध्यसाधककर्माख्याः प्रोक्तक्रमेण प्राग्वत् समालिख्य तन्मध्ये देवीमावाह्य प्रोक्तक्रमेण देवीं ध्यात्वा अभ्यर्च्य प्रोक्तकालात् प्रोक्तफलमवाप्नुयादिति ॥१००॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां भगमालिनीनित्याविद्याविधानप्रकाशनपरं अष्टमं पटलं परिपूर्णं
परामृष्टम् ॥ ८ ॥

---

ग्रन्थसङ्ख्या ।

त्रिषष्टिरष्टमे यन्त्राण्यथ व्याख्यानवर्तिनः ।
ग्रन्थाः शतात्परं सार्द्धमशीतिरिति वीक्षितम् ॥

---

## अथ नवमं पटलम् ।

अथ षोड़शनित्यासु चतुर्थीं शृणु पार्वति !
नित्यक्लिन्नाविधानानां तन्मन्त्रं प्रागुदीरितम्(१) ॥१॥
तदङ्गानि च तद्ध्यानं तच्छक्तीस्ताभिरर्चनाम्(२) ।
होमतर्पणभेदांश्च यन्त्राणि फलभेदतः ॥२॥
निर्दिष्टं क्रमतो वक्ष्ये समस्तं परमेश्वरि !
आद्येन मन्त्रवर्णेन हृदयं समुदीरितम् ॥३॥
ततो द्वाभ्यां पुनर्द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयेन च ।
कुर्याच्छेषाणि चाङ्गानि करयोश्च न्यसेत् क्रमात् ॥४॥
तन्त्रे षड़ङ्गमन्त्रोक्तं(३) तत्र तत्र करद्वये ।
न्यसेदङ्गुष्ठमूलादि कनिष्ठाग्रान्तमूर्ध्वगम्(४) ॥५॥
शेषं तलद्वये (५)न्यस्त्वा हृत्तस्तोत्रेण सार्द्धयोः ।
त्वचि ध्वजे च पायौ च पादयोर्वर्णकं(६) न्यसेत् ॥६॥

---

### अथ नवमं पटलम् ।

पूर्वस्मिन्नष्टमे पटले तृतीयाया भगमालिनीनित्याविद्याया विधानमुपदिश्यानन्तरं चतुर्थ्या नित्यक्लिन्नानित्याविद्याया विधानमुपदिशति । अथ षोड़शेत्यादि-विग्रहादित इत्यन्तेन श्लोकशतरूपेण नवमपटले । तत्र अथ षोड़शेत्यादिना परमेश्वरीत्यन्तेनाध्यर्द्धेन श्लोकद्वयेन पटलार्थानुद्दिशति । तत्र तन्मन्त्रं प्रागुदी-रितं—तृतीयपटल इति शेषः । ताभिः—परिवारशक्तिभिः सार्द्धमितिशेषः । निर्दिष्टं—अर्थजातमिति शेषः ॥२॥

आद्येनेत्यादिभिर्न्यसेदित्यन्तैरर्द्धाधिकैस्त्रिभिः श्लोकैः षड़ङ्गन्यासक्रममुपदिशति । तत्र द्वाभ्यां—विद्याक्षराभ्याम् । शेषाणि—पञ्च क्रमात्॥३॥४॥ तत्र षड़ङ्गमित्यादिना

---

(१) नित्यक्लिन्नाभिधानं तु तन्मन्त्रोद्धारमीरिता इति मू० पु० पा० ।
(२) तच्छक्तिःस्ताभिरर्चनम् इति मू० पु० पा० ।
(३) षड़ङ्गयन्त्रोक्तमिति मू० पु० पा० ।
(४) कनिष्ठान्तस्थमूर्धगमिति मू० पु० पा० ।
(५) न्यस्यहृट्कश्रोत्रनसोर्द्वये ति मू० पु० पा० ।
(६) पादयोरंन्यकान्यसेत् इति मू० पु० पा० ।

अरुणामा(१)रुणाकल्पामरुणांशुकधारिणीम् ।
अरुणास्त्रग्विलेपां तां चारुस्मेरमुखाम्बुजाम् ॥७॥
नेत्रत्रयोल्लसद्वक्त्रां भाले घर्माम्बुमौक्तिकैः ।
विराजमानां मन्दारलसदर्द्धेन्दुशेखराम् ॥८॥
चतुर्भिर्बाहुभिः पाशमङ्कुशं पानपात्रकम् ।
अभयं बिभ्रतीं पद्ममध्यासीनां मदालसाम् ॥९॥
ध्यात्वैवं पूजयेन्नित्य क्लिन्नानित्यां(२) स्वशक्तिभिः ।
क्षोभिणीमोहिनीलीलास्त्रिकोणाग्रेषु शक्तयः ॥१०॥
नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा ।
मदद्रवा द्राविणी च(३) विधानाचाष्टपत्रगा ॥११॥
मदाविला मङ्गला च मन्मथार्ता मनस्विनी ।
मोहाऽऽमोदा मानमयी मायामन्दामनोवतीः(४) ॥१२॥
चतुरस्त्रगताः पूज्या मदारुणचलेक्षणाः(५) ।
मध्यनित्या समाकारवर्णवाहायुधान्विताः(६) ॥१३॥

---

न्यस्त्वा इत्यन्तपादाधिकश्लोकोक्तार्थः प्रागेवास्माभिरभिहितः । त्वचि—सर्वाङ्गे । ध्वजे—मेहने । पायौ—गुदे । पादयोरेकमक्षरमिति शेषः ॥५॥६॥

अरुणामित्यादिभिर्मदालसां इत्यन्तैस्त्रिभिः देव्या नित्यसपर्याध्यानं श्लोकैः (षडङ्गन्यासक्रमसु) पदिशति । तत्र चतुर्भिर्बाहुभिः—वामोर्द्धादिवामदक्षिण-क्रमेण ॥७॥८॥९॥

ध्यात्वैवमित्यादिभिरन्विता इत्यन्तैश्चतुर्भिः श्लोकैस्तदावरणशक्तीरुपदिशति । तत्र मोहेत्येकाशक्तिः आमोदा इति च ॥१०॥११॥१२॥१३॥

---

(१) मरुणाकल्पामिति सू० पु० पा० ।
(२) नित्यंक्लिन्नां इति सो पु० पा० ।
(३) द्रविणीचाष्टेति सू० पु० पा० ।
(४) मयामन्द्रस्विता च इति सू० पु० पा ।
(५) विलेक्षणा इति सो० पु० पा० ।
(६) वर्णवाह्यायुधानिचेति सू० पु० पा० ।

चतुरस्रद्वयं कृत्वा प्राक्प्रत्यग्द्वारसंयुतम् ।
तन्मध्येऽष्टदलं(१)पद्मं तन्मध्ये त्र्यस्रकं तथा ॥१४॥
अर्घ्यं षडङ्गमूलाभ्यां कृत्वा तां प्राङ्मुखोऽर्चयेत् ।
चतुरस्रे पश्चिमादिनिर्ऋत्यन्तं यजेच्च ताम् ॥१५॥
द्वारपार्श्वेषु कोणेषु दिक्षु ता दश पूजयेत् ।
तदन्तराऽष्टपत्रेषु पश्चिमादिप्रदक्षिणम् ॥१६॥
अर्चयेदष्टशक्तीस्तास्तदन्तर्योनिकोणगाः ।
अग्रात् प्रदक्षिणं तिस्रः शक्तीश्चोक्तविधानतः ॥१७॥
कर्णिकायोनिमध्यस्थदेशे वाय्वीशवह्निषु ।
निर्ऋत्यां पुरतोदिक्षु यजेदङ्गानि षट् क्रमात् ॥१८॥
ततो देवीं तु तां नित्यक्लिन्नानित्यामुदीरयेत् ।
उपचारैरर्चयेच्च बलिं दद्याच्च पूर्ववत् ॥१९॥
तदग्रतो जपेद्विद्यां सहस्रं यदि वा शतम् ।
ततोऽभ्यर्च्य शिवां होमं कुर्यादुक्रमेण तु ॥२०॥

---

चतुरस्रद्वयमित्यादिना श्लोकेन देव्या नित्यसपर्याचक्रमुपदिशति। तत्र चक्रनिर्माणं सुकरं कृत्वाऽर्चयेदितिशेषः ॥१४॥

अर्घ्यमित्यादिभिश्चरेदित्यन्तैरष्टभिः श्लोकैर्देव्या नित्यसपर्याक्रममुपदिशति। तत्र प्राङ्मुख इति सर्वत्र साधारणम् ॥१५॥ द्वारपार्श्वेष्विति, एतदुक्तंस्यात्—मदाविलाद्याः दशशक्तीः चतुरस्रे पश्चिमद्वारदक्षिणदिग्गतकक्षामारभ्य वायुसोमेशानदिक्षु पूर्वद्वारस्य उत्तरदक्षिणपार्श्वयोर्वह्नियमनिर्ऋतिदिक्षु च पूजयेदिति। पश्चिमादिप्रदक्षिणं—देव्या अग्रमारभ्य प्रादक्षिण्येन। एतदत्र सर्वपरिवारशक्तिसाधारणम् ॥१६॥ ताः—नित्याद्यास्तिस्रः क्षोभिण्याद्याः। उक्तविधानतः—एवमुक्तक्रमेणेत्यर्थः॥१७॥ वाय्वीशेत्यादिषडङ्गावरणार्चनक्रमः सर्वत्रार्घादिषडङ्गार्चनविधाने साधारणः। पुरतो—देवतायाः॥१८॥ उपचारैः—षोडशभिरितिशेषः। पूर्ववत्—षोडशा-

---

(१) मन्मध्ये षड्दलं इति मू०

आज्यसिक्तांधसाऽऽज्येन पुष्पैर्वा सौरभान्वितैः ।
जुहुयात्प्राग्वदुदितसङ्ख्यं प्राग्वत्समाप्य तत् ॥२१॥
अभ्यर्च्य देवीमथ तां स्वात्मन्युद्वास्य पूर्ववत् ।
न्यासं कृत्वा स्तोत्रयुगं जपित्वा तन्मयश्चरेत् ॥२२॥
विद्यायाः साधनं(१) सम्यक् समीहितफलप्रदम् ।
शृणु देवि ! प्रवक्ष्यामि प्रयोगार्हो यतो भवेत् ॥२३॥
जितेन्द्रियो हविष्याशी त्रिसन्ध्यार्चारतो जपेत् ।
प्राग्वल्लक्षं तद्दशांशं कुर्याद्धोमं च तर्पणम् ॥२४॥
मधूकपुष्पैर्मध्वक्तैर्बकुलोत्थैरथापि वा ।
चन्द्रचन्द्रनकस्तूरीवासितैस्तर्पयेज्जलैः ॥२५॥
ततोनित्या(२)प्रयोगार्होनित्यार्चानिरतस्तथा ।
सहस्रजापी तद्भक्तः कुर्य्यादुक्तं न चाऽन्यथा ॥२६॥

---

चरमन्त्रकुरुकुल्लाविद्याभ्यां बलिदानमाद्यन्तयोरित्यर्थः ॥१८॥ उक्तक्रमेण । प्राग्वत् —अग्निमुखादिकं कृत्वेत्यर्थः ॥२०॥ अन्धसा —अन्नेन । प्राग्वत्—नित्यपूजाक्रमेण । उदितसङ्ख्यं—जपदशांशसङ्ख्यम् । तत्—हवनम् ॥२१॥ अभ्यर्च्य—मूलविद्यया । पूर्ववत्—तेजःस्वरूपेण स्वान्तर्योजनम् । स्तोत्रयुगं—पञ्चश्लोकरूपं द्वादशश्लोकरूपं च । एष स्तोत्रयुगजपः सर्वनित्यासाधारणः । तन्मयः—प्राग्वत् ॥२२॥

विद्याया इत्यादिभिरन्यथा इत्यन्तैश्चतुर्भिः श्लोकैर्विद्यापुरश्चरणप्रकारमुपदिशति । तत्र यतः—साधनतः ॥२३॥ त्रिसन्ध्यार्चारतः—त्रिसन्ध्यासु ललितासाधनवत् भजनपरः । प्राग्वत् लक्षं—विद्याया युगानुरूपमक्षरलक्षक्रमेण ॥२४॥

मधूकपुष्पैरित्यादिना श्लोकेन यथाक्रमं पुरश्चरणहोमतर्पणद्रव्याणि कथयति । तत्र (त्रि)मध्वक्तैः—त्रिमधुसिक्तैर्मधूकपुष्पैर्जुहुयादितिशेषः ॥२५॥ उक्तान् प्रयोगान् । नित्यार्चनानिरत इत्यादिना एतदुक्तं भवति—पुरश्चरणानन्तरमपि नित्यार्चानिरतः प्रतिदिनं सहस्रजापी विद्यागुरुभक्तः साधकः प्रयोगाद्यभिज्ञः नान्यमिति (नान्यथेति) सर्वदेवतासाधारणम् ॥२६॥

---

(१) विद्याया साम्प्रतं इति सू० पु० पा। 　(२) विप्रप्रयोगार्हो इति सो० पु० पा० ।

पद्मै रक्तैस्त्रिमध्वक्तैर्होमाल्लक्ष्मीमवाप्नुयात् ।
तथैव कैरवैरक्तैरङ्गनास्तु वशं नयेत् ॥२७॥
समानरूपवत्सायाः शुक्लायाश्च पयःस्नुतैः ।
मल्लिकामालतीजातीशतपत्रैर्हुतैर्भवेत् ॥२८॥
कीर्तिविद्याधनारोग्यसौभाग्यविजयादिकम् ।
आरग्वधप्रसूनैस्तु क्षौद्राक्तैर्हवनाद्भवेत् ॥२९॥
स्वर्णाप्तिः स्तम्भनं शत्रोः नृपादीनां क्रुधोऽपि वा ।
आज्याक्तैः करवीरोत्थैः प्रसूनैररुणैर्हुतैः ॥३०॥
रक्ताम्बराणि वनिताभूपमर्त्त्यं वशं तथा ।
भूषावाहनवाणिज्यसिद्धयश्चास्य वाञ्छिताः ॥३१॥
लवणैः सर्षपैर्गौरैरितरैर्वा(स्य)ऽथ होमतः ।
तत्तैलाक्तैर्निशामध्ये त्वानयेद्वाञ्छितां वधूम् ॥३२॥
तैलाक्तैर्जुहुयात्कृष्णा(१)दरपुष्पैर्निशान्तरा ।
मासादरातेः(२) तीव्रार्तिज्वरेण भवति ध्रुवम् ॥३३॥
आरुष्करघृताभ्यक्तैस्तद्बीजैर्निशि होमतः ।
शत्रोर्देहे व्रणानि स्युर्दुःसाध्यानि चिकित्सकैः ॥३४॥
तैरेव ज्वलिताङ्गस्तु रिपुर्याति यमालयम् ।
तथा तत्तैलसंसिक्तैर्बीजैरङ्गारकैरपि(३) ॥३५॥

---

पद्मैरित्यादिवधूमित्यन्तैः षड्भिः श्लोकैर्नानाविधहोमतोनानाफलावाप्तिमुपदिशति। तत्र समानरूपवत्सायाः—शुक्लवत्साया इत्यर्थः ॥२७॥२८॥२९॥३०॥३१॥ इतरैः—कृष्णैः। वा पक्षान्तरे। तत्तैलाक्तैः—सर्षपद्वयतैलाक्तैः ॥३२॥ तैलाक्तैरित्यादिभिरपीत्यन्तैः त्रिभिः श्लोकैः शत्रुनिग्रहार्थं होममुपदिशति। तत्र तद्बीजैः आरुष्करबीजैर्होमेन यथोक्तफलप्राप्तिः ॥३३॥३४॥३५॥

---

(१) यादक्राद इति मू० पु० पा०। (२) मासादारातेस्त्री इति मू० पु० पा।
(३) रङ्गीलजैरपीति मू० पु० पा०।

मरीचैः सर्षपाज्याक्तैर्निशि होमात्तु मासतः ।
वाञ्छितां वनितां कामज्वरार्तामानयेद् ध्रुवम् ॥३६॥
मरीचैः सर्षपोपेतैः सप्तवाराहुतैर्निशि ।
धैर्यमानकुलैर्नित्यं दुष्प्रापामानयेद्वधूम् ॥३७॥
अन्नाज्यैर्जुहुयान्नित्यं शतमष्टोत्तरं तु वा ।
तेनान्नपूर्णभुवनोभोक्ता च भवति प्रिये ! ॥३८॥
शालीभिराज्ययुक्ताभिर्होमात्छालीमवाप्नुयात् ।
मुद्गैः मुद्गं घृतैराज्यमिष्टैरिष्टं हुतैर्भवेत् ॥३९॥
साध्यर्क्षवृक्षसंभूतां पिष्टपादरजःकृताम् ।
राजीमरीचलोणोत्थां पुत्तलीं जुहुयान्निशि ॥४०॥
प्रपदाभ्यां च जङ्घाभ्यां जानुभ्यामूरुयुग्मतः ।
नाभेरधस्ताद् हृदयाच्छिन्नेनाकण्ठतस्तथा ॥४१॥
शिरसा च सुतीक्ष्णेन छित्वा शस्त्रेण वै क्रमात् ।
एवं द्वादशधा होमान्नरनारीनराधिपाः ॥४२॥
वश्या भवन्ति सप्ताहाज्ज्वरार्ता चास्य वाञ्छया ।
प्रयान्ति निधनं चास्य वाञ्छयाऽनन्ययोगतः ॥४३॥

---

मरीचैरित्यादिना वधूमित्यन्तेन श्लोकद्वयेन वनिताकर्षणहोममुपदिशति । तत्र सुगमोऽर्थः ॥३६॥३७॥

अन्नाज्यैरित्यादिना भवेदित्यन्तेन श्लोकद्वयेन अन्नादिद्रव्यहोमविधानात्तत्फलाप्तिमुपदिशति । तत्र तु वाक्यार्थः । चःसमुच्चये ॥३८॥३९॥ साध्यर्क्ष—वृक्षः । अश्विन्यादीनां सप्तविंशतिनक्षत्राणां वृक्षानुत्तरत्र स्वयमेव वक्ष्यति । राजी - सर्षपः । लोणं— लवणम् । एतदुक्तं भवति— साध्यजन्मनक्षत्रप्रोक्तवृक्षेण साध्यांशकप्रोक्तमार्गेणोपेतां पुत्तलिकां वा साध्यपादरजःसमेतपिष्टमयीं तथाविधां वा सर्षपमरीचिलवणैर्भस्मणपेषितैः कृतां वा प्रोक्तक्रमेण जुहयादिति ॥४०॥ प्रपदाभ्यां—पार्ष्णिसन्धिच्छिन्नाभ्यां अग्रपादाभ्यां जङ्घाभ्यां जानोरधस्ताच्छिन्नाभ्यां जानुभ्यां

पिष्टेन गुड़युक्तेन मरीचैर्जीरकैर्युताम् ।
कृत्वा पुत्तलिकां साध्यनामयुक्तामथो हृदि ॥४४॥
सनामहोमसंपातघृते संपाच्य तां पुनः ।
स्पृशन्निजकराग्रेण सहस्रं प्रजपेन्मनुम् ॥४५॥
अभ्यर्च्य तत् घृताभ्यक्तां भक्षयेत्तद्धिया जपन् ।
नरनारीनृपास्तस्य वश्याः स्युर्मरणावधि ॥४६॥
तैरेव पिष्टैर्वृत्तं तु कृत्वा तन्मध्यतस्तथा ।
साध्यनाम स्फुटं कृत्वा प्राग्वत् संपाच्य भक्षणात् ॥४७॥
वश्यास्ते वत्सरं भूयुः तन्नामार्णान्वितैस्तथा ।
कृत्वाऽभिपाच्य(१) भक्ष्यात्तु वशयेत्तांस्तदर्द्धकम् ॥४८॥

---

तन्मध्ये रूपरिच्छिन्नाभ्याम् । (जरु)युग्मतः कटीसन्धिच्छिन्ननाभेरधस्तात् नाभिदेशच्छिन्नेन खण्डेनेत्यर्थः । आहृदयात् भिन्नेन—खण्डेनेतिशेषः । आकण्ठतः—कण्ठात् छिन्नेनेत्यर्थः॥४१॥ शिरसा कण्ठात् उपरिस्थेन । क्रमात्—उक्तक्रमेणैतानि छित्वा एतैर्जुहुयादित्यर्थः ॥४२॥ अनन्ययोगतः—स्वात्मैक्यभावनयेत्यर्थः ॥४३॥

पिष्टेत्यादिभिर्मरणावधि इत्यन्तैस्त्रिभिः श्लोकैः पुत्तलिकाभक्षणे नरनारीनृपादिवश्यमुपदिशति । तत्र पुत्तलिकां—प्राग्वदुक्तमानोपेताम् । हृदि—पुत्तलिकाहृदये, प्राग्वल्लिखितसाध्यसंज्ञामित्यर्थः ॥४४॥ सनामहोमसंपातघृते—साध्यनामसहितविद्याहोमप्रत्याहुत्यवशेषितघृते इत्यर्थः । तां पुत्तलिकाम् ॥४५॥ अभ्यर्च्य प्राणप्रतिष्ठाविद्यया तत् घृताभ्यक्तां—संपातघृताभ्यक्ताम् । तद्धिया—साध्यभक्षणधिया ॥४६॥

तैरित्यादिना तदर्धकमित्यन्तेन श्लोकद्वयेनापूपविशेषभक्षणेन वशीकरणमुपदिशति । तत्र तैरेव पूर्वोक्तगुड़ादियुक्तैः । वृत्तं—मण्डलं अपूपमित्यर्थः । प्राग्वत्—संपातातघृतपाचनादिभिः ॥४७॥ते—नरादयः । वत्सरं—अत्यन्तसंयोगे द्वितीया । वत्सरेणेत्यर्थः । भूयुरित्यस्य दिव्यत्वात् स्वरूपं न चिन्त्यं भूयासुरित्यर्थः । तन्नामार्णान्वितैः संस्कृतैः प्रागुक्तैः पिष्टैः साध्यनामाभिरूपं

---

(१) खादंस्तु वशयेत्तां तदर्धकम् इति मू० पु० पा० ।

नालिकेरफलाम्भोभिस्तर्पणाद्वनिता वशाः ।
कर्पूरवासितैस्तोयैर्मनुष्याः स्युर्वशे स्थिताः ॥४९॥
तर्पणाल्लवणाम्भोभिः सर्वे स्युस्तस्य किङ्कराः(१) ।
तथा लवणयुक्तेन तोयेन वनिता वशाः ॥५०॥
शुद्धेन वारिणा मासं तदर्द्धं सप्तरात्रकम् ।
तर्पयेद्यस्य नाम्नैव स तस्य स्याद्वशोऽनिशम् ॥५१॥
(२)केतकीवासितैश्चेन्दुयुक्तैः क्षीरफलोदकैः ।
तर्पणाद्वनिता वश्या दद्युः प्राणान्निजं धनम् ॥५२॥
नमेरुवासितैस्तोयैस्तर्पणात् भूमिपा वशाः ।
चम्पकैर्वासितजलैः तर्पणं सर्वरञ्जनम् ॥५३॥
पाटलीशतपत्राभ्यां वासितैस्तर्पणैर्जलैः ।
सर्वलोकचमत्कारकारी भवति नित्यशः ॥५४॥
कस्तूरीवासिताम्भोभिस्तर्पणं सर्वसिद्धिकृत् ।
इन्दुचन्दनसौरभ्यवासिताम्भःप्रतर्पणम् ॥५५॥
वाञ्छितार्थस्य संसिद्धिं मण्डलात् कुरुते ध्रुवम् ।
सक्तुमिश्रजलैराढ्यो धनधान्यादिभिश्चिरम् ॥५६॥

---

त्वेत्यर्थः । तथा—प्राग्वत् । संपातघृतादिना वीच्छितान्* । तान्—नरादीन् । तदर्धकं—षण्मासम् । प्राग्वत् द्वितीया षण्मासेनेत्यर्थः ॥४८॥

नालिकेरेत्यादिभिर्विघ्ननाशकमित्यन्तैः सार्द्धैरष्टभिः श्लोकैर्नानाकाम्यतर्पण-प्रयोगमुपदिशति । तत्र नालिकेरफलाम्भोभिः—नालिकेरफलोदकैः ॥४९॥५०॥ ॥५१॥५२॥ नमेरुः—सुरपर्णी ॥५३॥५४॥ इन्दुः—कर्पूरम् ॥५५॥ मण्डलात्—मण्डलं नाम एकोनपञ्चाशद्दिनानि । आढ्यः—धनधान्यादिभिरित्यर्थः ॥५६॥

---

(१) म्भोधिजलैः सर्वस्य किन्नरा इति सो० पु० पा० ।　　(२) केतकैर्वासितैरिन्दु इति सो पु० पा० ।

* वाञ्छितान् नरादीन् इति व० पु० पा०

गुड़मिश्रजलै रात्रौ तर्पणं विघ्ननाश(क)नम् ।
चिञ्चाफलरसोपेतैर्जलैर्द्वेषाय तर्पयेत्(१) ॥५७॥
उष्णोदकैः समरिचैस्तर्पयेद्वैरिमृत्यवे ।
केवलोष्णोदकैस्तस्य(२)तीव्रज्वरसमुद्भवः ॥५८॥
निम्बपत्ररसोपेतैरम्बुभिस्तर्पणाद् द्विषाम् ।
जायतेऽन्योन्यवैरस्यं तेन ते नाशमाप्नुयुः ॥५९॥
तथैव सर्षपतिलैस्तर्पणाद्वैरिणोभृशम् ।
अतिसारादिभिर्दीर्घैरौदरैः क्लेशमावहेत् ॥६०॥
अथ यन्त्राणि देवेशि ! शृणु वाञ्छाप्रदानि वै ।
यैः कृतैः सिद्धयो हस्ते भवन्ति भजनादपि ॥६१॥
षट्कोणं वृत्तयोर्मध्ये कृत्वा मध्ये सनामकम् ।
विद्याद्यवर्णं विलिखेद्द्वितीयादीनि षट् क्रमात् ॥६२॥
षट्सु कोणेषु विलिखेच्छिष्ट(३)वर्णचतुष्टयम् ।
वृत्तयोरन्तरा दिक्षु लिखेत्कोणान्तरालतः ॥६३॥
भूताक्षराणि क्रमशो दश द्विश्चिक्रमेण तु ।
एवमेकादशविधं मध्येऽन्येषां निवेशनात् ॥६४॥

---

चिञ्चेत्यादिभिरावहेदित्यन्तैरर्द्धाद्यैस्त्रिभिः श्लोकैर्वैरिनिग्रहतर्पणमुपदिशति । तत्र चिञ्चाफलं—तिन्तिड़ीफलम् ॥५७॥५८॥५९॥ अतिसारादिभिः—रक्तश्लेष्मादिभिः ॥६०॥

अथ यन्त्राणीत्यादिभिः तथा इत्यन्तैरेकादशभिः श्लोकैरविकृतमूलविद्याक्षरैः पञ्चपञ्चाशद्यन्त्राणि तत्फलानि चोपदिशति । तत्र भजनादपीत्युक्तिर्यन्त्राणां फलप्राप्तौ द्रौत्यप्रतिपादनपरा ॥६१॥६२॥ कोणान्तरालतः—उक्तबन्धचतुष्टयस्य

---

(१) कल्पयेत् मू० पु० पा० ।
(२) स्तस्मात्तीव्रेति सो० पु० पा० ।
(३) सर्णचतु इति सो० पु० पा० ।

भूताक्षराणां प्रत्येकं योगात्पञ्चाशताऽन्वितम् ।
पञ्चकं परमेशानि ! शृणु तानि यथाक्रमम् ॥६५॥
एषु सर्वत्र तद्बाह्ये वृत्तं कृत्वा च मातृकाम् ।
विलिखेदभितः पश्चाद्विनियोगमथोच्यते ॥६६॥
वश्ये त्रयमथाकर्षे द्वयं शान्त्यां द्वयं तथा ।
मध्ये नामाक्षरन्यासभेदात्तद्भेदकल्पनम् ॥६७॥
एवं तत्फलभेदस्तु सप्तविंशतिधा भवेत् ।
शेषाणि शृणु देवेशि ! क्रमेण विनियोगतः ॥६८॥
स्तम्भनं मोहनं पश्चाद्विद्वेषोच्चाटनं तथा ।
मारणं व्याधिभिः क्लेशं कुलोत्सादकरं तथा ॥६९॥

---

मध्यस्थकोणदिक्षु ॥६३॥ भूताक्षराणि क्रमशो दश—तानि उद्धारसङ्केतोक्तदशाक्षराणि॥६४॥ षट्कोणमित्यादिभिः पश्चादित्यन्तैस्त्रिपादाधिकैश्चतुर्भिः श्लोकैरेतदुक्तं स्यात्—अभीष्टमानेन वृत्तं कृत्वा तन्मध्ये प्रोक्तक्रमेण षट्कोणं विधाय तद्वृत्तात् बहिरेकैकाङ्गुलमानेन वृत्तद्वयं क्रमेण निष्पाद्य सर्वबाह्यवृत्तवीथ्यामकारादिक्षकारान्तान्येकपञ्चाशदक्षराणि सविन्दुकानि अग्रात्प्रादक्षिण्येनाऽऽलिख्य सर्वमध्ये मूलविद्यादिभूतां ह्रल्लेखां प्राग्वत् सनामाक्षरामालिख्य विद्याद्वितीयाक्षरादि—सप्तमाक्षरान्तानि षड़क्षराणि षट्सु कोणेषु अग्रादिप्रादक्षिण्येनाऽऽलिख्य विद्यायाः शिष्टाक्षरचतुष्टयं षट्कोणबाह्यवृत्तवीथ्यामग्रादिप्रादक्षिण्येन चतसृषु दिक्षु समालिख्य तद्वीथ्यां कोणदिक्षु चतसृषु च वायव्यादिनिर्ऋत्यन्तं भूताक्षराणि दशकर्म्मानुरूपाणि द्वयं त्रयं इति क्रमेणाऽऽलिखेत् एतत् प्रथमं यन्त्रम् । अस्यैव सर्वमध्ये विद्याद्वितीयाक्षरं—अभितः क्रमेण शिष्टाक्षराणि च मध्यलिखित—पूर्वान्तमालिखेदेतद्द्वितीयं यन्त्रम् । अस्यैव सर्वमध्ये एवमेकादशनामाक्षराणां विद्यागतानां तृतीयादि चरमान्तं प्रत्येकमुक्तक्रमेण विलेखनादुक्ताभ्यां सार्द्धमेकादश यन्त्राणि सम्भवन्तीति । एष्वेव प्रत्येकं प्रोक्तक्रमात् पञ्चभूताक्षरदशकविन्यासभेदात्पञ्चपञ्चाशद्यन्त्राणि भवन्ति इति॥६५॥ विनियोगः। पञ्चपञ्चाशद्यन्त्राणामितिशेषः॥६६॥ वश्ये त्रयं—स्त्रीपुरुषराजविषयतस्त्रिविधे वशे त्रयं यन्त्रत्रयम् ।

गजाश्वोष्ट्रखराणां च रक्षा महिषमेषयोः ।
गवां नराणां नारीणां विजयः समरद्विषाम् ॥७०॥
द्वन्द्वयुद्धे तथा वादे व्यवहारेषु सर्वतः ।
द्यूते च रक्षानगरग्राममङ्गलके तथा ॥७१॥
विद्यायां पुनरुक्तानि हित्वा वर्णानि तान्यपि ।
एकादश स्युस्तैः प्राग्वत् स्वरयोगान्महेश्वरि !॥७२॥
षट्सप्तत्या शतं प्रोक्तं वर्णानां मन्त्रगामिनाम् ।
प्रोक्तयन्त्रेषु विलिखेदेकादशविभागतः ॥७३॥
मातृकाविद्ययाऽऽवेष्ट्य कुर्यात्तन्नामयोजनम् ।
षोडशानां च यन्त्राणां विनियोगमथोच्यते ॥७४॥

---

आकर्षे—स्त्रीपुरुषयोरन्योन्यविषयतो द्विविधे आकर्षे द्वयम् । शान्त्यां—उपद्रवोत्पातविषयतो द्विविधायां शान्त्यां यन्त्रद्वयम् । तद्भेदकल्पनं—यन्त्रभेदकल्पनम्॥६७॥ एवम्—उक्तप्रकारेण । तत्फलभेदः—यन्त्रफलभेदः । सप्तविंशतिधा—वश्याकर्षणशान्तिभिस्तिसृभिः स्तम्भनादिभिश्चतुर्विंशतिभिश्च । वश्यं त्रयमित्यादिभिः तयेत्यन्तैः पञ्चभिः श्लोकैरेतदुक्तं भवति—प्रोक्तानि पञ्चपञ्चाशद्यन्त्राणि वश्यविषये त्रीणि । आकर्षणविषये च द्वयम् । शान्तिविषये च द्वयम् । अन्येषां—स्तम्भनादीनां मण्डलरक्षान्तानां चतुर्विंशतिविधानां प्रयोगानां प्रत्येकं द्वयं द्वयं एवं पञ्चपञ्चाशद्यन्त्राणां सप्तविंशतिविधफलयोजनं तेषु सर्वत्र नामाक्षरविन्यास—प्रकारकौशलेन तत्र तत्र वैविध्यादिकल्पनं, तेन सर्वाण्येतानि पञ्चपञ्चाशद्यन्त्राणि एकैकं सप्तविंशतिविधफलप्रदानि इति ६८॥६९॥७०॥७१॥

विद्यायामित्यादिना योजनमित्यन्तेनार्द्धाधिकेन श्लोकद्वयेन स्वरविकृतमूलविद्याक्षरैः षोडशयन्त्राण्युपदिशति । तत्र—एकादश—हकाररेफनकारतकारयकारककारलकारमकारदकारवकारसकाराः । तत्रासंयुक्तस्वराभावात्स्वरोपादानम् ॥७२॥ प्रोक्तयन्त्रेषु—पञ्चाशत्प्रोक्तयन्त्ररेखाविन्यासत इत्यर्थः । एकादश विभागतः । प्रोक्तस्वरविकृताक्षराणि एकादशैकादशत इत्यर्थः ॥७३॥ तत्रैतदुक्तं

---

(१) मङ्गला इति सो० पु०पा॥

प्रथमेन तु यन्त्रेण कन्यकाः स्ववशं नयेत् ।
तेनैव तासामार्त्तिं च शमयेत्सेकधारणैः ॥७५॥
स्वस्थावेशं च तेनैव कुर्यान्मन्त्रजपं तथा ।
तन्मयीं(तत्स्थां च) भावयेत्कन्यां धूपैः सर्ज्जरसैर्दहेत्(१)॥७६
आविष्टे तां समभ्यर्च्य प्रोक्तैस्तैरुपचारकैः ।
(२)पृच्छेत्स्ववाञ्छितानर्थानाचष्टे साऽऽत्मनः सदा ॥७७॥
ततोऽभ्यर्च्यात्मना योज्यं तां तदात्मा भवेत्स्वयम् ।
तासामवस्थामन्यैश्च शमयेदस्य धारणात् ॥७८॥
द्वितीयेन तु यन्त्रेण कर्पटे गैरिकद्रवैः ।
लिखेत्तेन जयेद्वादे प्रतिवादिनमन्तरा ॥७९॥
स्थापनात्तस्य नियतमतिप्रौढ़ोऽपि तत्क्षणात् ।
स्तब्धजिह्वो निरुद्योगः शुष्कास्यो लोललोचनः ॥८०॥

---

भवति—प्रोक्ते तस्मिन् यन्त्रे मध्यषट्‌कोणषट्के अन्तर्वृत्तवीथीमध्यस्थचतुर्दिक्षु यथाक्रमं तत्तदेकादशाक्षराण्यालिख्य बाह्यवृत्तवीथ्यां मातृकामन्ते विद्ययोपेतां तदङ्गतयाऽभिधया सहाग्रादिप्रादक्षिण्येनालिख्य सर्वमध्याक्षरमध्ये च प्राग्वन्नाम समालिखेदिति । एवं तदक्षरैर्विलिखितैरेकादशवर्णोपरिस्थैरेकादशभिरेकादशभिरक्षरैः षोड़शयन्त्रकल्पनम् । मातृकान्ते मूलयोजनं तदन्ते नामाक्षरयोजनं कृत्वा तेन वेष्टनमिति सम्प्रदायार्थः ।

षोड़शानामित्यादिभिः ग्रहादित इत्यन्तैरर्द्धैः पञ्चविंशत्या श्लोकैस्तेषां विनियोगक्रममुपदिशति ॥७४॥ तत्र तेनैव—प्रथमेन यन्त्रेण । तासां—कन्यकानाम्॥७५॥ स्वस्थस्य देवतावेशनं तेनैव कुर्यात् तस्मिन् प्रथमे यन्त्रे कन्यकां स्थापयित्वेत्यर्थः । मन्त्रं—मूलविद्यां । तन्मयीं—देवतामयीम् । सर्ज्जरसैः—सर्ज्जरसोनाम धूपद्रव्यविशेषः ॥७६॥ आविष्टे—देवताया आवेशे सति । तां—देवताविष्टां कन्यकाम् । आचष्टे सा देवताऽऽविष्टकन्यकेतिशेषः ॥७७॥ अभ्यर्च्य—मूलविद्यया । तां—

---

(१) दहेत् इति सो० पु० पा० ।
(२) पृच्छेत्तां वाञ्छितं देवि आचष्टे इति सो० पु० पा० ।

विलोकयन् दशदिशस्त्यक्तलज्जः पलायते ।
पतेद्वा पादयोः क्षिप्रं जितोऽस्मीति त्वया वदन् ॥८१॥
तृतीयेन निशापिष्टतोयेन लिखितेन तु ।
कर्पटे खर्परे वापि स्थापितेनोष्णभूतले ॥८२॥
चुल्ल्यधो वा दिनैर्द्विलैः स्तम्भयेत्सुदृढं रिपोः ।
रोषं गतिं मतिं जिह्वां समरं सर्वमेव च ॥८३॥
आयान्तमग्रतोरात्रौ मार्गमध्ये खनन्निदम् ।
बलिं दद्यात्तु तद्योन्या तन्नच्चलोक्तया पुनः ॥८४॥
तेन तत्पृतना भ्रष्टा रुग्णा गतसमुद्यमा ।
भीता न तन्मुखा जातु घटते यन्त्रवैभवात्(१) ॥८५॥
चतुर्थेनारिनक्षत्रवृक्षोत्थफलकातले ।
लिखितेन पुरोक्तेन स्थापितेन पुरं रिपोः ॥८६॥
नाशमेति रिपुः कृच्छ्रैर्वैरिरोगादिसम्भवैः ।
तेषु तेषु प्रयोगेषु कुर्य्याद्रक्षामथात्मनः(२) ॥८७॥
पञ्चमेनाथ षष्ठेन सप्तमेनाष्टमेन च ।
नवमेन च कुर्वीत रक्षां राष्ट्रपुरालये ॥८८॥

---

देवताम् । तदात्मा—देवतात्मा । तासां—कन्यकानाम् । अन्यैरपि —पिशाचादिभिः । अस्य—प्रथमस्य यन्त्रस्य धारणादभिषेकपुरःसरादितिशेषः ॥७८॥ अन्तरा स्थापनादित्यन्वयः । तयोरितिशेषः ॥६८॥ तस्य—द्वितीययन्त्रस्य ॥८०॥८१॥ निशापिष्टेन तोयेन—पिष्टहरिद्रारसेनेत्यर्थः । कर्पटे—वस्त्रे । खर्परे—मृण्मये कपाले ॥८२॥ वा—पक्षान्तरे । चुल्ल्यधः । अश्मन्तकाधः वा प्राग्वत् ॥८३॥ आयान्तं—रिपुं ज्ञात्वेतिशेषः । इदं—तृतीययन्त्रम् ॥८४॥ घटते—चेष्टते ॥५८॥ पुरोक्तेन हरिद्रारसेन॥८६॥ तेषु तेषु—अमङ्गलरूपेषु । रक्षां—अभिषेकादितः॥८७॥ पञ्चमेत्यादिभिः प्रयोजकमित्यन्तैश्चतुर्भिः श्लोकैरेतदुक्तं भवति—प्रोक्तेषु

---

(१) मन्त्रवैभवादिति सो॰ पु॰ पा॰ । (२) रक्षार्थमात्मन इति सो॰ पु॰ पा॰ ।

प्रागादिषु चतुर्दिक्षु वाह्यादिष्वष्टदिक्ष्वपि ।
मध्ये च स्थापयेद्यन्त्रं ताम्रपट्टेषु कल्पितम् ॥८९॥
क्रमेण पञ्चमं मध्ये स्थापयेत्तत्प्रयोगतः ।
स्वराष्ट्रे नगरे राजगृहे प्रोक्तक्रमात् खनेत् ॥९०॥
तेन वैरिकृताः कृत्याप्रयोगाः क्रूरविग्रहाः ।
प्रवेष्टुमशक्तास्ते नाशयन्ति प्रयोजकम् ॥९१॥
दशमे राजते पट्टे विलिख्य कवचं दधत् ।
रणं वीरः प्रविश्याशु नाशयेद् द्रावयेच्च तत् ॥९२॥
एकादशं निशातोये घृष्टगैरिकलेखनात् ।
कर्पटे स्थापितं शीघ्रं शमयेद्धृतां रणम् ॥९३॥
द्वादशेनेन्दुकाश्मीरलिखितेन धृतेन तु ।
भूर्जपत्रपुटे सम्यक् सर्वरक्षा भवेन्नृणाम् ॥९४॥
त्रयोदशेन यन्त्रेण तालपत्रकृतेन तु ।
ताललिप्तेन कुड्यान्तः स्थापितेनार्चितेन च ॥९५॥
गृहरक्षा भवेद्व्याधिचोरग्रहभुजङ्गमात् ।
राजतो वैरितो बाधादन्यक्षुद्रादितस्तथा ॥९६॥
चतुर्दशेन यन्त्रेण भूर्जपत्रे स्थितेन वै ।
धृतेन कामिनीनां तु सौभाग्यमतुलं भवेत् ॥९७॥

---

पञ्चयन्त्रेषु पञ्चमादि अष्टमान्तं यन्त्रचतुष्कं प्रागादिषु दिक्षु पुनस्तच्चतुष्कं वाह्यादिषु कोणदिक्षु च सर्वमध्ये प्रोक्तानां पञ्चमं नवमं यन्त्रम् । प्रोक्तक्रमेण—स्थापनतः प्रोक्तफलानि स्युरिति । प्रयोजकं—प्रयोक्तारं वैरिपक्षस्थं तत्प्रतिबलमित्यर्थः ॥८८॥८९॥९०॥९१॥९२॥ निशा—प्राग्वत् ॥९२॥९३॥ इन्दुः—कर्पूरम् । काश्मीरं—कुङ्कुमम् । भूर्जपत्रे—भूर्जत्वचि ॥९४॥ ताललिप्तेन—हरिताललिप्तेन । कुड्यान्तः—भित्तिमध्यतः ॥९५॥ राजतः बाधात्—राजकृतात् बाधात् । एवं

तथा पञ्चदशेनापि स्वर्णपट्टधृतेन तु ।
वन्ध्यापि लभते पुत्रं गुणाढ्यं दीर्घजीविनम् ॥९८॥
षोड़शेनोक्तरूपेण साभिषेकं धृतेन वै ।
सपत्नीष्वपि कान्तेन भर्तुः साऽत्यन्तवल्लभा ॥९९॥
भूर्जस्थेन धृतेनैवं सर्वेषामपि सर्वदा ।
रक्षा भवति मर्त्यानां राजचौरग्रहादितः ॥१००॥
स्पर्शतत्त्वमयी व्याप्तिरिति सम्यक्समीरिता ।
अस्या निष्कालनात्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥
इति श्रीषोडशनित्यातन्त्रेषु श्रीकादिमते नवमं पटलम् ॥९॥

---

वैरित इत्यादावपि । क्षुद्रादितः—वैरिकृतक्षुद्रप्रयोगादितः ॥९६॥९७॥९८॥ उक्तरूपेण—स्वर्णपट्टादिषु—विलिखितेन ॥९९॥ धृतेनैवं—एवं धृतेन षोड़शेन यन्त्रेणेत्यर्थः । राजचौरग्रहादित इत्यत्र ग्रहः देवतागणविशेषाः । आदिशब्दः शत्रुकृतक्षुद्रप्रयोगादिविषयः ॥१०१॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां भगमालिनीनित्याविद्याविधानप्रकाशनपरं नवमं पटलं परिपूर्णं परामृष्टम् ॥ ९ ॥

---

ग्रन्थसङ्ख्या ।
एकसप्ततिसंख्यानि यन्त्राणि नवमे तथा ।
व्याख्या ग्रन्थशतं सत्रिपादमेकोनविंशकम् ॥

---

## अथ दशमपटलम् ।

अथ षोड़शनित्यासु भेरुण्डा पञ्चमी तु या ।
तद्विधानं शृणु प्राज्ञे ! कथयामि यथाविधि ॥१॥
मन्त्रोद्धार: तृतीयेऽभूदङ्गान्यावृतिदेवता: ।
पूजाक्रमं च यन्त्राणि तथैव रिपुनिग्रहम् ॥२॥
कीलप्रयोगान्विजयं समरेषु महीभृताम् ।
रक्षां पुरगजाश्वानां राज(ज्य)रक्षां च वै क्रमात् ॥३॥
आद्यन्तद्वयमध्यस्थै: षड्भि: कुर्यात् षड़ङ्गकम् ।
रन्ध्राज्ञामुखकण्ठेषु हृन्नाभ्याधारपद्द्वये(१) ॥४॥
न्यसेन्मन्त्रार्णनवकं मातृकान्यासपूर्वकम् ।
तत: शक्तीरावृतिस्था ध्यानं च शृणु पार्वति ! ॥५॥

---

### अथ दशमं पटलम् ।

पूर्वस्मिन्नवमे पटले चतुर्थ्या नित्यक्लिन्नानित्याया विद्यामुपदिश्यानन्तरं पञ्चम्या भेरुण्डानित्याया विधानमुपदिशति । अथ—षोड़शेत्यादिना तन्मयइत्यन्तेन स्लोकशतरूपेण दशमेन पटलेन । तत्र—अथ षोड़शेत्यादिभि: क्रमादित्यन्तैस्त्रिभि: स्लोकै: पटलार्थानुद्दिशति । तत्र—कीलप्रयोगान् त्) साध्यनक्षत्रवृक्षादिकीलकस्थापनेन वैरिनिग्रहविशेषान्(त्) ॥१॥२॥३॥

आद्यन्त·इत्यादिना पार्वतीत्यन्तेन स्लोकद्वयेन न्यासजा(ता)लादिकमुपदिशति । तत्र—आद्यन्तद्वयमध्यस्थै:—आद्यमेकमक्षरं अन्ततोद्वयं च हित्वाऽवशिष्टैर्वर्णै: षड़ङ्गानि कुर्यादित्यर्थ: । रन्ध्रं—ब्रह्मरन्ध्रम् । आज्ञा--भ्रुवोर्मध्यम् । पद्द्वये—पादद्वये अक्षरद्वयम् ॥४॥ मातृकान्यासपूर्वकं—उपरिष्टाद्वक्ष्यमाणमातृकान्यासपुर:सरमित्यर्थ: ॥५॥

---

(१) न्नाभ्याधारयोर्द्वये इति सी० पु० पा० ।

ब्राह्म्यावृत्तौ तु ब्राह्म्याद्या युगशक्तीस्तु पूजयेत्(१) ॥
तदन्तरष्टपत्रेषु विजयां विमलां शुभाम् ॥६॥
विश्वां विभूतिं विनतां विविधां विरतां (२)क्रमात् ।
तदन्तरष्टकोणेषु(३) कमलां कामिनीं तथा ॥७॥
किरातां तीतिंसहितां कुट्टनीं कुलसुन्दरीम् ।
कल्याणीं कालकोलां च पूजयेदुक्तयोगतः ॥८॥
डाकिनीं राकिनीं तद्वल्लाकिनीं काकिनीं तथा ।
साकिनीं लाकिनीं(४) षट्सु कोणेषु परितोऽर्चयेत् ॥९॥
इच्छाज्ञानक्रियाशक्तीरर्चयेदन्तरावृतौ ।
अष्टकोणान्तरालेषु पूजयेदायुधाष्टकम् ॥१०॥
चतुरस्रद्वयं कृत्वा दिक्षु द्वारसमन्वितम् ।
तदन्तरष्टपत्राब्जं वृत्तयुग्ममथान्तरा ॥११॥

---

(ब्राह्म्ये)त्यादिभिरष्टकमित्यन्तैः पञ्चभिः श्लोकैरावरणशक्तीरुपदिशति— तत्र युगशक्तीः—कृतयुगशक्तिः त्रेतायुगशक्तिः द्वापरयुगशक्तिः कलियुगशक्तिरित्येताः । अत्र—ब्राह्म्याद्यष्टशक्तीः पश्चिमादिदिक्षु स्थितेषु द्वारेषु देवीदक्षिणभागादिपार्श्वयोः, पार्श्वयोश्च कृतयुगादिशक्तीः वाय्वादिकोणेषु प्रादक्षिण्येनेत्यर्थः॥६॥७॥ उक्तयोगतः—बीजद्वयसमाक्षरीमध्ये तत्तन्नामयोजनप्रादक्षिण्यादियोगतः । सर्वत्र परिवारशक्तीनां विशेषानुक्तौ सामान्योक्तं बीजद्वयमादावन्ते समाक्षरीं योजयेदिति सम्प्रदायः॥८॥ तथा—नैरृत्यादिगादि ॥९॥१०॥

चतुरस्रद्वयमित्यादिभिरावृतामित्यन्तैस्त्रिभिः श्लोकैः देव्या नित्यसपर्याचक्रमुपदिशति। तत्र अष्टास्रं भूपुरद्वन्द्वात् । एतदुक्तं भवति—प्राक्प्रत्यक् सूत्रं कृत्वा तस्य सूत्रस्य मानं दशधा विभज्य तेषु पूर्वाग्रात्तृतीयांशावसाने पश्चिमाग्राच्च तन्मानेन चिह्नं(५) कृत्वा तस्य सूत्रस्य पूर्वाग्रमवष्टभ्य तयोः पश्चिमचिह्नमानेन तत्पश्चिमा-

---

(१) सञ्जयेत् इति सो० पु० पा० ।
(२) विविधाविनतामिति सो पु० पा० ।
(३) रष्टपत्रेषु इति मू० पु० पा ।
(४) हाकिनीमिति मू० पु० पा० ।
(५) पश्चिमाग्राच्छतयोजनेन च्छिन्नं कृत्वेति वं० पु० पा० ।

द्वितीयाद्यैस्त्रिभिर्बीजैः षष्ठेन च समीरितम् ।
निग्रहार्थमथान्यैस्तु(१) त्रिभिरन्त्यद्वयेन च ॥२४॥
षट्कोणं वृत्तयुग्मं च कृत्वा तन्मध्यतोलिखेत् ।
द्वितीयार्णं साध्ययुतं कोणेष्वन्यत्त्रयं लिखेत् ॥२५॥
अधरेषु(२) समायानि तानि लेख्यानि सर्वदा ।
वृत्तयोरन्तरा साध्यसमेतैः पवनार्णकैः ॥२६॥
संवेष्ट्य तानि† संजप्य रिपोरष्टमराशिगे ।
श्मशाने स्थापयेत्तत्र लग्ने विद्वेषणं भवेत् ॥२७॥
निम्बपत्ररसे पिष्टा(३) श्मशानाङ्गारलेखनात् ।
पृषदाखुत्वचि च वतत्सहस्रद्वयजायत (?) ॥२८॥
द्वीपिवक्त्रत्वचि लिखेत्तद्यन्त्रं गोमुखत्वचि ।
समालिख्य स्वसंज्ञां तु पूर्वस्मिन्नुत्तरे रिपोः ॥२९॥

---

द्वितीयाद्यैरित्यादिना श्लोकेन विद्याया निग्रहानुग्रहयोर्द्व्याक्षराणि विभजति। तत्र अथान्यैस्तु त्रिभिः अन्त्यद्वयेन च— शान्तिकं कुर्यादिति शेषः ॥२४॥

षट्कोणमित्यादिभिर्यममित्यन्तैरेकादशभिः श्लोकैर्विद्याया द्वितीयाक्षरादि- प्रधानं यन्त्रं, तेन यन्त्रेण विद्वेषणं वादविजय उच्चाटनं मारणं चेति चतुरः प्रयोगा- नुपदिशति। तत्र द्वितीयार्णं—क्रौंकारः। अन्यच्च त्रयं—मन्त्रस्य तृतीयचतुर्थ- षष्ठाक्षराणि त्रीणि ॥२५॥ अधरेषु समायानि(४) षट्कोणेषु अधःस्थेषु त्रिषु तान्यक्ष- राणि विसर्जनीयसहितान्यालिखेदित्यर्थः। तेन उपरितनानां विन्दुयुक्तत्वमुक्त मेव। प्रादक्षिण्येन पवनाक्षरदशकलेखनानन्तरं साध्याक्षरलेखनं कुर्यात् ॥२६॥ तानि—द्वितीयतृतीयचतुर्थषष्ठाक्षराणि चत्वारि। तत्र—अष्टमलग्नोदये ॥२७॥ पृषत्—बिडालः। आखुः—मूषकः। (जायते इत्यन्तेन विद्वेषणप्रयोगक-

---

(१) निग्रहाद्यमथोन्यैस्तु इति मू० पु० पा०। (२) अन्तरेषु इति मू० पु० पा०।

(३) पिष्ट श्मशाना इति मू० पु० पा०

(४) समायान्तानि इति वं० पु० पा०। समायातानि इति सो० पु० पा०।

† संवेष्टितानि इति मू पु० पा ।

उत्तराधरमाधाय शिलाधः सन्ध्ययोर्जपेत् ।
जपित्वा प्रोक्तसङ्ख्यं च जयेत्तं प्रतिवादिनम्(१) ॥३०॥
एतन्मुखावलोकेन प्रतिवादी हतोद्यमः ।
निरुत्तरः पलायेत जितोऽस्मीति वदेत्तु वा ॥३१॥
हरितालेन घृष्टेन निशारसयुतेन तु ।
विलिखेद्वा(द)रविजये(द्यु) युक्तमुक्तमेण वै ॥३२॥
रुरुचर्मणि(रक्तेन) तद्रक्तलिखितं तद्रिपोर्गृहे ।
प्रोक्तकाले खनेदुक्तक्रमपूजाजपान्वितः ॥३३॥
उच्चाटयेद्रिपुं मासान्नियतं यन्त्रवैभवात् ।
नृचर्मणि च तद्रक्तलिखितं तच्छ्मशानके ॥३४॥
पूजाजपक्रमोपेतं निखनेदुक्तकालतः ।
मासेन याति वैरी तु दाहज्वरयुतो यमम् ॥३५॥
तृतीयं मध्यतः कृत्वा त्वितरान् परितो लिखेत् ।
साध्यर्क्षयोनिस्त्वचितन्मधूच्छिष्टेन पीडितम् ॥३६॥
श्मशानभस्मलिखितं निक्षिप्तं नष्टकूपके ।
प्रोक्तकालसमोपेतं(२) नाशयेत्सलिले रिपुम् ॥३७॥

---

थनम् ॥२८॥ तद्यन्त्रं—पूर्वं विद्वेषणस्योक्तं यन्त्रम् । द्वीपिवक्त्रत्वचि गोमुखत्वचि च । लेखनद्रव्यमुपरिष्टाद्वक्ष्यमाणं हरित्तालम् । पूर्वस्मिन्—व्याघ्रमुखचर्मणि ॥२९॥ उत्तरे—गोमुखचर्मणि—*उत्तराधरं स्वसंज्ञोपेतं चर्म—उत्तरस्थं रिपुसंज्ञोपेतं (चर्म) अधःस्थितं च । सन्ध्ययोः—प्रातस्तनसायन्तन्योः ॥३०॥३१॥ उक्तक्रमेण वै वादविजये स्तम्भनप्रोक्तपार्थिवदशाक्षरैर्वेष्टयेत् ॥३१॥३३॥३४॥ उक्तकालतः—प्राग्वदष्टमे राशावित्यर्थः ॥३५॥

तृतीयमित्यादिभिर्वैभवात् इत्यन्तैरेकादशभिः श्लोकैर्विद्यायां तृतीयाक्षरादि-

---

(१) जयेत्तान्प्रतिवादिन इति मू० पु० पा० । * नतु इति टी० पु० पा० अधिकः पाठः ।
(२) प्रोक्तक्रमसमोपेतं मू० पु० पा० ।

अष्टास्रं भूपुरद्वन्द्वात्तच्च वृत्तसमन्वितम् ।
तदन्तस्तादृशं कुर्यात् षट्कोणं वा तु विग्रहम् ॥१२॥
तदन्तस्तादृशीं कुर्याद्योनिं तन्मध्यतोयजेत् ।
भेरुण्डां पञ्चमीं नित्यामुक्तशक्तिभिरावृताम् ॥१३॥
अर्घ्यं षडङ्गमूलाभ्यां संसाध्य प्राङ्मुखो यजेत्(१) ।
बलिं च षोड़शार्णेन दद्यादाद्यन्तयोः क्रमात् ॥१४॥
अथ ध्यानं प्रवक्ष्यामि देव्याः सर्वार्थसिद्धिदम् ।
तदावृत्तिस्थशक्तीनां क्रमेण शृणु पार्वति ! ॥१५॥
तप्तकाञ्चनसङ्काशदेहां नेत्रत्रयान्विताम् ।
चारुस्मिताञ्चितमुखीं दिव्यालङ्कारभूषिताम् ॥१६॥

---

ग्रमवष्टभ्य तयोः पूर्वचिह्नमानेन च भ्रमणात् दक्षिणोत्तरयोः पार्श्वयोः मत्स्यद्वयं निष्पाद्य तन्मत्स्यद्वयमध्यावष्टम्भेन दक्षिणोत्तरं सूत्रमास्फाल्य पश्चात्तन्मध्यहंसपदमारभ्याभीष्टमानेन चतुर्षु पार्श्वसूत्रेषु चिह्नानि कृत्वा तत्तच्चिह्नमवष्टभ्य मध्यहंसपदावधिकमानेन चतुर्षु कोणेषु मत्स्यान्विधाय तेषु मत्स्यान्मत्स्यमिति क्रमेण सूत्रचतुष्टयमास्फालयेत् । एवं कृते चतुष्कोष्ठोपेतं समचतुरस्रं भवति । तत्र मध्यहंसपदमध्यमवष्टभ्य चतुरस्रकोणमानेन वहिर्भ्रमेण वृत्तं कृत्वा मध्यसूत्रद्वयाग्रचतुष्टयं तद्वृत्तावधि विकास्य प्रागग्राद्दक्षिणाग्रं दक्षिणाग्रात्पश्चिमाग्रं पश्चिमाग्रादुत्तराग्रमुत्तराग्रात्प्रागग्रं च सूत्रचतुष्टयमास्फालयेत् । एवं कृते चतुरस्रद्वयेनाष्टसु दिक्षु अष्टकोणानि सम्भवन्तीति । एवं सर्वत्राष्टकोणनिर्माणक्रमः । तादृशं—वृत्तसहितम्॥११॥१२॥ तादृशीं—वृत्तसहिताम् । चक्रविरचनाक्रमो यथा—चतुर्दिक्षु द्वारयुक्तं चतुरस्रद्वयं यथामानं कृत्वा तदन्तर्वृत्तं विधाय तदन्तरष्टदलपद्मं कृत्वा तदन्तर्यथामानमष्टास्रं कृत्वा तदन्तर्वृत्तं तदन्तः प्राग्वत् षट्कोणं कृत्वा तदन्तर्वृत्तसहितां समत्रिरेखां योनिं निष्पाद्य तत्र देवीमुक्तक्रमेण पूजयेदिति ॥१३॥

अर्घ्यमित्यादिना श्लोकेनार्घ्यकल्पनं बलिदानादिकं चोपदिशति । तत्राद्यन्तयोरपि षोड़शार्णेनैव बलिं दद्यादित्यर्थः । क्रमा—इलिद्रव्यं मुद्रासहितम् ॥१४॥

अथ ध्यानं इत्यादिभिः सदा इत्यन्तैः पञ्चभिः श्लोकैः सपरिवाराया देव्या

---

(१) भवेत् इति मू० पु० पा०

ताटङ्कहारकेयूररत्नवस्त्र(१)कमण्डिताम् ।
रसनानूपुरोर्म्यादिभूषणैरतिसुन्दरीम् ॥१७॥
पाशाङ्कुशौ चर्मखड्गौ गदावज्रधनुःशरान् ।
करैर्दधानामासीनां पूजायामन्यदा स्थिताम् ॥१८॥
शक्तीश्च तत्समाकारतेजोहेतिभिरन्विताः ।
पूजयेत्तद्वदभितः स्मितसौम्यमुखः सदा ॥१९॥
एवं देवीमावृतिभिरावृतामर्चयेत्तथा ।
बलिमाद्यन्तयोर्दद्यात् पूर्वोक्तविधिना युतम् ॥२०॥
स्नातो मौनी पयोभक्षः प्रजपेन्नवलक्षकम् ।
तद्दशांशं हुनेदग्नौ त्रिमध्वक्तैः कुशेशयैः ॥२१॥
तावच्च तर्पये(२)त्तोयैरिन्दुचन्दनवासितैः ।
अर्चयेन्नित्यशो देवीं सहस्रं प्रजपेदपि ॥२२॥
ततः स्वगुरुणोद्दिष्टप्रयोगान्विधिना चरेत् ।
अन्यथा निष्फलं भूयात् प्रत्युतैनं निहन्ति च ॥२३॥

---

नित्यसपर्याध्यानमुपदिशति। तत्र वामोर्ध्वहस्तादि दक्षिणाधोहस्तान्तं वामादिदक्षिणक्रमेणायुधानि कल्पयेत् ॥१५॥१६॥१७॥ अन्यदा—प्रयोगेषु ॥१८॥ तद्वत्—पूर्वोक्तवत् ॥१९॥

एवमित्यादिना श्लोकेन पूजानिगमनमुपदिशति। तत्र तथेति प्रादक्षिण्यं बीजद्वय सप्ताक्षरीसमेतत्वं चोच्यते। पूर्वोक्तविधिनेति—अत्र व्यञ्जनादिकं कथयति ॥२०॥

स्नात इत्यादिभिः निहन्ति चेत्यन्तैस्त्रिभिः श्लोकैर्विद्यासाधनप्रकारं तद्विनियोगक्रममन्यथा क्रमकरणे प्रत्यवायं चोपदिशति। तत्र नवलक्षकमिति विशेषविधानेन केवलमक्षरसङ्ख्या लक्षमित्यर्थः ॥२१॥२२॥ प्रत्युत न केवलं नैष्फल्यं स्वविनाशमपीत्यर्थः ॥२३॥

---

(१) रत्नकनकमण्डितामिति सी पु० पा०। (२) तर्पनं इति सू० पु० पा०।

तद्देव वह्निमूलेन पिष्टेन मनुजासृजा।
लिखितं गोत्वचि क्षिप्तं चुल्ल्यामुपरि वह्निना ॥३८॥
ज्वलितेनानिशं मासादग्निनाऽग्नौ पतेद्रिपुः।
तृतीयेन तु मध्येन वेष्टितैरितरैरपि ॥३९॥
उलूककाकपक्षाभ्यां प्रथमोक्तेन संलिखेत्।
गर्द्दभत्वचि तत् खात्वा कुण्डमध्ये तदूर्ध्वतः ॥४०॥
साध्यवृक्षेन्धने वह्नौ बीजैरुन्मत्तसम्भवैः।
कद्रु तैलप्लुतैर्होमान्मत्तोऽरिर्म्रियते(५) ध्रुवम् ॥४१॥
साध्यचर्म्मवृक्षकीलं तु प्रोक्तयन्त्रसमन्वितम्।
खरस्नायुभिराबद्धं खातं वैरिपुरे निशि ॥४२॥
राशौ तदष्टमे मासात्तत्पुरं पितृकाननम्।
काकोलूकबकश्येनकङ्कतित्तिरिपादयोः ॥४३॥
विलिख्य यन्त्राण्युक्तानि प्रेतचीरे निबध्य तत्।
खनेन्मङ्गलवारे तु प्रोक्तकाले चतुष्पथे ॥४४॥
त्रिसप्ताहाद्व्रजेद्वैरी स्यादुन्मत्तो दिशो दश।
तान्येव तत्तच्चर्मस्थं तदालयभुवि स्थितम् ॥४५॥
नाशयेद्गजमर्त्याश्वगोखरोष्ट्राजसैरिभान्।
सप्ताहात्तद्व(द्ध)यान्मासा (?) नियतं यन्त्रवैभवात् ॥४६॥

---

प्रधानयन्त्र विधानं तत्प्रयोगांस्त्रयोदश चोपदिशति। तत्र इतरान्—द्वितीय-चतुर्थषष्ठान् विलिखेत्। साध्यनक्षत्रयोनेः—प्राग्वत् उन्मत्तः स्यादित्यन्वयः। दिशोदश व्रजेदित्यन्वयः। तान्येव यन्त्राणीतिशेषः ॥३६॥३७॥३८॥३९॥४०॥४१॥ ॥४२॥४३॥४४॥४५॥ सैरिभान्—महिषान्। अस्मिन् प्रकरणे यन्त्रनिर्माणं सुकरम् ॥४६॥

---

(५) होमादरातिर्म्रियते इति म० पु० पा०।

तच्छान्तिं शृणु देवेशि ! यन्त्रध्यानाभिषेकतः ।
तन्मन्त्रवर्णैर्यन्त्रस्थैश्चिन्तामन्त्रार्थवैभवात् ॥४७॥
पद्ममष्टदलं कृत्वा मध्ये त्वाद्यं सनामकम् ।
लिखित्वाऽष्टसु पत्रेषु चतुष्कं तद्बहिरालिखेत् ॥४८॥
बहिर्वृत्तान्तरा कुर्यान्मातृकाक्षरवेष्टनम् ।
प्रागुक्तैरेव तैर्द्रव्यैः संपूज्य विनियोगतः ॥४९॥
तत्तत्क्लेशविनाशः स्यात् तथा मन्त्रानुभावतः ।
विजयं समरे राज्ञां शृणु वैरिविनाशतः ॥५०॥
मन्त्राक्षराणि प्रत्येकं योजयेत्षोड़शस्वरैः ।
तेन मन्त्राक्षराणि स्युः सङ्ख्यया च शतं पुनः (१)॥५१॥
चत्वारिंशच्च चत्वारि तैर्यन्त्ररचनं शृणु ।
येन सर्वत्र समरे विजयोभवति ध्रुवम् ॥५२॥

---

तच्छान्तिमित्यादिभिरनुभावत इत्यन्तैरद्धर्धैस्त्रिभिः श्लोकैर्विद्यायां प्रथमपञ्चमसप्तमाष्टमनवमाक्षरैः पञ्चयन्त्राणि तैरुक्तक्रूरप्रयोगाणां शान्तिप्रयोगं चोपदिशति। तत्र ध्यानं—ध्यानपटले वक्ष्यमाणम्। अभिषेकतः—यन्त्रमध्ये निवेशितैः प्राग्वत्तदक्षरपञ्चकजपादिनेत्यर्थः॥४७॥४८॥ प्रागुक्तैः—शान्तिकर्मणि प्रोक्तसितचन्दनकर्पूरादिलेखनद्रव्यसितप्रसूनाद्यैः। विनियोगतः—साधारणसेकादितः। एतदुक्तं भवति—यथामानमष्टदलं पद्मं तद्बहिर्वृत्तद्वयं च विधाय तत्कर्णिकामध्ये प्रथमाक्षरं ससाध्यमालिख्य बहिरग्न्यादिप्रादक्षिण्येनाष्टसु दलेषु पञ्चमसप्तमाष्टमनवमाक्षराणि द्विरालिख्य बाह्यवृत्तवीथ्यामग्न्यादिप्रादक्षिण्येनादिक्षान्तां मातृकामालिखेदित्येतत् प्रथमं यन्त्रम्। एवमन्येषामपि चतुर्णामक्षराणां प्रत्यकं मध्यतोनिवेशनात् तदितरवेष्टनतश्चत्वारि सम्भूय पञ्च यन्त्राणि प्रागुक्तोपद्रवशान्तिकारीणीति ॥४९॥

विजयमित्यादिभिर्भवेदित्यन्तैरर्द्धाद्यैस्त्रयोदशभिः श्लोकैर्विद्यायां स्वरविकृताक्षराणि तत्सङ्ख्यां तैर्यन्त्रनिर्माणं तत्प्रयोगांश्चोपदिशति। तत्र—मन्त्राक्षराणि प्रत्येकमित्युक्त्या अपुनरुक्ताक्षरयोजनं नात्र विवक्षितम् ॥५०॥५१॥५२॥

---

(१) पुरा इति मो० पु० पा०

प्राक्प्रत्यग्दक्षिणोदक् च कुर्याद्रेखास्त्रयोदश ।<br>
तेन तावन्ति कोष्ठानि सम्भवन्ति समन्ततः ॥५३॥<br>
कृत्वाऽष्टास्रं ततो बाह्ये वृत्तयुग्मं ततोलिखेत् ।<br>
अक्षराणि शिवाद्यन्तु निर्ऋत्यन्तमनुक्रमात् ॥५४॥<br>
तत्र मन्त्रार्णकोष्ठेषु नवस्वाख्यां समालिखेत् ।<br>
बहिरष्टसु कोणेषु द्वितीयार्णादि सँल्लिखेत् ॥५५॥<br>
अन्तरालेषु विलिखेदाद्यं वृत्तद्वयान्तरा(न्) ।<br>
तान्येव मातृकाख्याभिर्विदर्भितमथो न्यसेत्(१) ॥५६॥<br>
एतत् पटे समालिख्य ध्वजीकृत्य रणोद्यमे ।<br>
दर्शयेत्तेन रिपवः पलायन्ते दिशो दश ॥५७॥

---

तावन्ति—यावदक्षरसंख्यानि चतुश्चत्वारिंशदधिकशतसंख्यानीत्यर्थः । समन्ततः—समचतुरस्ररूपतः ॥ ५३ ॥ अष्टास्रं—प्राग्वत् ॥५४॥५५॥ तानि--विद्याक्षराणि । नवमातृकाख्याभिः—मातृकाक्षरसाध्याक्षरैः । विदर्भितं—द्व्यन्तरीकृतम् । लिखेत् । प्रागित्यादिभिर्न्यसेदित्यन्तैश्चतुर्भिः श्लोकैरेतदुक्तं भवति--समान्तरालानि प्राक्प्रत्यगग्राणि दक्षिणोत्तराग्राणि च त्रयोदशकोणसूत्राण्यास्फाल्य तद्बहिः कोणस्पृष्टासृष्टिकया भ्रमेण वृत्तं कृत्वा तद्बहिः प्राग्वच्चतुरस्रं कृत्वा तद्बहिरेकाङ्गुलान्तरालं वृत्तद्वयं विधाय तत्कोष्ठेषु शिवादिनिर्ऋत्यन्तं तानि स्वरविकृतान्यक्षराणि प्रतिपङ्क्ति उत्तरारम्भं दक्षिणावसानं च समालिख्य तत्र मन्त्राक्षरनवकोपेतनवकोष्ठेषु साध्यनाम विलिख्य तद्बहिरग्न्यादिप्रादक्षिण्येनाष्टसु कोणेषु विद्याद्वितीयाक्षरादीन्यष्टाक्षराणि विलिख्य प्रथमाक्षरं तदष्टकोणान्तरालेष्वष्टस्वालिख्य बहिर्वृत्तवीथ्यां मातृकाक्षरसाध्याक्षरैर्विदर्भितानि विद्याक्षराण्यालिखेदिति । यस्य (य)मन्त्रस्य वर्णस्य स्वरयोजने कृते यस्मिन् स्वरे योजिते मन्त्राक्षरं भवति तदक्षरं यस्मिन् कोष्ठे पततित तत्र साध्यं लिखेत् । एवं मन्त्रस्थनववर्णाश्रयकोष्ठेषु । अत्र नवस्वित्युक्तेर्मन्त्रस्थद्वितीयवर्णस्य ओँकारयोजने मन्त्रस्थचतुर्थवर्णस्य ॐकार-

---

(१) विदर्भितद्वयोन्यन्यसेत् इति मू॰ पु॰ पा॰ । मथोलिखेत् इति सो॰ पु॰ पा॰ ।

प्रणमेयुर्निजां लक्ष्मीं प्राभृतीकृत्य तत्क्षणात् ।
तदेव वैरिशिबिरे निखनेदुदये शनेः ॥५८॥
सदास्त्वन्योन्यकलहान्नाशमेति सुनिश्चितम् ।
तदेव स्वपुरे मध्ये स्थापयेद्धिषणोदये ॥५९॥
पराभिचारकृत्यादिदुरितानि न तत्र वै ।
संस्पृशन्ति पुरान्तस्थान्यन्त्रशक्त्यनुभावतः ॥६०॥
तद्यन्त्रं ताम्रपट्टे तु विलिख्याऽभ्यर्च्य तत् पुनः ।
स्थापयेत् साध्यभूभर्तुरेकादशसमुद्यमे ॥६१॥
गजवाजिगृहेष्वस्य(स्वस्य)भाण्डागारेऽस्व(स्व)मण्डपे ।
अन्तःपुरे नगर्यास्तु दिक्षु मध्ये च तत् खनेत् ॥६२॥
यत्र संस्थापितं यन्त्रं तत्रार्चा नित्यशोन्तपः ।
कारयेत्तेन तत् सर्वं शाश्वतं वृद्धये भवेत् ॥६३॥
बीजानि तानि प्रत्येकमष्टपत्रसरोरुहे ।
मध्ये दलेषु परितो लिखेदेकैकशः क्रमात् ॥६४॥
बहिर्मातृकयाऽऽवेष्ट्य सञ्जप्याभ्यर्च्य नित्यशः ।
स्वजन्मर्क्षादिनवके कुर्याच्छान्तिमनुक्रमात् ॥६५॥
यन्नवत्वे भवेदस्य ग्रहतो राजतोऽथ(पि) वा ।
रोगतो वैरितो वाऽपि तस्मिन् तत्तेन शामयेत् ॥६६॥

---

योजने मन्त्रवर्णत्वपर्यवसानेपि तत्र न साध्यलिखनमिति ॥५६॥५७॥ तदेव—तद्यन्त्रमेव। शनेरुदये—शनिस्थितराश्युदयकाले ॥५८॥ तदेव—यन्त्रं। धिषणोदये—धिषणो बृहस्पतिस्तस्योदयः- प्राग्वत् ॥५९॥ पुरान्तःस्थान्—जनानिति-शेषः ॥६०॥ तद्यन्त्रं—पूर्वोक्तम्। एकादशसमुद्यमे—साध्यस्य जन्मलग्नराशेश्चन्द्र-लग्नराशेर्वा एकादशे राशौ लग्नगते ॥६१॥ दिक्षु मध्ये चेति गजगृहादि-सामान्यम् ॥६२॥ तत्सर्वं—प्रोक्तगजादिकम्। वृद्धये—वृद्ध्यै भवेदित्यर्थः ॥६३॥

मन्त्रार्णोप्यथ भस्मस्थं यन्त्रं कृत्वा तु तेन तु।
रक्षां कुर्वीत सर्वेषां सर्वापत्तारणाय वै ॥६७॥
तत्तद्यन्त्रं तद्दिनेषु स्नानपानासनादिना।
ग्रहजं वैरिजं दुःखं शाम्यत्येव न संशयः ॥६८॥
क्रमेण नवयन्त्राणि नवग्रहमयानि तु।
तस्मात्तत्तद्ग्रहक्लेशं तत्तद्यन्त्रं (न) (च) शामयेत् ॥६९॥
सङ्काशते (सेकासन) विभूत्यादिप्रयोगैरुदितैः क्रमात्।
विविधानि विषाण्येभिर्यन्त्रैर्जलनिवे(शितैः)शनैः ॥७०॥
नाशयेत्पान(सि)काभ्यां धारणेनार्चनेन च।
एभिस्तु नवभिर्यन्त्रैर्य(त्तत्)न्न साध्यं न कुत्रचित् ॥७१॥
देशे वा नगरे ग्रामे मङ्गले पर्वतादिके(१)।
प्रथमं मध्यतः खात्वा प्रागादिषु ततोऽष्टसु ॥७२॥
द्वितीयादीनि तु खनेत् तत्र लक्ष्मीरिति स्थिरा।
धर्मार्थौ चातिसंलब्धौ भवेतामुक्तयोगतः ॥७३॥
द्वितीयं मध्यतः खात्वा त्वितराण्यभितः खनेत्।
धार्मिकास्तेन तत्रस्थाः प्रसीदन्ति च देवताः ॥७४॥
सप्तस्वन्येषु च तथा कान्त्यारोग्ययशोधनैः।
पुत्रज्ञानधनैश्चाढ्याः प्रभवन्ति च नित्यशः ॥७५॥
दृष्टेषु घोरैः फणिभिः नवभिर्नवरन्ध्रगैः।
ध्यानैर्मृतोऽपि माहात्म्यान्मन्त्रस्योत्तिष्ठति ध्रुवम् ॥७६॥

---

बीजानीत्यादिभिस्तत्सिद्धये इत्यन्तैः षोड़शभिः श्लोकैर्विद्याक्षरैर्नवभिर्नवयन्त्रविरचनं तद्दिनियोगांस्तत्फलानि चोपदिशति। तत्र स्वजन्मर्क्षं—जन्मत्रयं

---

(१) खर्वटादिके इति मू० पु० पा०।

अश्विन्यादिषु ऋक्षेषु नवानि नवसु क्रमात् ।
विलिख्य देवीं तत्रस्थां नवाकारां नवस्वपि ॥७७॥
पूजयेदुपचारैस्ता(१) नित्यशोभक्तिसंयुतः ।
प्रागुक्तपरिवारादिरहितां पूजयन्नपि ॥७८॥
सिद्धिमेति नरो भक्त्या परया चेत्समन्वितः ।
स्त्रीबालवृद्धाशक्तानां गतिरेषा च (स्व)सिद्धये ॥७९॥
भेरुण्डा कर्णयोर्जप्याद्विषार्तस्य तदैव सः ।
निर्विषो जायतेऽचिन्त्या(२) मन्त्राणां शक्तयः शिवे ! ॥८०॥
त्रैलोक्यमोहनी विद्या सर्वतो भवतास्तुता(३) ।
न कदाचित्तु सा प्रोक्ता तां मे ब्रूहि महेश्वर ! ॥८१॥
सर्वेषामेव मन्त्राणां विद्यानां च यशस्विनि ! ।
व्याप्तरूपं प्रवक्ष्यामि शृणु त्वमिदमद्भुतम् ॥८२॥
येन नारीनरनृपदेवताः सर्वजन्तवः ।
भजन्त्येनं यथा मां त्वं तत्प्रयोगबलाद्ध्रुवम् ॥८३॥
अकारादिक्षकारान्तैर्मातृकार्णैः सबिन्दुभिः ।
प्रत्येकं पुटितान् कृत्वा मन्त्रान्विद्या अथापि च(वा) ॥८४॥
विद्यया मातृकावर्णान् पुटयेन्मन्त्रतोऽपि वा ।
प्रोक्तं तद्यन्त्रनवकं कुम्भे संस्थाप्य चैतया ॥८५॥

---

नवकमित्युक्त्या एकैकनक्षत्रेण चाभिषेकोऽप्यभिहितः । एषामन्यार्थः सुगमः ॥६४॥ ६५॥६६॥६७॥६८॥६९॥७०॥७१॥७२॥७३॥७४॥७५॥७६॥७७॥७८॥७९॥

भेरुण्डामित्यादिना श्लोकेन विषापहरणमुपदिशति—तत्राऽर्थः सुगमः ॥८०॥

---

(१) स्तैः इति मू० पु० पा० । (२) जायते चित्रा इति मू० पु० पा० ।

३ सर्वतोप्रभवास्तुता इति सो० पु० पा० ।

जपतर्पणहोमार्चासिद्धया सेक ईरितः(१)।
कुचन्दनैर्गैरिकैर्वा दरदैश्चन्दनैस्तथा ॥८६॥
सिन्दूरैस्तण्डुलैर्मुद्गैस्तिलैः कृष्णैः सितैरपि।
नवानां नवभिः कुर्यादेभिर्यन्त्रप्रकल्पनम् ॥८७॥
चैत्रादिविषुवद्द्वन्द्वे तथैवायनयोर्द्वयोः।
(२)रक्षोत्तराद्वयोर्जन्मत्रितये वर्षयोः क्रमात् ॥८८॥
राजा वा राजमहिषी सेनापत्याधिपोऽथवा(३)।
अन्योवाश(भ)क्तिशीलाढ्यः कारयेदभिषेचनम् ॥८९॥
दक्षिणामभिषेके तु दद्याद्भूरि स्वशक्तितः।
वित्तशाठ्यं न कुर्वीत यदि कुर्वीत लोभतः ॥९०॥
(४)संदहेत्येपावकवत्पुत्रलक्ष्मीकलत्रकैः(?)।
तस्मात्सर्वंत्र तन्त्रेऽस्मिन् वित्तशाठ्यं न चिन्तयेत् ॥९१॥
अभिषेकफलं देवि! शृणु वक्ष्ये यथाविधि।
सोमसूर्याग्निरूपेण जलेनेप्सितमन्त्रतः ॥९२॥

---

त्रैलोक्येत्यादिभिरपिवा इत्यन्तैरध्यर्द्धैश्चतुर्भिः श्लोकैस्त्रैलोक्यमोहनविद्यायोगमुपदिशति। तत्र व्यासरूपं—अशेषमन्त्रसाधारणत्वात् ॥८१॥८२॥एनं—साधकम्। एतद्विद्याभजनपरं सर्वे आवासिव भजन्तीत्यर्थः॥८३॥८४॥विद्याया मातृकावर्णान्पुटयेन्मन्त्रतोपि वा—मातृकाक्षराणि प्रत्येकं विद्यया मन्त्रेण वा संपुटीकुर्यादित्यर्थः।

प्रोक्तमित्यादिना प्रकल्पनमित्यन्तेनार्द्धाधेन श्लोकद्वयेन त्रैलोक्यमोहनविद्यया अभिषेकं नवयन्त्राणां विलेखनद्रव्याणि यथाक्रमं नव चोपदिशति। तत्र एतया—त्रैलोक्यमोहनोविद्यया ॥८५॥८६॥ नवानां यन्त्रप्रकल्पनमिति—स्वातन्त्र्यात् ॥८७॥

चैत्रेत्यादिभिश्चिन्तयेदित्यन्तैश्चतुर्भिः श्लोकैर्नवानां यन्त्राणां नवाभिषेक-

---

(१) चार्कक्रियासेक इतीरित इति मू० पु० पा०। (२) दक्षोनराख्ययो इति मू० पु० पा०। (३) तत्तदा हेत्पाकवत् इति पा० मू० पु०। (४) सेनापत्याधिकाऽतथा इति मू० पु० पा०।

जपपूजादिना सिद्धवैभवेनाभिषिक्तः ।
दुर्लक्षणसमुत्थानि तथा दुष्कर्मजानि च ॥९३॥
तद्वद्दुर्नीतिजनितान्यन्यानि दुरितानि च ।
नाशयेत्तत्क्षणाद्देवी सलिलैरिव पावकः ॥९४॥
अपुत्रोवित्तविद्यायुरारोग्यादिसमन्वितान् ।
लभते च बहून् पुत्रान् सुखी च चिरमेधते ॥९५॥
क्षेमद्रुमादियोगेषु जन्म तत् प्राक्तनाद्यतः ।
योभृशं नित्यदा विद्यात् क्लिष्टः सोऽपि श्रियैधते ॥९६॥
प्राग्जन्मसञ्चितैः पापैरपथ्यादिनिषेवणैः ।
अनीत्या वैरिविहितैरभिचारादिभिस्तु वा ॥९७॥
ये रोगाः पीड़यन्त्येनं ते विनश्यन्त्यशेषतः ।
कान्तिलक्ष्मीधनारोग्यविद्याविजयकीर्तिभिः ॥९८॥
सुचिरं जीवति ख्यातः पुत्रपौत्रादिभिर्युतः ।
नवाभिषेकं नवसु प्रोक्तेषु विधिना चरन् ॥९९॥
अपमृत्युं विजित्यास्मात् भक्तः शुद्धान्तमानसः ।
जीवन्मुक्तश्चिरं योगी भुवि जीवति मन्मथः ॥१००॥
शब्दतत्त्वमयो व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्फालनात् चित्ते तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

---

कालानभिषेकयोग्यानभिषेककर्तुर्दक्षिणाप्रदानमप्रदानेन प्रत्यवायं चोपदिशति। तत्र वित्तशाठ्यं—वित्तनिगूहनम्। अन्यत् सुगमं तत् ॥ ८८ ॥ ८९ ॥ ॥९१॥

अभिषेकफलं इत्यादिभिर्मन्मथ इत्यन्तैर्नवभिः श्लोकैरभिषेकफलमुपदिशति। तत्र—पावकः नश्येत इतिशेषः। क्षेद्रुमसोनाम नित्यदारिद्र्यकरोयोगविशेषः। नवसु कालेष्वितिशेषः। मन्मथः—शिवात्मा ॥१००॥

## इति श्री षोड़शनित्यातन्त्रेषु श्रीकादिमते दशमं पटलम् ।

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्च-
सारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां भगमालिनीनित्याविद्याविधान-
प्रकाशनपरं नवमं पटलं परिपूर्णं
परामृष्टम् ॥ १० ॥

ग्रन्थसङ्ख्या ।

दशमे पटले सन्ति यन्त्राण्येकोनविंशतिः ।
अध्यर्द्धाष्टोत्तरशतं व्याख्यानं ग्रन्थसङ्ख्यया ॥

## एकादशपटलम् ।

अथ षोडशनित्यासु या षष्ठी समुदीरिता ।
सा विद्या वह्निवासिन्याः कथिता ते नवाक्षरा ॥१॥
तदङ्गानि लिपिन्यासं ध्यानं शक्तिभिरर्चनम् ।
तत्साधनविधिं तस्याः प्रयोगान्विविधानपि ॥२॥
होमयन्त्रविभेदैश्च कथयामि शृणु प्रिये ! ।
विद्याद्वितीयबीजेन स्वरान् दीर्घान्नियोजयेत् ॥३॥
मायान्तान् षड्भिरेवाङ्गान्याचरेत् स्वकराङ्गयोः ।
नवाक्षराणि विद्याया नवरन्ध्रेषु विन्यसेत् ॥४॥
व्यापकं च समस्तेन कुर्याद्देव्यात्मसिद्धये ।
सर्वास्वपि च विद्यासु व्यापकं तत् समाचरेत् ॥५॥
तेन तत्तन्मयो भूयात्साधकस्तेन सिद्धयः ।
तस्याचिरेण देवानां प्रसादात् सम्भवन्ति च ॥६॥

---

अथ एकादशपटलं प्रारभ्यते ।

पूर्वस्मिन् दशमे पटले पञ्चम्या भेरुण्डानित्याविद्याया विधानमुपदिश्यानन्तरं षष्ठ्या वह्निवासिनोनित्याविद्याया विधानमुपदिशति । अथ षोडशेत्यादि भुवि इत्यन्तेन श्लोकशतरूपिणैकादशेन पटलेन । अथ षोड़शेत्यादिना प्रियेत्यन्तेनार्द्धाधिकेन श्लोकद्वयेन पटलार्थानुद्दिशति । तत्र कथिता—तृतीये पटले । अन्यत् सुगमम् ॥१॥२॥

विद्येत्यादिभिः समीरित इत्यन्तैरर्द्धाद्यैः पञ्चभिः श्लोकैश्चतुर्विधन्यासादिकमुपदिशति । तत्र स्वरान् दीर्घान्नियोजयेत् । मायान्तान्—सर्वविषण्ढान् आ ई ऊ (ऐ) औ (औ) अः इत्येतान् षट्दीर्घस्वरान् कथयति ॥३॥नवरन्ध्रेषु—दृक्श्रोत्रनासाद्वन्द्वेषु । षट्वर्णान् आस्यमेहनपायुषु त्रिषु त्रयं इतिक्रमेण नवरन्ध्रेषु

मातृकायाः षडङ्गं च मातृकान्यासमेव च ।
सर्वासां प्रथमं कृत्वा पश्चात्तत्रोदितं न्यसेत् ॥७॥
ललितायास्तु वर्गैस्तत्प्रोक्तमष्टाभिरेव च ।
तेन तस्यास्तु लिपिशो न्यासन्नैव(?) समीरितम् ॥८॥
तप्तकाञ्चनसङ्काशां नवयौवनसुन्दरीम् ।
चारुस्मेरमुखाम्भोजां विसलन्नयनत्रयाम् ॥९॥
अष्टाभिर्बाहुभिर्युक्तां माणिक्याभरणोज्ज्वलाम् ।
पद्मरागकिरीटांशुसम्भेदारुणिताम्बराम् ॥१०॥
पीतकौशेयवसनां रत्नमञ्जीरमेखलाम् ।
रत्नमौक्तिकसंभिन्नस्तवकाभरणोज्ज्वलाम्(१) ॥११॥
रक्ताब्जकम्बुपुण्ड्रेक्षुचापपूर्णेन्दुमण्डलाम्(२) ।
दधानां बाहुभिर्वामैः कह्लारं हेमशृङ्गकम् ॥१२॥
पुष्पेषु मातुलिङ्गं(३) च दधानां दक्षिणैः करैः ।
स्वसमानाभिरभितः शक्तिभिः परिवारिताम् ॥१३॥
एवं ध्यात्वाऽर्चयेद्वह्निवासिनीं विश्वविग्रहाम् ।
ज्वालिनीविस्फुलिङ्गिन्यौ(४) मङ्गला सुमनोहरा ॥१४॥

---

नवाक्षराणि दक्षिणपूर्वं न्यसेत् । व्यापकं प्राग्वत् ॥३॥४॥५॥६॥ मातृकायाः षडङ्गमिति । मातृकान्यासं तत्षडङ्गन्यासं च पञ्चदशे कुलसुन्दरीपटले वक्ष्यमाणत्वादिह न व्याकरोमि ॥७॥८॥

तप्तकाञ्चनेत्यादिभिर्विश्वविग्रहामित्यन्तैः पञ्चभिः श्लोकैर्देव्याः सपरिवाराया नित्यसपर्याध्यानमुपदिशति । तत्रायुधानि—ऊर्ध्वादिवामदक्षिणयोः कल्पयेत् ॥९॥१०॥११॥१२॥१३॥

---

(१) सम्भिन्नवस्त्रकाभरणे इति सू० पु० पा० ।
(२) रक्ताब्जकं च पुण्ड्रेक्षुचापं पूर्णेन्दुतण्डलमिति सू० पु० पा० ।
(३) पुष्पे च मातुलुङ्गे इति सो० पु० पा० ।　　(४) ज्वलिनीविश्वलिङ्गिन्यौ इति सू० पु० पा० ।

कनकाङ्कितवाविश्वाविविधाचेतिशक्तय: ।
अष्टकोणेषु सम्पूज्यास्तदग्रात्तु(त्सु) प्रदक्षिणम् ॥१५॥
दलेषु द्वादशस्वेता राशिशक्ती: समर्चयेत् ।
मेषां वृषाह्वयां शक्तिं मिथुनां कर्कटीमपि ॥१६॥
सिंहां कन्यां तुलां कीटां चापां च मकरामपि ।
कुम्भां मीनां यजेत्प्राग्वदग्रादारभ्य शाङ्करि ! ॥१७॥
चतुरस्रेषु द्वारेषु(१) पार्श्वयो: कोणदिक्षु च ।
अन्ययोश्च दिशो: शक्ती: प्रोक्ता दश समर्चयेत् ॥१८॥
मायासप्ताक्षरीमध्ये गतैर्नामभिरीरितै: ।
घस्मरा सर्वभक्षा (२)च विश्वासा विविधोद्भवा ॥१९॥
चित्ररूपा नि:सम्पन्ना निरातङ्का च पावनी ।
अचिन्त्यवैभवा रक्ता दशमी परिकीर्तिता ॥२०॥
बलिदेवीति सम्प्रोक्ता कुरुकुल्लाद्यविद्यया ।
यत्र नोक्ता देवता तु बलिकर्मणि तत्र ताम् ॥२१॥
सप्ताक्षर्या समोपेतां विदध्याद्बलिदेवताम् ।
वृत्तयोर्नवयोनिं तु कृत्वा तद्बहिरम्बुजम् ॥२२॥
द्वादशच्छदसंयुक्तं विदध्यात्वृत्तयुग्मकम् ।
तद्बहिश्चतुरस्रे द्वे द्वारद्वयसमन्विते(३) ॥२३॥

---

ज्वालिनीत्यादिभिर्देवतां इत्यन्तैरष्टभि: श्लोकैर्देव्या आवरणशक्तीस्तत्पूजनप्रकारं तत्तन्मन्त्रयोजनाप्रकारं चोपदिशति । तत्र कीटं—वृश्चिकमित्यर्थ:॥१४॥१५॥१६॥१७॥ कोणदिक्षु—वायव्यादिषु ॥१८॥ माया—हृल्लेखा ॥१९॥२०॥२१॥ सप्ताक्षर्या—कुरुकुल्लाद्यविद्यया ॥

वृत्तयोरित्यादिभि: चतमित्यन्तै: पञ्चभि: श्लोकै: देव्या नित्यसपर्याचक्रं तत्र

---

(१) चतुरस्रद्वारयुगे इति मू० पु० पा० ।
(२) सर्वभक्ता इति मू० पु० पा० ।
(३) समन्वितं इति मू० पु० पा० ।

पूर्वपश्चिमयोरत्र* देवीं चक्रे तथाऽर्चयेत् ।
अनुक्तेष्वङ्गमूलाभ्यामर्घ्यं संसाधयेत्तथा ॥२४॥
द्रव्यानुक्तौ होमविधौ घृतमन्नाद्यमेव च(१) ।
सङ्ख्यानुक्तौ सहस्रं स्याच्छतं वा तन्त्रचोदितम् ॥२५॥
पूजासमाप्तिरप्येवमनुक्ता प्राग्वदीरिता ।
विद्यायाः साधनं तद्वत्तन्त्रेऽस्मिन् परमेश्वरि ! ॥२६॥
अन्य(२)मन्त्रानपेक्षित्वात्पूर्णत्वं नामुना क्षतम्(३) ।
काम्यहोमविधिं वक्ष्ये शृणु वाञ्छितदायकम् ॥२७॥
शालितण्डुलमादाय प्रस्थं भाण्डे नवे क्षिपेत् ।
समानवर्णवत्साया रक्ताया गोपय(?)स्तथा ॥२८॥
द्विगुणं तत्र निक्षिप्य श्रपयेत् संस्कृतेऽनले ।
घृतेन सिक्तं सिक्थं तु(४) कृत्वा तत्ससितं करे ॥२९॥
निधाय विद्यामष्टोर्ध्वं शतं जप्त्वा हुनेत्ततः ।
एवं होमो महालक्ष्मीमावहेत्प्रतिपत्कृतः(५) ॥३०॥
शुक्रवारेष्वपि तथा वर्षान्नृपसमोभवेत् ।
पञ्चम्यां तु विशेषेण प्राग्वद्धोमं समाचरेत् ॥३१॥

---

नित्यसपर्याक्रमं चोपदिशति । तत्र चक्रनिर्माणं सुगमम् । जपहोमयोः ॥२२॥ ॥२३॥२४॥४५॥ प्राग्वत्—ललितापूजावसानवत् । तद्वत्—ललितासाधनवत् । एतदेकाक्षरादिनवाक्षरान्तानां मन्त्राणां सङ्ख्यानुक्तौ एषापि नवार्णत्वात् ललितावदित्यर्थः । अमुना—अस्मिन् तन्त्रे पूर्वापरप्रोक्ताङ्गीकारेण ॥२६॥

काम्यहोमं विशेषपूजाफलं चोपदिशति । तत्र संस्कृतेऽनले—होमार्थं विधानप्रतिष्ठिते । सिक्थकं—अन्नपिण्डम् । ससितं शर्करासहितम् ॥२७॥२८॥२९॥

---

(१) घृतमन्नाज्यमेव वा इति मू० पु० पा० ।
(२) तन्त्रान इति मू० पु० पा० ।
(४) सिक्थं सिक्थं तु इति मू० पु० ।
* पश्चिमयोस्तस्मिन् इति मू० पु० पा० ।
(३) क्षतिरिति मू० पु० पा० ।
(५) प्रतिपच्चित इति मू पु० पा० ।

तस्यां तिथौ विमध्वक्तैर्मल्लिकाद्यैः सितैर्हुतैः(१) ।
अन्नाज्याभ्यां तु नियतं हुत्वान्नाद्यो(२)भवेन्नरः ॥३२॥
यद्यद्धि वाञ्छितं वस्तु तानि सर्वाणि सर्वदा ।
घृतहोमादवाप्नोति तथैव तिलतण्डुलैः ॥३३॥
पञ्चमीषु(३) विशेषेण पूजां कुर्याद्व्रती भवेत् ।
प्रतिपत्तिथिमारभ्य पञ्चदश्यन्तमम्बिके ! ॥३४॥
कामेश्वर्यादिचित्रान्ता देव्यस्त्वेकैकविग्रहाः ।
यतस्तेन स्वस्वतिथौ तास्ता पूज्या हुतादिभिः ॥३५॥
प्रीणयेद्व्रतसङ्कल्पसमेतो भक्तिसंयुतः ।
तेनायुःश्रीधनारोग्यविद्याकीर्तिसमन्वितः ॥३६॥
जीवेद्वर्षशतं भूमौ स्वकुल्याग्रश्च तद्वली(४) ।
यत्तिथौ या समाख्याता सुता सममवाप्नुयात्(५) ॥३७॥
विद्याविधिवद्देवैताः प्रोक्ताः पञ्चदशापि च ।
सम्प्राप्य जपहोमार्चायोगतर्पणसेकतः(६) ॥३८॥

॥३०॥ तथा—प्रतिपद्धोमवत् । विशेषेण—वह्निवासिन्याः असाधारणतिथित्वात् । प्राग्वत्—प्रतिपद्धोमवत् ॥३१॥ तस्यां—पञ्चम्याम् । सितैः—पुष्पैरितिशेषः ॥३२॥ तानि सर्वाणि सर्वदा घृतहोमादवाप्नोति—घृतहोमात्सर्वाणीष्टानि वस्तूनि अवाप्नोतीत्यन्वयः ॥३३॥ व्रती भवेत्—स्वसङ्कल्पसहितः ॥३४॥

प्रतिपदित्यादिभिराचरेदित्यन्तैः पञ्चभिः श्लोकैः पञ्चदशानां नित्यानां यथाक्रमं पञ्चदशतिथिमयत्वं तत्तिथिषु तत्तद्विद्याप्राप्तिं भजनविशेषं चोपदिशति । तत्र एकैकविग्रहाः—एकैकतिथिरूपाः । व्रतसङ्कल्पः प्राग्वत् ॥३५॥३६॥ यत्तिथौ—यासु तिथिष्वित्यर्थः ३७॥३८॥ अखिलं—प्रयोगादि ।

(१) सितैर्हुनेत् इति मू० पु० पा० ।
(२) हुत्वान्नाढ्यो पु० पा० ।
(३) तु इति मू० पु० पा० ।
(४) तत्त्ववित् इति मू० पु० पा० ।
(५) सासुतासमवाप्नुयात् इतिमू० पा० पु० ।
(६) जपहोमैन पूजातर्पणसेकत इति मू० पु० पा० ।

विद्यया देवतात्मानं(१) सम्प्राप्याऽखिलमाचरेत् ।
विद्याप्राप्तिविधिं देव ! ब्रूहि सम्यक् ममाधुना ॥३९॥
आसां पञ्चदशानां च येनैताः साधकोन्मुखाः ।
शृणु वक्ष्यामि ते देवि ! विद्याप्राप्तिविधिं शुभम् ॥४०॥
येन विद्यादेवताभ्यामैक्ययोगेन सिद्ध्यति ।
तद्भावमाययोरैक्यरूपमानन्दविग्रहम् ॥४१॥
यदवाप्तुं यतन्तेऽद्याप्यनेके मुनयोऽम्बिके ! ।
कुचन्दनैः कुङ्कुमैर्वा सिन्दूरैर्गैरिकैः शुभैः ॥४२॥
विदध्याद्विपुलं चक्रं व्यक्तरेखं सुशोभनम् ।
यस्या यच्चक्रमाख्यातं नित्यपूजाविधिक्रमे ॥४३॥
तत्र कुम्भं निधायान्तर्जले सम्पूज्य देवताः ।
प्रोक्तक्रमसमोपेतं पूर्वैद्युर्गीतनृत्यकौ ॥४४॥
कृत्वोत्सवमथान्येद्युः प्राग्वदभ्यर्च्य तां तथा ।
तत्तिथौ प्राङ्मुखं शिष्टमुक्तलक्षणसंयुतम् ॥४५॥
तथाविधो गुरुः कुम्भजलैस्तमभिषेचयेत् ।
तज्जलं प्रागुदङ्मध्यदिक्तुगं सर्वसिद्धिदम् ॥४६॥
अन्यासु क्रमतोऽनिष्टान्यवाप्नोति सुनिश्चितम् ।
वह्निदाहं मृतिं रोगं दारिद्र्यं देशमोचनम् ॥४७॥
क्रमाद्वह्न्यादि वाय्वन्तं फलानि स्युरिमानि वै ।
ततोऽसौ परिधायासु शुभ्रे शुद्धे च वाससी ॥४८॥

---

विद्याप्राप्तिविधिमित्यादिभिः समीरितमित्यन्तैरष्टादशभिः श्लोकैरस्मिंस्तन्त्रे सर्वासां विद्यानां साधारणं विद्याप्राप्तिप्रकारं प्रश्नपूर्वकमुपदिशति। तत्र येन-विधिना ॥३९॥४०॥४१॥४२॥४३॥ प्रोक्तक्रमसमोपेत—मष्टत्रिंशत्कलार्चनादि ॥४४॥

---

(१) विद्याद्यादेवतात्मत्वं इति मु० पु० पा० ।

समाचम्य निजैस्त्रित्तैः समस्तैर्वा पुरोदितैः ।
अभ्यर्च्य पादयोर्नाथं पञ्चश्लोकैः स्तुवंस्त्रिशः(१) ॥४९॥
प्रणम्योत्थाय पुरतोबद्धाञ्जलिकरोभवेत् ।
ततोगुरुस्तमाहूय चक्रमध्ये निवेश्य च ॥५०॥
मनसा भावयन्नैक्यमात्मानं देवतात्मना ।
प्रोक्तक्रमेण तां देवीं विद्यारूपां महाद्युतिम् ॥५१॥
समावाह्यास्य मूर्द्धादिचिषु स्थानेषु तु क्रमात् ।
संस्थाप्य प्रोक्तरूपां तां ध्यात्वाऽभ्यर्च्य वदेन्मनुम् ॥५२॥
जीवकर्णौ त्रिशः पूर्णौ देवतात्मा समाहितः ।
ततस्तत्रैव तां विद्यां शतं जप्यात्तदात्मवान् ॥५३॥
पुनस्तदाज्ञयोत्थाय पुष्पैरभ्यर्च्य तं स्तुवन् ।
प्रणम्य विरूपासीत मूर्द्धबद्धाञ्जलिः स्तुवन्(२) ॥५४॥
आहूय क्रममाचारं प्रोक्ता सम्यक् भजेति तम् ।
आदिशेद्देशिकस्तस्माद्दिनादारभ्य सोऽपि ताम् ॥५५॥
नित्यशोजपपूजाद्यैरुपासीत शिवां गुरुम् ।
एवं पञ्चदशानां च नित्यानां क्रम ईरितः ॥५६॥
विद्याप्राप्तिविधौ देवि ! सर्वं सम्यक्समीरितम् ।
तासां नैमित्तिकं काम्यं ललितोक्तविधानतः(३) ॥५७॥

---

प्राग्वत् – नित्यक्रमेण ॥४५॥ मध्यमित्यत्र ईशानदिगुच्यते ॥४६॥४७॥४८॥४९॥५०॥५१॥५२॥५३॥५४॥५५॥ तैः पञ्चभिः श्लोकैः ॥५६॥

तासामित्यादिना श्लोकेन पञ्चदशानां नित्यानां नैमित्तिककाम्यविधानमुपदिशति । तत्र प्रतिष्ठाद्यं—तत्तन्नित्यसपर्याचक्रमूर्त्त्योः । आद्यशब्देन पूर्णाभिषेक उच्यते । पूर्णाभिषेकस्य तत्तन्नित्यसपर्याचक्रेण ॥५७॥

---

(१) स्वयंस्तुश इति मू० पु० पा० । (२) बद्धाञ्जलिं तु तम् इति मू० पु० पा० ।
(३) तत्तन्त्रोक्तविधानत इति म० पु० पा० ।

कुर्यात्प्रतिष्ठाद्यमेवं यत एतास्तु तन्मया(१) ।
आसामन्योन्यमङ्गानि पूजासु परमेश्वरि ॥५८॥
एकाङ्गित्वे स्थिताऽन्यास्तत्परिवारास्तथाविधाः ।
अन्यदा प्रोक्तरूपास्तास्तत्तत्रार्चने मताः ॥५९॥
तासां काम्यकलावाप्तिध्यानं तत्पटलोदितम् ।
एवं सर्वं समाख्यातं साधारणविधानकम् ॥६०॥
विद्यामन्त्रा इति प्रोक्तं यत्तद्भेदं वद प्रभो ! ।
शृणु देवि ! विशेषन्तु सन्दर्भे वै समेऽपि वा ॥६१॥
वर्णानां देवताभेदा द्विधाः स्युस्ते त्वशेषतः ।
त्वद्दैवत्याः स्मृता विद्या मद्दैवत्यास्तु मन्त्रकाः ॥६२॥
पुनरस्यास्तु यन्त्राणि तत्फलानि शृणु प्रिये ! ।
विद्याक्षरैष्वनावृत्तान्यक्षराण्यष्ट तैस्तथा ॥६३॥
स्वराणां सङ्गमा ह्यष्टविंशत्या शतमीरितम् ।
विधाय वृत्तयोर्मध्ये त्वष्टकोणे ततोद्वयम् ॥६४॥

---

आसामित्यादिना विधानकमित्यन्तेनार्द्धाधिकेन श्लोकद्वयेन पञ्चदशानां नित्यानामन्योन्याङ्गित्वेन नित्यनैमित्तिककाम्येषु च ध्यानोपदेशं प्रोक्तनिगमनं च करोति । तत्र तथाविधाः—अङ्गनित्यासमानरूपाः । अन्यदा—पृथक् पृथक् स्वस्वाङ्गित्वपूजासु ॥५८॥५९॥ तत्पटलोदितं—ध्यानपटलोदितम् । एवं—उक्त-प्रकारेण ॥६०॥

विद्या इत्यादिना मन्त्रका इत्यन्तेनार्द्धाद्येनैकेन श्लोकेन प्रश्नपूर्वकं विद्यामन्त्र-योर्भेदमुपदिशति । तत्र-त्वद्दैवत्याः—स्त्रीदैवत्याः । मद्दैवत्याः—पुन्दैवत्याः ॥६१॥ ॥६२॥

पुनरित्यादिभिरशेषतः इत्यन्तैरध्यर्द्धैः पञ्चभिः श्लोकैः षोडश यन्त्राण्युपदिशति । तत्र अस्याः—वह्निवासिनीनित्याविद्यायाः । अनावृत्ताण्यक्षराणि अष्टौ- ॐकार-

---

(१) तन्मयं इति मू० पु० पा० ।

कृत्वा तेषु न्यसेद्वर्णानष्टस्वष्टौ तु मध्यतः ।
मायां नामान्वितां कृत्वा तां तारेण प्रवेष्टयेत् ॥६५॥
अन्तर्वृत्तान्तराले(१) तांल्लिखेद्वर्णान् दशक्रमात् ।
कर्मानुरूपान् पञ्चाशल्लिखेदुक्तक्रमेण वै ॥६६॥
वृत्तान्तरा प्राग्वदादिरादिक्षान्ताक्षराणि(२) च ।
एवं षोडश यन्त्राणि जायन्ते तैर्यथाक्रमम् ॥६७॥
तैर्यन्त्रैः साधयेन्नित्यं मनीषितमशेषतः ।
प्रथमं खर्परे रक्तवह्निमूलेन संयुतम् ॥६८॥
सिन्दुरं तद्रसे पिष्ट्वा धत्तूररससंयुते ।
लिखित्वा खदिराङ्गारे तापयेन्निशि जापवान् ॥६९॥
नारी नरोनृपोऽन्योवा समायाति च तद्बलात् ।
तद्देवतेन ताम्रे वा वा कांस्ये वा प्राग्वदालिखेत् ॥६८॥

---

हकाररेफवकारनकारसकारपकारमकाराः अपुनरुक्तान्यक्षराण्यष्टेत्यर्थः । सर्वत्रासंयुक्तस्वरोपादानं भवति । स्वराणां चापुनरुक्तत्ववर्गतः । व्यञ्जनानामक्षरत इति सर्वत्र समयः ॥६३॥ ततो द्वयं—अष्टकोणान्तर्वृत्तयोर्द्वयं कृत्वेत्यर्थः ॥६४॥ तारेण-प्रणवेन ॥६५॥ तान्—प्राग्वत् । प्रादक्षिण्येन तैः स्वरविकृताक्षरैः । यन्त्रविरचनाक्रमोयथा—इष्टमानेन भ्रमेण एकाङ्गुलान्तरालं वृत्तद्वयं निष्पाद्य तन्मध्ये प्राग्वदष्टकोणं कृत्वा तदन्तरापि वृत्तद्वयं विधाय तेषु अष्टसु कोणेषु अग्न्यादिप्रादक्षिण्येन आदितः अष्टौ समालिख्य सर्व्वमध्ये ह्स्लें ख्रां प्राग्वन्नामसहितां प्रणवेन वेष्टितामालिख्य अन्तर्वृत्तान्तरा कर्मानुरूपाणि पञ्चभूताक्षराणि दशदशसमालिख्य बहिर्वृत्तवीथ्यामग्न्यादिप्रादक्षिण्येन अकारादिक्षकारान्तान्येकपञ्चाशदक्षराण्यालिखेत् एतत्प्रथमं यन्त्रम् । अस्यैवाष्टसु कोणेषु पूर्व्वपूर्व्वलिखितविद्यास्वरविकृताक्षराष्टकादुपरितनमक्षराष्टकमक्षराष्टकं विलिखेत् । तेन षोडशयन्त्राणि सम्भवन्ति तैर्मनीषितं साधयेदिति ॥६९॥

---

(१) अन्तर्वृत्तान्तराभूमान् इति मू० पु० पा० । (४) बहिर्वृत्तान्तरा प्राग्वदादिक्षान्ताक्षराणि इति मू० पु० पा०

तत्तापनादपि भवेत् पूर्वोक्तं फलमीश्वरि!।
द्वितीयं खर्परे तेन विलिख्य निशि तापयेत् ॥७१॥
नारी वश्या समायाति जन्माचारविलङ्घिनी।
तृतीयं तेन तत्रैव लिखित्वा निशि तापयेत्* ॥७२॥
श्मशानाग्नौ मुक्तकेशा(१) नग्नार्द्रे रिज्वरातुरा(२)।
तदेव दम्पती दग्धवन्ह्यागारं तु निखनेत्(३) ॥७३॥
रसे पिष्ट्वा लिखित्वाऽग्नौ संताप्य निखनेत्ततः।
श्मशाने वैरिणां प्रोक्तकाले क्रुद्धाशयो जपेत् ॥७४॥
मनुं तदेव संभ्रान्तः पिशाचार्तोरिपुर्भवेत्।
चतुर्थं विलिखेत्कृष्णापट्टचीरेऽसिताम्बरे ॥७५॥
पूर्ववत्तत्र निखनेद्द्रावावुक्तक्रमेण च।
दाहज्वरेण सप्ताहाद्रिपुर्याति यमालयम् ॥७६॥
पञ्चमेऽप्यथ वा षष्ठे द्वयोर्नाम लिखेद्द्वयोः।
कालोलूकजपक्षोत्थलेखन्या खर्परद्वये ॥७७॥
श्मशाने निखनेत् प्राग्वन्नदीतीरद्वये द्वयम्।
नद्यांतु वारिणा पूर्णा यां द्वेषास्यात्तयोर्मिथः(४) ॥७८॥

---

प्रथममित्यादिभि र्भुविइत्यन्तैरष्टाद्यैः त्रयस्त्रिंशद्भिः श्लोकैः प्रोक्तेषु षोड़श-यन्त्रेषु तृतीयचतुर्थपञ्चमषष्ठसप्तमाष्टमैः षड्भिर्यन्त्रैर्निग्रहान् एकादशेन निग्रहानुग्रहान् शेषैः शुभाशुभानि चोपदिशति। तत्र तद्रसे– रक्तवह्निरसे। रक्तवह्निर्नाम रक्तचित्रकम्। खदिराङ्गारे–खदिरेन्धनाङ्गारे ॥६८॥ तेन—पूर्वोक्त-द्रव्येण। अस्मिन् प्रकरणे सर्वत्र द्रव्यानुक्तौ तापनं खादिराङ्गारे। ॥७०॥७१॥ ७२॥७३॥ प्रोक्तकाले प्राग्वत्॥७४॥ असिताम्बरे इति पूर्वसम्बन्धः ॥७५॥ पूर्ववत्—

---

* नारी वश्या समायाति जन्माचारविलङ्घिनी। तृतीयं तेन तत्रैव लिखित्वा निशि तापयेत् इत्ययं श्लोकः पुनरपि सो० पुस्तके लिखितः मू० पुस्तके नास्ति।

(१) मुक्तकेशः इति मू० पु० पा०।

(२) ज्वरातुरः इति मू० पु० पा०।

(३) दग्धवन्ह्यङ्गारंतु निखनेः इति सो पु० पा०।

(४) नद्यातुवारपूर्णेयें विद्वेष स्याद्द्वयोर्मिथ इति मू० पु० पा०।

सप्तमे नाम संलिख्य सीसपट्टे यथाविधि ।
शिरःकपाले निःक्षिप्य श्मशाने निखनेन्निशि ॥७९॥
रिपोः पुरोक्तकाले तु पिशाचैर्ग्रस्यते(१) रिपुः ।
अष्टमं खर्परे कृत्वा रिपुद्वारे खनेन्निशि ॥८०॥
सप्ताहात्तद्गृहाद्वैरी प्रयात्युच्चाटितोऽन्यतः ।
नवमं हेम्नि कृत्वा तदूर्मिकायां वरे दिने(२) ॥८१॥
सिद्धयोगे शुभे लग्ने धिषणोदय एव वा ।
कृत्यापमृत्युरोगादिदुःखेभ्योमुच्यते नरः ॥८२॥
दशमं राजते पट्टे कृत्वा वेश्मनि कुत्रचित् ।
निधाय पूजयेद्वश्मन्यश्मपातादिशान्तये ॥८३॥
तथा भूतग्रहार्तांश्च रक्षेदेतस्य धारणात् ।
एकादशे लिखेद्भूर्जे पाटीरेन्दुद्रवैस्तु तत् ॥८४॥
उक्तक्रमसमोपितं गुलिकीकृत्य तां पुनः ।
सितसिक्थमये लिङ्गे संस्थाप्याभ्यर्च्य तत् पुनः ॥८५॥
स्थापयेत् चौद्रमध्ये तु पूजयेन्नित्यशश्च तत् ।
सन्ध्यासु सुसितैः पुष्पैः सौरभाद्यैर्विधानतः ॥८६॥
मासात्तदर्द्धात्सप्ताहाद्वशे स्युः शत्रवो ध्रुवम् ।
भवेयुर्व्याधितास्तेन(३) घृतेनारोग्यमाप्नुयुः ॥८७॥
ज्वरार्तास्तु विशेषेण सुखिताः स्युरयत्नतः ।
अम्लसौवीरमध्यस्थे विद्वेषयति वैरिणौ(४) ॥८८॥

---

निम्बरसादिना ॥७६॥ द्वयोः—यन्त्रयोः । द्वयोः—विद्वेष्ययोः ॥७७॥ अत्रापि लेखनद्रव्यं निम्बरसादि । एतदेवास्मिन्निग्रहप्रकरणे द्रव्यानुक्तौ द्रव्यम् ॥७८॥७९॥

---

(१) गृह्यते इति सो पु० पा० । (१) कृत्वा तु ऊर्मिकायां वर्हेर्द्दिने इति मू० पु० पा० ।
(३) स्तेन तेन रोग मवाप्नुयुरिति सा० पु० पा०
(४) अमलं सौवीरमध्यस्थं विद्वेषयति वै रिपौ इति मू० पु० पा० ।

तत्रैव कथनाद्रोगं तयोरुत्पादयेदपि ।
शुण्ठीमरीचपिप्पल्यः सुसूक्ष्माः परिचूर्णिताः ॥८९॥
लकुचस्य रसोपेताः तन्मध्ये तद्विनिक्षिपेत् ।
तापयेत् त्रिषु सन्ध्यासु यवारातिस्तु(१) तन्मुखम् ॥९०॥
प्रोक्तकाले ज्वरैरार्तस्तापतृष्णासमन्वितः ।
द्वादशं खर्परे(२) रात्रिरसेनालिख्य तत्पुनः ॥९१॥
*इष्टकायुगमध्यस्थं कृत्वा तत् श्लेषयेद्दृढम् ।
स्थापयेच्चण्डिकागेहे शास्तुरायतनेऽपि(३) वा ॥९२॥
स्वगृहे भित्तिमध्ये वा शयनस्थापनतोऽपि(४) वा ।
स्तम्भयेद्वैरिणोरोषमुद्योगं वाऽथ चिन्तनम् ॥९३॥
व्यवहारं ऋणं चान्यद्यद्यदस्याहितात्मकम्(५) ।
त्रयोदशेन भूर्जस्थे नाशु धारणतोऽङ्गना ॥९४॥
वन्ध्यापि लभते पुत्रं विचित्रा यन्त्रशक्तशयः ।
चतुर्दशगतं नाम कृत्वा(६) भूर्जे चतुष्पथे ॥९५॥
सिक्थमध्यगतं कृत्वा तन्निशीथेऽभितापयेत् ।
सप्ताहाद्वशमायान्ति स्त्रियो वा पुरुषा नृपाः ॥९६॥
गजा हया मृगास्त्वन्ये ये जीवा भूतलाश्रयाः ।
परेण नाम्ना युक्तेन फलकालिखितेन वै ॥९७॥

---

॥८०॥ धिषणोदयः प्राग्वत्। वा पद्मान्तरे ॥८२॥८३॥८४॥ सितसिक्थमये—सितमधूच्छिष्टमये। तत्—लिङ्गमितिशेषः ॥८५॥८६॥८७॥८८॥ तत्रैव—अम्लसौवीरे ॥८९॥९०॥ रात्रिरसेन—हरिद्रारसेन ॥९१॥९२॥९३॥९४॥९५॥९६॥

---

(१) यन्त्रं रात्रौ च तन्मुखम् इति मू० पु० पा० । * इष्टिका इति मू० पु० पा० ।
(२) कर्पटे रात्रीरसेन इति मू० पु० पा० । (३) गोष्ठ इति मू पु० पा० ।
(४) स्थापनोऽपि वा इति सो पु० पा० । (५) व्यवहारं वा नवान्यदस्याभिमतमात्मन इति सो पु० पा० ।
(६) तद्भूर्जके तथा इति मू० पु० पा० ।

सुखप्रसूतिः स्यात् स्त्रीणां तत्पूजाग्रे तृणादिना ।
षोड़शे नाम संलिख्य धारणात्प्राणिनां तथा ॥९८॥
रक्षा भवति सर्वत्र ग्रहरोगभयादिषु ।
तदेव स्वर्णपट्टस्थं विधाय विधिना युतम्(१) ॥९९॥
ऊर्मिकाङ्गदभूषादौ मूर्ध्नि वा बिभृयात्ततः ।
आधिव्याधिविनिर्मुक्तो निःसपत्नो जितेन्द्रियः ॥१००॥
भोक्ता भक्तश्च(२) पुण्यानां जीवेद्वर्षशतं भुवि ।
योनितत्त्वमयी व्याप्तिरितिसम्यक्समीरिता ॥१०१॥
अस्या निष्फालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ।

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य-
तन्त्रस्य एकादशपटलं परिपूर्णम् ॥११॥*

---

परेण—पञ्चदशेन ९७॥ अत्रानुग्रहप्रकरणे द्रव्यानुक्तौ पटीरादिस्वर्णपदस्थम् । हैमपट्टोत्कीर्णम् ॥९८॥९९॥ आधिः—मानसी पीड़ा । अत्र द्वादशतमः श्लोकः षट्चरणागाथा ॥१०१॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य प्रपञ्च-
सारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां भगमालिनीनित्याविद्याविधान-
प्रकाशनपरं एकादशपटलं परिपूर्णं
परामृष्टम् ॥ ११ ॥

ग्रन्थसङ्ख्या—

यन्त्राणि षोड़श व्याख्या ग्रन्थे स्वार्द्धाधिका भवेत् ।
चतुःषष्टिरितिप्रेक्ष्य प्रोक्तमेकादशेऽखिलम् ॥०॥

---

(१) शुभम् इति मू० पु० पा० । (२) भोक्ता कर्ता च इति मू० पु० पा० ।
* अस्मिन्पटले द्वादशतमः श्लोकः षट्चरणागाथा इत्यधिकम् ।

## द्वादशपटलम् ।

अथ षोड़शनित्यासु सप्तमी या समीरिता ।
तस्या विधानं वच्यामि शृणु सर्वार्थसाधकम् ॥१॥
प्रोक्तैव विद्या प्रागेव द्वादशाक्षरविग्रहा ।
तदङ्गानि लिपिन्यासं ध्यानं शक्तिभिरर्चनम् ॥२॥
साधनं होमकर्माणि (सर्वता) यन्त्राणि फलभेदतः ।
प्रोक्तक्रमेण सकलं कथयामि यथाविधि ॥३॥
द्वयमेकैकमथ च द्वयं द्वयमथो द्वयम् ।
मायया पुटितं कृत्वा कुर्यादङ्गानि षट्क्रमात् ॥४॥
प्रत्येकं शक्तिपुटितैर्मन्त्राणैर्दशभिर्न्यसेत् ।
दृक्श्रोत्रनासावाग्वक्षोनाभिगुह्येषु च क्रमात् ॥५॥
रक्तां रक्ताम्बरां रक्तगन्धमालाविभूषणाम् ।
चतुर्भुजां त्रिनयनां माणिक्यमुकुटोज्ज्वलाम् ॥६॥

---

### अथ द्वादशपटलम् ।

पूर्वस्मिन्नेकादशे पटले षष्ठ्या वह्निवासिनीनित्या(या)विद्याविधानमुपदिश्यानन्तरं सप्तम्या महावज्रेश्वरीनित्याविद्याया विधानमुपदिशति । अथ षो. शेत्यादिना अवाप्नये इत्यन्तेन श्लोकशतरूपेण द्वादशेन पटलेन । तत्र अथ षोड़शेत्यादिभि र्यथाविधि इत्यन्तैस्त्रिभिः श्लोकैः पटलार्थानुद्दिशति । तत्र प्रागेव-तृतीयपटले ॥ ॥१॥२॥३॥

द्वयमित्यादिना क्रमादित्यन्तेन श्लोकद्वयेन न्यासक्रममुपदिशति । तत्र एकैकं शिरः शि(व)खयोरिति शेषः । मायया—ह्रल्लेखया । अङ्गानि—हृदयादीनि । क्रमाज्जातियुक्तानि शक्तिपुटितैः ह्रल्लेखापुटितैः दशभिः । ह्रल्लेखा द्वयवर्जवाग्वक्षो-नाभिगुह्येषु । एकैकमितिशेषः । गुह्यं नाम मेहनम् ॥४॥५॥

रक्तामित्यादिभिर्नायिकामित्यन्तैः पञ्चभिः श्लोकैर्देव्याः सपरिवाराया नित्य-

पाशाङ्कुशाविक्षुचापं दाडिमीसायकं तथा ।
दधानां बाहुभिर्नेत्रैः दया (पर) दमसुशीतलैः ॥७॥
पश्यन्ती साधकं त्र्यस्रषट्कोणाब्जमहीपुरे ।
चक्रमध्ये सुखासीनां स्मेरवक्त्रसरोरुहाम् ॥८॥
शक्तिभिः स्वस्वरूपाभिरावृतां पोतमध्यगे ।
सिंहासनेऽभितः प्रेङ्खत्प्रोतस्थाभिः स्वशक्तिभिः ॥९॥
वृत्तान्ताभिर्विनोदानि यातायातादिभिः सदा ।
कुर्वाणामरुणाम्भोधौ चिन्तये (द्व्रज)न्मन्त्रनायिकाम् ॥१०॥
इच्छाज्ञानक्रियास्तत्र त्रिकोणस्थाश्च शक्तयः ।
डाकिन्याद्याः षडस्रस्थाः पद्मद्वादशपत्रगाः ॥११॥
हृल्लेखा क्लेदिनी क्लिन्ना क्षोभिणी मदनातुरा !
निरञ्जना रागवती तथैव मदनावती ॥१२॥
मेखला द्राविणी वेगवती द्वादशशक्तयः ।
ततः षोडशपत्रस्थाः शक्तीराकर्णयाम्बिके ! ॥१३॥
कमलां कामिनीं कल्पां कलां कलितकौतुकां ।
किरातां कालकण्ठने कौशिकां कम्बुवाहिनीम् ॥१४॥

---

पूजाध्यानमुपदिशति ! आयुधकल्पनं—वामोर्ध्वहस्तादिदक्षिणाधरहस्तान्तं वाम-दक्षिणवामदक्षिणक्रमेण ॥६॥७॥ त्र्यस्रषट्कोणाब्जमहीपुरे चक्रमध्ये । एतदुक्तं भवति—समत्रिरेखां योनिं विधाय तद्बहिर्यथामानं षट्कोणं कृत्वा तद्बाह्ये द्वादश-यन्त्रं द्वादशपत्रं विधाय तद्बाह्ये षोडशदलं पद्मं कृत्वा तद्बहिश्चतुर्दिक्षु द्वारोपेतं समचतुरस्रद्वयं कुर्यात् तत्र चक्रे सुखासीनां तां चिन्तयेदिति ॥८॥९॥ अरुणा-म्भोधौ—शोणाम्भोधौ ॥१०॥

इच्छेत्यादिभिर्यजेदित्यन्तैः सप्तभिः श्लोकैर्देव्याः परिवारशक्तीरुपदिशति—तत्र षडस्रस्थाः नैर्ऋत्यादिक्रमेण ॥११॥ मदनातुरा—मदना इति मदनातुरा इति च द्वे शक्ती ॥१२॥१३॥ कलिताकौतुके—कलिता कौतुका इति च द्वे शक्ती ।

कातरां कपटां कीर्तिकुमारीं कुङ्कुमामपि ।
चतुरस्रस्थितां(१) चापि शक्तीराकर्णय क्रमात् ॥१५॥
जम्भिका वेगिनी नाम्नी चपला पेशला सती ।
रतिः श्रद्धा भोगलोभमदोन्मत्ते मनस्विनी ॥१६॥
दिक्षु द्वारेषु(पार्श्वेषु) कोण(ादि) दिक्षु च संस्थिता:(ननाः)।
द्वादशैता महादेवि ! चतुरस्रेऽभितोजपेत् ॥१७॥
कृत्वाऽर्घ्यमङ्गमूलाभ्यां प्रोक्तरूपं ततोऽर्चयेत् ।
शोणाब्धिं हेमपोतं च सिंहासनमनन्तरम् ॥१८॥
तत्र चक्रं ततो देवीं प्राग्वदावाह्य शक्तिभिः ।
मायासमाचरीमध्यंगतैर्नामभिरर्चयेत् ॥१९॥
बलिं च दद्यात्तदनु समाचर्या पुरोक्तया ।
देव्यास्तु कुरुकुल्लाया होमं कुर्याद्यथाविधि ॥२०॥
घृताक्तैररुणैः पुष्पैर्घृतैर्वा होममाचरेत् ।
प्राग्वत् समापयेदित्थमर्चनं ते समीरितम् ॥२१॥

---

कालकदने—कालाकदना इति च द्वे ॥१४॥१५॥ मदोन्मत्ते—मदा उन्मत्ता च इति द्वे ॥१६॥ दिक्षु स्थितेषु द्वारेष्वित्यर्थः । पार्श्वेषु द्वाराणामितिशेषः । प्रथमं पश्चिमादिचतुर्दिक्द्वारपार्श्वेषु पश्चात् वाय्वादिकोणदिक्षु प्रादक्षिण्येनार्चयेत् । सर्वत्रावरणेषु अग्रात्प्रादक्षिण्येन पूजयेत् ॥१७॥

कृत्वेत्यादिभिः समीरितं इत्यन्तैश्चतुर्भिः श्लोकैर्देव्या नित्यपूजाक्रमसुपदिशति । तत्र प्रोक्तरूपं—अग्निसोमसूर्यात्मकभावनादियुतम् । शोणाब्धिः—शोणसागरः॥१८॥ तत्र—सिंहासने स्थितायामितिशेषः । प्राग्वत्—त्रिखण्डामुद्रादिभिः । मायासमाचरीमध्यगतैः – ह्रूं खासमाचरीमध्ययोजितैः । शोणसागरादीनामपि एवमेव मन्त्रयोजनक्रमः । (माया)समाचर्या कुरुकुल्लाय(विद्य)या सर्वत्र अ(न्य)न्यबलेविशेषानुक्तौ कुरुकुल्लाय्वविद्यया बलिं दद्यात् । यथाविधि अत्राभ्युपेतम् ॥२०॥ प्राग्वत्—तेजोरूपया स्वात्मयोजनादिति ॥२१॥

---

(१) आपि इति मू० पु० पा० ।

वसन्तकाले ग्रीष्मे वा पूर्णामारभ्य साधयेत् ।
हविष्याशी पयोभक्तः फलमूलाशनोऽथ वा ॥२२॥
स्नातः सुगन्धिसलिलैररुणांशुकवान् शुचिः ।
चन्द्रचन्दनकाश्मीरचर्चालोहितविग्रहः ॥२३॥
अञ्जनाक्ताक्षियुगलस्ताम्बुलारुणवक्त्रवान् ।
मुखार्पितेन्दुशकलो हृष्टचेता जितेन्द्रियः ॥२४॥
मौनी त्रिकालपूजासु कृतसङ्कल्पसाधनः ।
नक्ताशी हुतशिष्टेन जपेद्विद्यां समाहितः ॥२५॥
नित्यशोभो (१)जपेद्विद्याभक्तान् भजनकौतुकान् ।
त्रयादहीना(२) मधुरं पायसं भोज्यभक्तिमान् ॥२६॥
प्रणम्याभ्यर्च्य विसृजेन्नित्यशस्तद्दिनेषु तु ।
गुरुजीवं समासाद्य प्रणम्याऽसकृदात्मवान् ॥२७॥
धनधान्याम्बराद्यैस्तं सन्तोष्य तदनुज्ञया ।
कृतारम्भो नित्यशश्च पूजयेत्तं च भक्तितः ॥२८॥
अन्ते च चित्रैः स्तोत्रैश्च तं संतोष्य कृती भवेत् ।
वित्तशाठ्यं च दर्पं च दम्भं चासत्यमेव च ॥२९॥
न कदाचिच्च कुर्वीत विशेषाद्गुरुसन्निधौ ।
एवं लक्षत्रयं जप्त्वा तद्दशांशं हुनेत् घृतैः ॥३०॥

---

वसन्तकाले इत्यादिभिः साधकइत्यन्तैरध्यर्द्धैरेकादशभिः श्लोकैः सर्वविद्यासाधनसाधारणं गुणविधानमुपदिशति। तत्र हविष्याशो—निर्लवणपक्कव्रीहितण्डुलाहारी ॥२२॥२३॥२४॥ कृतसङ्कल्पसाधनः—कृतस्वसङ्कल्पयोग्यक्रमः ॥२५॥ भजनकौतुकान्—नित्यभजननिरतान् ॥२६॥ तद्दिनेषु—पुरश्चरणदिनेषु ॥२७॥२८॥ अन्ते—पुरश्चरणावसाने। स्तोत्रैः—पञ्चभिः श्लोकैः। तं—गुरुम्। दम्भं—

---

(१) यजेद्विद्या इति म० पु० पा०। (२) हीनामधुरप्रायं संभोज्यं इति मू० पु० पा०।

आरग्वधप्रसूनैश्च(१) प्रसूनैर्वकुलाद्भवैः ।
मधूकजैश्चम्पकैर्वा विमध्वक्तैश्च नित्यशः ॥३१॥
चन्द्रचन्दनकस्तूरीकाश्मीरसुरभीकृतैः ।
तर्पयेत्सलिलैस्तावद्दिनशोभक्तिमान् दृढः ॥३२॥
एवं संसिद्धमन्त्रस्तु कुर्यात्काम्यानि(२) साधकः ।
गुरुभक्तोनित्यकृत्यक(३) तसङ्कल्पसंयुतः ।
सहस्रजापी स्थिरधीर्मन्त्रवीर्यविदात्मवान् ।
यः सोऽपि काम्यान् कुर्वीत प्रयोगान्नान्यथा शिवे ! ॥३४॥
यद्यज्ञानेन मोहेन चापलेनापि वाऽऽचरेत् ।
अनर्थान् क्लेशनाशादि(४) पीड़ां प्राप्नोति निश्चितम् ॥३५॥
अरुणैः पङ्कजैर्होमं कुर्यात्त्रिमधुराप्लुतैः ।
मण्डलाल्लभते लक्ष्मीं महतीं श्लाघ्यविग्रहम्(हाम्) ॥३६॥
कह्लारैः चौद्रसंसिक्तैः पौर्णाद्य(चि)तद्दि दिनावधि ।
जुहुयान्नित्यशोभक्त्या सहस्रं विकचैः शुभैः ॥३७॥
तत्तद्दिनेषु पूर्वोक्तान् (पू)भोजयेदुक्तरूपतः(५) ।
तावच्च जप्याद्धोमान्ते यावत्सङ्ख्याहुतं(६) कृतम् ॥३८॥

---

मिथ्यास्वरूपनिर्वहणम् ॥२८॥ लक्षत्रयमितिविशेषविधानात्केवलं लक्षत्रयं जपेदित्यर्थः ॥३०॥३१॥ तावत्-दशांशतः । दिनशः - प्रतिदिनम् । अत्र पुरश्चरणविधौ प्रोक्तमखिलं सकलविद्यापुरश्चरणम् ॥३२॥ एवं—उक्तप्रकारेण ॥३३॥

गुरुभक्त(मि)इत्यादिना निश्चितमित्यन्तेनार्द्धाधेन श्लोकद्वयेन पुरश्चरणमन्तरेणापि प्रयोगयोग्यतामन्यथाकरणे प्रत्यवायं चोपदिशति । तत्र - अन्यथा (अन्यथा) अन्यः नैवंविधगुण इत्यर्थः ॥३४॥३५॥

अरुणैरित्यादिभिर्भवेदित्यन्तैः सप्तविंशत्या श्लोकैर्नानाविधैर्द्रव्यैर्होमादिना

---

(१) प्रसूनैर्वा इति मू० पु० पा०　　(२) काम्यादि इति मो० पु० पा० ।
(३) नित्यपूजाक्रत इति मू० पु० पा०　　(४) क्लेशराशादि इति मू० पु० पा० ।
(५) भोजयेदुक्तदेवतामिति मू० पु० पा० ।　　(६) यावत्सङ्ख्यं हुतक्षतं मिति म० पु० पा० ।

चम्पकैः क्षौद्रसं(सि)युक्तैः सहस्रहवनाद्ध्रुवम् ।
लभते स्वर्णनिष्काणां शतं मासेन पूर्ववत् ॥३९॥
पाटलैर्घृतसंसिक्तैः त्रिसहस्रं हुतैः(१) तथा ।
(२)दर्शादिमासाँल्लभते चित्राणि वसनानि च ॥४०॥
कर्पूरचन्दनादीनि सुगन्धीनि च मासतः ।
वस्तूनि लभते हृद्यैरन्यैर्भोगोप(भो)योगिभिः ॥४१॥
शालिभिः क्षीरसिक्ताभिः सप्तमीषु शतं हुनेत् ।
तेन शालिसमृद्धिः स्यात् मासैः षड्भिरसंशयम् ॥४२॥
तिलैर्हुतैस्तद्दिवसे वर्षादारोग्यमाप्नुयात् ।
स्वजन्मसु त्रिषु(३) तथा दूर्वाभिर्जुहुयात्तथा ॥४३॥
निरातङ्को महाभोगः शतं वर्षाणि जीवति ।
गुडूचीतिलदूर्वाभिस्त्रिषु जन्मसु वा हुनेत् ॥४४॥
तेनायुःश्रीर्यशोभोगापुण्यनिध्या(४)दिभाग्भवेत् ।
घृतपायसदुग्धैस्तु हुतैस्तेषु त्रिषु क्रमात् ॥४५॥
आयुरारोग्यविभवैर्नृपमान्योभवेत्तथा ।
सप्तम्यां कदलीहोमात् सौभाग्यं लभते व्रतः ॥४६॥

---

नानाविधफलावाप्तिमुपदिशति । तत्र मण्डलान् प्राग्वत् ॥३६॥ तद्दिनावधि—पूर्णादिनावधि ॥३७॥ तत्तद्दिनेषु—सर्वप्रयोगदिनेषु । पूर्वोक्तान्—विद्याविदः । उक्तरूपतः—मधुरसप्रायादि । एतत्सर्वप्रयोगसाधारणम् । तावदित्याद्युक्तं सर्वहोमसाधारणम् ॥३८॥३९॥ दर्शाऽदिमासान्—दर्शादि दर्शान्तमित्यर्थः ॥४०॥४१॥ सप्तमीषु—तिथिषु अस्य वासना गुरुमुखादवगन्तव्या । एकादशे पटले स्वस्वतिथिषु नित्यानां विशेषतः पूजाहोमादिविधानात् अत्र षष्ठीष्वपि विशेषविधानं कर्तव्यम् ॥४२॥ तद्दिवसे—सप्तम्याम् । स्वजन्मर्क्षेषु त्रिषु—स्वजन्मनक्षत्र-

---

(१) हुतं इति सो० पु० पा० । (२) वर्षादि इति मू० पु० पा० । (३) नृषु इति मू० पु० पा० ।
(४) निध्यासभाग्भ इति मू० पु० पा० ।

दूर्वात्रिकैस्तु प्रादेशमात्रैस्त्रिस्वादुसंयुतैः ।
जुहुयाद्दिनशोघोरे सन्निपातज्वरे गदे(१) ॥४७॥
महारोगेषु दूर्वाभिः तिलैश्छिन्नोद्भवैस्तथा(२) ।
त्रिभिर्वा नित्यशोहोमं कुर्यात्त्रिस्वादुसंयुतैः ॥४८॥
षण्मासादब्दतो वाऽपि रोगान्मुक्तः सुखी भवेत् ।
तद्दिनेषु जपेद्विद्यां नित्यशः सलिलं स्पृशत् ॥४९॥
सहस्रवारं तत्तोयैः स्नानं पानं समाचरेत् ।
पाकाद्यमपि तैरेव कुर्याद्रोगविमुक्तये ॥५०॥
साध्यचर्मत्वच संचूर्ण्य लवङ्गं(३) सर्षपं तिलम् ।
पिष्टं च साध्यपादोत्थ(४) रजसा च समन्वितम् ॥५१॥
कृत्वा पुत्तलिकां तैस्तु हृदये नाम संयुताम् ।
प्राग्वच्छित्त्वाऽऽयसैस्तीक्ष्णैः शस्त्रैः पुत्तलिकां हुनेत् ॥५२॥
एवं दिनैः सप्तभिर्वा त्रिभिर्वैकदिनेन वा ।
साध्यो वशो भवेच्छीघ्रमपि दूरस्थितो दृढः(५) ॥५३॥
तथाविधां पुत्तलिकां कुण्डमध्ये खनेद्भुवि ।
उपर्यग्निं निधायात्र विद्यया दिनशो(वं) हुनेत् ॥५४॥

---

तद्दशमैकोनविंशतिनक्षत्रेषु । तथा—शतम् । तथा—अरोगः ॥४३॥ निरातङ्कः अव्याकुलः । गुडूची—अमृता । गुडूच्यादीनि त्रीणि द्रव्याणि जन्मत्रये यथाक्रमं जुहुयात् । वा पक्षान्तरे त्रिषु जन्मस्वितिशेषः । क्रमात्—यथाक्रमम् ॥४५॥४६॥ दूर्वात्रिकैः—त्रिसङ्ख्याभिः दूर्वाभिरित्यर्थः । त्रिस्वादुसंयुतैः—त्रिमधुरसंयुक्तैः ॥४७॥ महारोगेषु—महारोगा नाम वातादयोऽष्टौ । छिन्नोद्भवैः—अमृतालताभिः एकै-

---

(१) सन्निपातिगदैज्वरे इति मू० पु० पा० । (२) स्त्रुवा इति सो पु० पा० ।
(३) त्वचसंचूर्ण्य पूषणं सर्षपं तिलमिति सो० पु० पा० । (४) पादोऽस्य इति सो०पु० पा० ।
(५) दूरस्थितं दृढमिति सो० पु० पा० ।

विसहस्रं त्रियामायां सर्षपैस्तद्रसप्लुतैः ।
शतयोजनदूरादप्यानयेद्वनितां बलात् ॥५५॥
तां तु पुत्तलिकामर्द्धमधूच्छिष्टसमन्विताम् ।
कृतप्राणप्रतिष्ठां च श्मशाने निखनेन्निशि ॥५६॥
साध्ययोनिं च तत्रैव छित्वा दत्वा बलिं ततः ।
कृताभिषिकस्तां विद्यां प्रजपेच्च शतत्रयम् ॥५७॥
अरातेरष्टमे राशौ मासान्नानाविधैरपि ।
रोगैर्भूतादिसंक्लेशैर्नाशमेति सुनिश्चितम् ॥५८॥
यद्यन्तरा समुद्धृत्य सलिले तां खनेन्निशि ।
क्लेशैस्तैः स विनिर्मुक्तः सुखी जीवति भूतले ॥५९॥
साध्यवृक्षेण कृत्वा तां सर्षपाज्ये निवेशिताम् ।
तोयमध्ये निधायैतत्क्वाथयेदुक्तवासरैः ॥६०॥
वैरी तीव्रज्वरेणार्तः कृते प्राग्वत् सुखी भवेत् ।
तामेव चण्डिकागेहे तथा बलियुतं खनेत् ॥६१॥
साध्यो नरश्चेत् नारी चेत् शास्तुरायतने खनेत् ।
तद्विधानेन सहितं शत्रुरुन्मादवान् भवेत् ॥६२॥

---

कैरितिशेषः । त्रिभिः—दूर्वादिभिः समुदितैः । वा-पक्षान्तरे । तद्दिनेषु—महारोगप्रतीकारप्रयोगदिनेषु ॥४९॥ तत्तोयैः—अभिमन्त्रितजलैः ! पाकाद्यं अन्नाद्यम् । तैरेव—जलैरेव ॥५०॥५१॥ तैः—साध्यर्क्षवृक्षचूर्णादिभिः समुदितैः ॥५२॥५३॥ ॥५४॥५५॥ अर्द्धमधूच्छिष्टसमन्विताम्—अर्द्धांशमधूच्छिष्टसहितैः प्रागुक्तैः कृताम् ॥५६॥ कृताभिषिक इत्यादि सर्वक्रूरप्रयोगानन्तरकृत्यम् । अभिषेकस्तु तत्तद्देवतानित्यसपर्याचक्रेण ॥५७॥ अष्टमे राशौ निखनेदिति सम्बन्धः । सर्वत्र क्रूरप्रयोगान् साध्यस्य अष्टमे राशौ कुर्यात् ॥५८॥५९॥ तां—पुत्तलिकां श्मशाने निखाताम् । एतत्—सर्षपाज्यपात्रम् । उक्तवासरैः—मासादिभिः॥६०॥ प्राग्वत्कृते-सलिलस्थापने कृते । तामेव—साध्यनक्षत्रवृक्षकृताम् । तथा बलियुतं—साध्ययो-

महावज्रं च वज्रं च यन्त्राख्यन्यान्यनुक्रमात्।
प्रयोगानपि वक्ष्यामि समाहितधिया शृणु ॥६३॥
प्राक्प्रत्यक्दक्षिणोदिक् च विंशत्सूत्राणि पातयेत्।
तेन कोष्ठानि जायन्ते त्वेकषष्ठ्या शतत्रयम् ॥६४॥
तेषु कोण(उपान्तेषु)चतुष्केऽपि मार्जयेत् पञ्चकेन च।
चत्वारिंशत्तत्र शेषं वज्राकारं यथा भवेत् ॥६५॥
दिक्षु चत्वारि चत्वारि मार्जयित्वा त्रिकोणकम्।
कुर्याच्छेषाणि कोष्ठानि पञ्चषष्ठ्या शतं भवेत् ॥६६॥
तेषु पूर्वादिपरितो लिखे(दा)द्विद्याक्षराणि तु।
प्राग्वत्स्वरविभिन्नानि प्रागुक्तविधिना तथा(तः) ॥६७॥
चत्वारिचत्वारिंशच्च शतं तेषां तु मध्यतः।
एकविंशतिकोष्ठानि शिष्टानि पुनरम्बिके! ॥६८॥

---

निबलियुतम् ॥६१॥ नरनार्योर्यथाक्रमं चण्डिकाशास्त्रोर्गृहे। तद्विधानेन—अष्टमराश्यादि ॥६२॥

महावज्रमित्यादिभिः कार्यानुरूपत इत्यन्तैरेकादशभिः श्लोकैर्महावज्रादि यन्त्रनिर्माणक्रमुपदिशति। तत्र प्राग्वत् एकादशानावृत्ताक्षराणि प्रागुक्तविधिना प्रादक्षिण्यप्रवेशगत्या तेषां षट्सप्तत्यधिकशतसङ्ख्यास्वरविकृतविद्याक्षराणां समन्वितं शिष्टविकृताक्षरेषु षट्कमितिशेषः। चकाराद्विकृतविद्याक्षरसहितमितिशेषः। अन्यत्सुगमम्। लेखनक्रमस्य सम्प्रदायप्राप्यत्वात् अयमत्र विलेखनक्रमः—यथा—प्राक्प्रत्यक् दक्षिणोदक् च समान्तरालानि विंशतिविंशतिसूत्राणि पातयेत्। एवं कृते एकषष्ठ्यधिकशतत्रयं कोष्ठानि सम्भवन्ति ॥६३॥६४॥ तेषु चतुर्दिक्षु सर्वमध्यकोष्ठचतुष्टयवर्जम्। बाह्यवीथ्यां कोष्ठान्यन्यान्यभितः प्रतिकोणं सप्तदशसप्तदश मार्जयेत्। तदन्तः द्वितीयवीथ्यां प्राग्वत् पूर्वपरित्यक्तकोष्ठपार्श्वेषु एकमेकं कोष्ठं परित्यज्य अन्यानि त्रयोदश त्रयोदश कोष्ठानि प्रतिकोणमभितोमार्जयेत्। तदन्तरेपि तृतीयवीथ्यां प्रागवत् एकमेकं त्यक्त्वा प्रतिकोणं नव कोष्ठानि मार्जयेत्। तदन्तश्चतुर्थवीथ्यां प्राग्वदेकैकं त्यक्त्वा प्रति-

तेषु पर्यायनित्यार्णवर्णषट्कसमन्वितम् ।
घटिकायुगवर्णौ च लिखेत् प्रागुक्तयोगतः ॥६९॥
शिष्टेषु विद्यावर्णांश्च लिखेद्द्वादशशेषयोः ।
साध्याख्यमालिखेदुक्तक्रमेण पुटयोर्द्वयोः ॥७०॥
चतुर्दिक्षु लिखेत्कोणेष्वभितो भौतिकार्णकान् ।
द्वित्रिक्रमेण प्राक्प्रत्यक्कोणयोस्तु त्रयं त्रयम् ॥७१॥
एतत् प्रोक्तेषु संलिख्य संपूज्य विधिना युतम् ।
स्पृशन् जपेन्मनुं पश्चात्त्रिसहस्रं ततस्तु तत्(तम्) ॥७२॥
विनियुंज्याद्यथोक्तेषु कार्येषु क्रमतः शिवे ! ।
भूताक्षराणि च पुनर्लिखेत्कार्यानुरूपतः ॥७३॥

---

कोणं पञ्चपञ्चकोष्ठानि मार्जयेत् । तदन्तः पञ्चवीथ्यां प्रागवच्चैकैकमेकं परित्यज्य प्रतिकोणमेकं एकं कोष्ठं मार्जयेत् । एवं कृते एकाशीत्यधिकशतकोष्ठरूपं प्रतिदिशं एकादिप्रतिपङ्क्ति प्रतिपार्श्वं एकैककोष्ठाभिवृद्ध्या वज्राकारं दृश्यते । तेषु चतुर्दिक्षु प्रथमद्वितीयपङ्क्तिस्थकोष्ठचतुष्टयं मार्जयित्वा तत्रोपान्त्यरेखाग्रद्वयावष्टम्भेन त्रिकोणं कुर्यात् । एवं कृते पञ्चषष्ठ्यधिकशतकोष्ठानि दृश्यन्ते । तेषु पूर्वपङ्क्तिस्थकोष्ठपञ्चकमध्यस्थकाष्ठमारभ्य सर्वबाह्यवीथ्यां प्रादक्षिण्येन षट्सप्तत्यधिकशतसङ्ख्येषु स्वरविकृतविद्याक्षरेष्वादितः षट्त्रिंशदक्षराण्यालिख्य तदन्तर्द्वितीयवीथ्यामपि मध्यमकोष्ठमारभ्य पूर्वलिखिताक्षरोर्ध्वं द्वात्रिंशदक्षराणि प्रागवदालिख्य तदन्तस्तृतीयवीथ्यामपि लिखिताक्षरोपरितनान्यष्टाविंशत्यक्षराण्यालिख्य तदन्तश्चतुर्थवीथ्यामपि अमुक्ताक्षरक्रमं चतुर्विंशत्यक्षराणि प्रागवदालिख्य तदन्तः पञ्चमवीथ्यां तद्वत् विंशत्यक्षराण्यालिख्य तदन्तः षष्ठवीथ्यां चत्वारि सम्भूय चतुश्चत्वारिंशदधिकशताक्षराण्यालिख्य ततः शेषाक्षरद्वात्रिंशत्केशरेषु क्रमेणैकविंशतिवर्णैः सह पञ्चविंशपटलवक्ष्यमाणपर्यायनित्यावर्णषट्कं षट्सु समालिख्य तदनु युगघटिकाक्षरद्वयं यथा सम्प्रदायमेकस्मिन् कोष्ठं समालिख्य ततो द्वादशसु कोष्ठेषु विद्याया अ(वि)धिकृतानि द्वादशाक्षराणि समालिख्यावशिष्टयोर्द्वयोः कोष्ठयोर्लिखिताक्षरद्वयमध्ये प्रागवदधस्तात्साध्यमुपरिष्टात् साधककर्मणी च समालिख्य चतुर्दिक्षु त्रिकोणेषु प्रागादिप्रादक्षिण्येन भूताक्षराणि द्वित्रिक्रमादालिख्यावशिष्ट-

महावज्रमितिख्यातं सर्वत्रैवापराजितम् ।
विजयस्तम्भविद्वेषवश्योच्चाटनकर्मसु ॥७४॥
रक्षयेत् पुष्टिशान्त्यै(१) च तथैव रिपुनिग्रहे(२) ।
देशराष्ट्रपुरग्रामनिवेशादेर्विशेषतः ॥७५॥
घोरेषुत्पातजातेषु भूमौ संलिख्य गरिकैः ।
मध्ये देवीं समावाह्य पूजयेन्नित्यशः शिवाम् ॥७६॥
सन्ध्यासु तिसृषु प्रोक्तक्रमान्नीराजनं तथा ।
कुर्यात् त्रिरावं द्विगुणं त्रिगुणं काम्यरूपतः ॥७७॥
राज्ञां वैरिविरोधेन पुरीमात्रावशेषिते ।
विभवे मण्डपे तस्य प्रोक्तवज्रं लिखेन्महत् ॥७८॥
दरदेनार्चयेत्तस्य मध्ये देवीं शुचिस्मिताम् ।
नृत्यगीतादिभिः सार्द्धं सन्ध्यासु च विशेषतः ॥७९॥
एवं प्राग्वद्दिनैरुक्तैर्विजयी नृपतिर्भवेत् ।
वैरिनाशेन वा तस्य भङ्गाद्वासनतोऽपि वा ॥८०॥
ततस्तन्मार्जयित्वा तु भाले कृत्वा पुरीं बलैः ।
प्रतीया(परीया)द्देशिकं त्वग्रे गजे जीवेच्चिरं सुखी(म्) ॥८१॥
निःसपत्नो निरातङ्कः षडङ्गः ख्यातवैभवः ।
एवमेतस्य वज्रस्य वैभवं कोनु वर्णयेत् ॥८२॥

---

विकृतविद्याक्षरैकादशकं प्राक्पश्चिमयोस्त्रयं त्रयं दक्षिणोत्तरयोर्द्वयं त्रयं चाऽऽलिखेदिति ॥६३॥६४॥६५॥६६॥६७॥६८॥६९॥७०॥७१॥७२॥७३॥

महावज्रमित्यादिभिर्वर्णयेदित्यन्तैर्नवभिः श्लोकैर्महावज्रयन्त्रप्रयोगविशेषांस्तत्फलानि चोपदिशति । तत्र प्रोक्तक्रमात्—ललिताप्रोक्तक्रमतः ॥७४॥७५॥७६॥ ॥७७॥७८॥७९॥ प्राग्वत्—दिनैः मासादिभिः । गजे स्थापयित्वेति शेषः ॥८०॥८१॥

---

(१) रक्षां पुष्टिं च शान्तिं च इति मू० पु० पा० ।　　(२) विग्रहम् सो पु० पा० ।

अथान्यद्वज्रनिर्माणं विधानं च शृणु प्रिये ! ।
येन हस्तगतेन स्युः सिद्धयोऽपि स्वहस्तगाः ॥८३॥
प्राक्प्रत्यग्दक्षिणोदक्च दशसूत्राणि पातयेत् ।
तेनैकाशीतिकोष्ठानि जायन्ते त(च्च)दपूर्ववत् ॥८४॥
मार्जयेद्दशकोणेषु शिष्टेषु विलिखेत्तथा ।
त्रिकोणानि चतुर्दिक्षु तेषु ता(न्येव)वच्च पूर्ववत् ॥८५॥
विलिखेदवशिष्टेषु मन्त्रार्णास्तद्विशस्तथा ।
एकस्मिन्मध्यमे शक्तिः जठरे साध्यमालिखेत् ॥८६॥
एतच्च पूर्वमुक्तेषु विनियुञ्ज्यान्निजेच्छया ।
न भेदस्त्वनयोरस्ति प्रयोगेषु तु सर्वतः ॥८७॥
एतद्वज्रस्य मध्यस्थं नाम कृत्वा महीभुजः ।
दशके हृदये शीर्षे संस्थाप्य समरे क्षते ॥८८॥

---

निरातङ्कः षड्ङ्गः षड्ङ्गानि नाम अमात्यराष्ट्रदुर्गकोशबलसुहृत्संज्ञानि स्वाम्युपसर्जनानि । अन्यत्सुगमम् ॥८२॥

अथेत्यादिभिरालिखेदित्यन्तैश्चतुर्भिः श्लोकैर्वज्रान्तरनिर्माणमुपदिशति । तत्र पूर्ववत् । वज्राकारेण दशकोणेषु तेषु कोष्ठेषु चतुर्षु कोणेषु प्रतिकोणं दश कोष्ठानि मार्जयेदित्यर्थः । शिष्टेषु कोष्ठेषु । तथाप्रतिदिशं एकं कोष्ठं मार्जयेदित्यर्थः । त्रिकोणानि विलिखेदिति सम्बन्धः । तानि कर्मानुरूपाणि भूताक्षराणि । अवशिष्टेषु सप्तत्रिंशत्सङ्ख्येषु कोष्ठेषु मन्त्रार्णान् द्वादशेति शेषः । द्विशः द्वयं द्वयम् । तथा—प्रागादि प्रादक्षिण्येन । शक्तिजठरे—ह्रींलेखामध्ये । लिखनक्रमो यथा—प्राक्प्रत्यग्दक्षिणोदक्च समान्तरालानि दशदशसूत्राण्यास्फाल्य तत्र पूर्ववत्प्रतिकोणं बाह्यवीथ्यां सप्तकं तदन्तर्द्वितीयवीथ्यां द्वयं तदन्तस्तृतीयवीथ्यामेकमेवं क्रमेण दशकोष्ठान्यभितोमार्जयित्वा चतुर्दिग्गतकोष्ठचतुष्टयं मार्जयित्वा तत्र त्रिकोणानि विधाय त्रिकोणेषु तेषु प्राग्वत् भूताक्षराण्यालिख्य ततस्तेषु सप्तत्रिंशत्कोष्ठेषु द्वयं द्वयं मन्त्राक्षराणि प्राग्वत् षडावृत्त्या विलिखेत् सर्वमध्यगते कोष्ठे ह्रींलेखां ससाध्यां लिखेदिति ॥८३॥८४॥८५॥८६॥

निहत्य वाहिनीं शत्रोश्चतुरङ्गां महीभुजः ।
अक्षतारोगसर्वाङ्गो यशोलक्ष्मीधनान्वितः ॥८८॥
निर्वर्त्य सुचिरं जीवेद्भोगी भूमौ निजेच्छया ।
एतत्ताम्रतले(१) कृत्वा स्थापयेदभिवृद्धये ॥९०॥
विधाय वृत्तयोर्मध्ये षट्कोणं तस्य मध्यतः ।
बाह्ये कृत्वा च विद्याया बीजमाद्यमथान्तिम्(२) ॥९१॥
षट्सु कोणेषु तु पुनरग्रपश्चिमयोर्लिखेत् ।
एकैकं पार्श्वकोणेषु द्वे द्वे(३)वृत्तान्तरा पुनः ॥९२॥
मातृकां विलिखेदादिक्षान्तां(४) बिन्दुसमन्विताम् ।
मध्यबीजस्य मध्यस्थं लिखेत्तं निजवाञ्छितम् ॥९३॥
भर्तृदमनभीतानां(५) कुमारीणामिदं भुजे ।
कण्ठे वा धारयेत्सद्यो वल्लभा तस्य जायते ॥९४॥
स्वरप्रसारितैर्मन्त्रवर्णैः पद्मानि कारयेत् ।
वृत्ताष्टपत्रयुक्तानि षोड़शानि मनोहरम्(६) ॥९५॥

---

एतदित्यादिभिः अभिवृद्धये इत्यन्तैश्चतुर्भिः श्लोकैस्तत्प्रयोगान् तत्फलानि चोपदिशति। तत्र दंशकः—कवचः। अन्यत् सुगमम् ॥८७॥८८॥८९॥९०॥

विधायेत्यादिभिर्जायत इत्यन्तैश्चतुर्भिः श्लोकैः सौभाग्यकरं यन्त्रमुपदिशति। तत्र एतदुक्तं भवति—यथामानं षट्कोणं कृत्वा तदन्तर्वृत्ताद्बहिरेकैकाङ्गुला-(माना)न्तरालं वृत्तद्वयं कृत्वा तत्रान्तर्वीथ्यां यथासम्प्रदायं ह्रल्लेखावेष्टनं तद्बाह्यवीथ्यां मातृकाक्षरवेष्टनं अग्रादिप्रादक्षिण्येन कुर्यात् इति। अन्यत् सुगमम्। अत्र तन्त्रे सर्वह्रल्लेखावेष्टनं क्रूरेषु कर्मसु रेफांशेन कुर्यात्, अन्यत्र चतुर्थस्वरांशेन कुर्यात् ॥९१॥९२॥९३॥९४॥

स्वरप्रसारितैरित्यादिभिरवाप्नये इत्यन्तैः षड्भिः श्लोकैः षोड़श पद्मान्युप

---

(१) ताम्रदले इति मू० पु० पा।
(२) भाद्य' तथान्तिकाम् इति सो० पु० पा०।
(३) द्वौ द्वौ इति मू० पु० पा०।
(४) दादिक्षान्तां इति सो० पु० पा०।
(५) भर्तृदर्शनभीतानामिति मू० पु० पा०
(६) मनोहराम् इति सो० पु० पा०।

कर्णिकासु च पत्रेषु लिखेदेकैकमक्षरम् ।
कर्णिकार्णस्य मध्यस्थं कुर्यान्नाम निजेप्सितम् ॥९६॥
घटिकाक्षरसंयुक्तं विनियुञ्ज्यात्तु नित्यशः ।
अहोरात्रं षोडशधा कृत्वा तां तेषु* योजयेत् ॥९७॥
समस्तं वाञ्छितं तत्तत्तन्मध्ये विलिखेत्तदा ।
धारयेदभिषिञ्चेच्च ज(युर्ज)पेदिष्टार्थसिद्धये ॥९८॥
प्राक्प्रत्यक्दक्षिणोदक्च पञ्च सूत्र निपातनात् ।
कोष्ठानि षोडशानि स्युस्तेषु पद्मानि कारयेत् ॥९९॥
प्रागुक्तेषु विधायैवमर्चयेद्यामतः(१) क्रमात् ।
देवीं तु स्थापयेद्भूमौ सर्वसम्पदवाप्तये ॥१००॥
(२)पायुतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

---

दिशति। तत्र प्रागुक्तेषु—सुवर्णादिष्वधिकरणेषु। एतदुक्तं भवति—विद्याया अनावृत्तान्येकादशाक्षराणि स्वरप्रसारणात् षट्सप्तत्यधिकशतसङ्ख्यानि भवन्ति। तेष्वक्षरेष्वादितः प्रथममक्षरं कर्णिकामध्ये विलिख्य तदक्षरमध्ये द्वितीयमक्षरं, तत्र तदधोघटिकाक्षरस्थाने तृतीयमक्षरं, बहिरष्टसु दलेषु अग्न्यादिप्रादक्षिण्येन अष्टाक्षराणि, एवमेकादशाक्षराणि अहोरात्रस्य षोडशात्मकेषु खण्डेषु प्रथमखण्डस्य तत्तद्घटिकाक्षरं तत्र तदातदा विलिखेत्। एतत् प्रथमं पद्मम्। अनन्तरं पूर्वलिखिताक्षरैकादशकादुपरितनं एकादशकं प्राग्वद्विलिख्य अहोरात्रस्य द्वितीयखण्डस्य तत्तद्घटिकाक्षरं प्राग्वद्विलिखेत्। एतद्द्वितीयं पद्मम्। एवं क्रमेणान्यानि चतुर्दश पद्मानि कृत्वा तत्र तत्र तदा तदा देवीपूजनादिष्टावाप्तिः। तानि षोडशपद्मानि स्वर्णादिषोडशकोष्ठात्मके मण्डले प्रतिकोष्ठमेकैकं प्राग्वद्विलिख्य पूजनाच्च प्रागुक्ता सिद्धिरिति ॥९५॥९६॥९७॥९८॥९९॥१००॥१०१॥

---

(१) यामनुक्रमात् इति मू० पु० पा०। (२) वायुतत्त्वेति मू० पु० पा०।

* तांस्तेषु इति मू० पु० पा०।

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमते द्वादशटलं
परिपूर्णं परामृष्टम् ॥१२॥

---

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य प्रपञ्च-
सारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां महावज्रेश्वरीनित्याविद्याविधान-
प्रकाशनपरं द्वादशपटलं परिपूर्णं
परामृष्टम् ॥ १२ ॥

ग्रन्थसङ्ख्या—

एकोनविंशद्यन्त्राणि व्याख्याग्रन्थाः शतात्परम् ।
द्वादश स्युरिहैवेत्थं द्वादशे पटले स्मृताः ।

---

## अथ त्रयोदशपटलम् ।

अथ षोड़शनित्यासु या प्रोक्ता त्वष्टमी तदा ।
तद्विधानं शृणु प्राज्ञे ! समीहितफलप्रदम् ॥१॥
विद्योद्धारः कृतः पूर्वमथ न्यासक्रमं तथा ।
तदावरणशक्तिश्च तद्ध्यानं तत्प्रपूजनम् ॥२॥
तत्साधनं तत्प्रयोगान् होमयन्त्रादिभिस्तथा ।
प्राणप्रतिष्ठां विद्यां च तद्विधानं च तत्फलम् ॥३॥
क्रमेण वच्ये संप्रोक्तान्यशेषेण महेश्वरि ! ।
यैर्मन्त्रैर्भुवने ख्यातो निग्रहानुग्रहक्षमः ॥४॥
कुर्यात् प्राग्वत् षड़ङ्गानि विद्याद्येनोक्तमार्गतः ।
तेनैव पुटितैर्वर्णैर्न्यसेच्छ्रोत्रादिपञ्चसु* ॥५॥
षष्ठं मनसि विन्यस्य व्यापकं विद्यया न्यसेत् ।
प्राग्वदर्घ्यं समुद्दिष्टं तच्छक्ती शृणु पार्वति ! ॥६॥

---

### अथ त्रयोदशपटलम् ।

पूर्व्वस्मिन् द्वादशे पटले सप्तम्या महावज्रेश्वरीनित्या विद्याया विधानमुपदिश्यानन्तरमष्टम्या शिवदूतीनित्याविद्याया विधानमुपदिशति । अथ षोड़शेत्यादिविधानकमित्यन्तेन श्लोकशतरूपेण त्रयोदशेन पटलेन । तत्र अथ षोड़शेत्यादिभिः क्षम इत्यन्तैः चतुर्भिः श्लोकैः पटलार्थानुद्दिशति । तत्र पूर्वं—तृतीये पटले । अन्यत् सुगमम् ॥१॥२॥३॥४॥

कुर्यादित्यादिना पार्वतीत्यन्तेन श्लोकद्वयेन न्यासविधिं अर्घ्यसाधनादिकं(१) चोपदिशति । तत्र उक्तमार्गतः—दीर्घस्वरषट्कजातियुक्तेनेत्यर्थः । तेनैव—ह्स्ख्रें-रूपया । श्रोत्रादिपञ्चसु—यथाक्रमं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्येषु इति शेषः ॥५॥ तत्र त्वचि सर्वाङ्गेषु उक्तेषु स्थानेषु ह्स्ख्रें रूपापुटितेनैकैकेन वर्णेन न्यसेदित्यर्थः ॥६॥

---

(१) अर्घ्यस्थापनादिकमिति वं पु० पा० । अर्घ्यसाधारणादिकमिति सो० पु० पा० ।
* पञ्चकमिति मू० पु० पा० ।

विह्वला कर्षिणी लोला नित्या मदनमालिनी ।
विनोदा कौतुका पुण्या पुराणा चतुरस्रगाः(१) ॥७॥
वागीशा वरदा विश्वा विभवा विघ्नकारिणी ।
वीरा विघ्नहरा विद्येत्युक्ता यन्त्राष्टशक्तयः(२) ॥८॥
सुमुखी सुन्दरी सारा समरा च सरस्वती ।
समया सर्वगा सिद्धेत्युक्ता अष्टास्रशक्तयः(३) ॥९॥
डाकिन्याद्याः षडस्रेषु सर्वास्त्वग्रात्प्रदक्षिणम् ।
मूलदेवीसमाकारवर्णायुधसमन्विताः ॥१०॥
शिवां वाणीं दूरसिद्धां त्वैविग्रहवतीमपि ।
नादां मनोमयीं(४)षट्सु पत्रेषु परितोऽर्चयेत् ॥११॥
इच्छाज्ञानक्रियाशक्तीः स्वेषु कोणेषु पूजयेत् ।
मध्ये देवीं हेतिवृत्तां(५) पूजयेदष्टमीं शिवाम् ॥१२॥
तस्या ध्यानं शृणु प्राज्ञे ! यन्मयं विश्वमीरितम् ।
तथापि भक्तसन्त्राणहेतोः(६) कल्पितां परां तनुम् ॥१३॥

---

विह्वलेत्यादिभिः शिवामित्यन्तैः षड्भिः श्लोकैर्देव्याः परिवारशक्तीरुपदिशति । तत्र मदनमालिनी—मदना मालिनी चेति द्वे शक्ती । चतुरस्रगाः—चतुरस्रद्वारयुगस्य पार्श्वयोः प्रत्येकं द्वयं द्वयमेवं चतुष्टयं—कोणचतुष्टये चतुष्टयम् । उत्तरदक्षिणदिशोर्द्वयं एवं दश चतुरस्रगाः—चतुरस्रस्थिता इत्यर्थः॥७॥ यन्त्राष्ट(क)शक्तयः अष्टयन्त्रस्थशक्तयः ॥८॥९॥ सर्वाइत्युक्त्या अत्र डाकिन्याद्याश्च अग्रादारभ्य प्रादक्षिण्येनार्चयेत् । तच्छक्त्यवस्थानन्तु प्राग्वन्निरृतिकोणादिषु—तेन हाकिनीराकिनी साकिनी-लाकिनी-डाकिनी इत्येवं पूजाक्रमः ॥१०॥ शिवामित्यादयो विद्याया द्वितीयाक्षरादिनामशक्तयः । त्वैविग्रहवती त्वैविग्रहेत्यर्थः ॥११॥ हेतिपूजनं तत्तन्नामभिः समाचर्यन्तैर्वाह्याादिनिरृत्यन्तं प्रादक्षिण्येन ॥१२॥

---

(१) नूपुराणाचरस्रगा इति सो° पु° पा° ।
(२) स्वष्टाश्रशक्तय इति मू° पु° पा° ।
(३) संशय इति सो° पु° पा° ।
(४) मनोन्मनीं इति मू° पु° पा ।
(५) हृत्ते इति मू° पु° पा° ।
(६) भक्त्यामन्त्राणं इति सो° पु° पा° ।

निदाघकालमध्याह्नदिवाकरसमप्रभाम् ।
नवरत्नकिरीटां च तीक्ष्णा*मरुणाम्बराम् ॥१४॥
नानाभरणसम्भिन्नदेहकान्तिविराजिताम् ।
शुचिस्मितामष्टभुजां स्तूयमानां महर्षिभिः ॥१५॥
पाशं खेटं गदां रत्नचषकं वामबाहुभिः ।
दक्षिणैरङ्कुशं खड्गं कुठारं† कमलं तथा ॥१६॥
दधानामाधुकाभीष्टदानोद्यमसमन्विताम् ।
ध्यात्वैवं पूजयेद्देवीं दूतीं दुर्नीतिनाशिनीम् ॥१७॥
वृत्तद्वयं बहिस्त्र्यस्रं तद्द्वयं षड्दलाम्बुजम् ।
तथा षडस्रमष्टास्रं तद्वदष्टदलाम्बुजम्(१) ॥१८॥
भुपुरे वह्निवासिन्या कृत्वा तन्मध्यगां शिवाम् ।
आवाह्याभ्यर्च्य ताः शक्तीः प्रागुक्तविधिना स्थिताः ॥१९॥
जप्त्वा हुत्वा नमस्कृत्य स्वात्मन्युद्वासयेत्तथा ।
साधनं चोक्तमार्गेण कुर्याद्विद्वमतन्द्रितः ॥२०॥
काम्यहोमविधिं देवि ! शृणु सङ्कल्पसिद्धिदम् ।
येनासौ वाञ्छितं क्षिप्रमवाप्नोति सुनिश्चितम् ॥२१॥

---

तस्या इत्यादिभिर्नाशिनीमित्यन्तैः पञ्चभिः श्लोकैर्देव्या नित्यपूजाविधानमुपदिशति। तत्र परां तनुं शृणु इति पूर्वेणान्वयः। एतत्—सर्वदेवतासमानम्। भुजेषु—पाशाङ्कुशादिकं ऊर्ध्वादिवामदक्षिणक्रमेण कल्पयेत्। कह्लारं‡ असिधेनुः। दुर्नीतिनाशिनीं—सम्यक् विवेकप्रदानात् ॥१३॥१४॥१५॥१६॥१७॥

वृत्तद्वयमित्यादिभिरतन्द्रित इत्यन्तैस्त्रिभिः श्लोकैर्नित्यपूजाचक्रं तत्र पूजानिगमनं विद्यासाधनाति(२) देशं चोपदिशति। तत्र भूपुरे चतुरस्रद्वयं वह्निवासिनीनित्यासपर्याचक्रवत् चतुरस्रद्वयं कुर्यात् इत्यर्थः। अन्यच्चक्रनिर्माणं

---

(१) दष्टच्छदाम्बुजाम् इति मू० पु० पा०।   * तीक्ष्णामिति मू० पु० पा०।
† कह्लारमिति मू० पु० पा०।   ‡ कह्लारमिति व० पु० पा०।
(२) विद्यासाधनानिर्देशं इति सो० पु० पा०।

वशयेद्वनितां होमाद्गुग्गुलैर्मधुमिश्रितैः ।
नालिकेरफलोपेतैर्गुडैर्लक्ष्मीमवाप्नुयात् ॥२२॥
तथाज्यसिक्तैः कह्लारैः चीराक्तैररुणोत्पलैः ।
त्रिमध्वक्तैश्चम्पकैश्च प्रसूनैर्वकुलोद्भवैः ॥२३॥
मधूकजैः प्रसूनैश्च हुतैः कन्यामवाप्नुयात् ।
पुन्नागजैर्हुतैर्वस्त्राण्याजैरिष्टमवाप्नुयात् ॥२४॥
माहिषैर्महिषानाज्यै राज्यैर्गव्यैश्च गास्तथा ।
अवाप्नोति हुतैः साज्यै(१) रत्नै रत्नं च साधकः ॥२५॥
शालिपिष्टमयीं कृत्वा पुत्तलीं सितसंयुताम् ।
हृद्देशन्यस्तनामार्णां पचेत्तैलाज्ययोर्निशि ॥२६॥
तामनश्नन्(२) दिवा रात्रौ विद्याजप्तां तु भक्षयेत् ।
सप्तरात्रप्रयोगेन नरो नारी नृपोऽथ वा ॥२७॥
दासवद्वशमायाति वित्तप्राणादिमर्पयेत् ।
हयारिपुष्पै रक्तैः सितैर्वा जुहुयात्तथा ॥२८॥
त्रिसप्तरात्रान्महतीमवाप्नोति श्रियं नरः ।
छागमांसं त्रिमध्वक्तैर्होमात्स्वर्णमवाप्नुयात् ॥२९॥

---

सुगमम्॥१८॥१९॥ तथा-यथा ललितायाः प्रोक्तमार्गेण युगानुरूपमक्षरत्रिलक्षादिकं प्राग्वत् ॥२०॥

काम्येत्यादिभिर्दिनैरित्यन्तैर्दशभिः श्लोकैर्द्रव्यविशेषहोमात् फलविशेषप्राप्तिमुपदिशति। तत्र अरुणोत्पलं प्राग्वद्रक्तकैरवम्। मधूकात्पूर्वाणि गुडादीनि पञ्चद्रव्याणि लक्ष्मीकराणि ॥२१॥२२॥२३॥ पुन्नागजैः—प्रसूनैरितिशेषः। चम्पकादीनां पुन्नागान्तानां चतुर्णां द्रव्याणां त्रिमधुश्लेषं कुर्यात् ॥२४॥ माहिषैरित्यादीनि आज्यैरित्यस्य विशेषणानि ॥२५॥ सितसंयुतां—शर्करासहिताम्। तैलाज्ययोर्मिश्रीभूतयोरितिशेषः ॥२६॥ अनश्नन्—अन्नमितिशेषः ॥२७॥ हयारिपुष्पैः—करवीरैः।

---

(१) हुतैराज्यैरत्नैरत्नंचैति सू० पु० पा०। (२) तामजस्रमिति मी० पु० पा०।

क्षीराक्तैः सस्यसम्पन्नां भुवमाप्नोति मण्डलात् ।
पद्माक्तैर्हवनाल्लक्ष्मीमवाप्नोति त्रिभिर्दिनैः ॥३०॥
अथ यन्त्राणि वक्ष्यामि नानाभीष्टप्रदानि तैः ।
शृणु तेषु विधानानि समाहितमनां शिवे ! ॥३१॥
दूतीनित्याक्षरेषु स्युरनाक्त्तानि वै दश ।
तैः षोडशस्वरयुतैः षष्ट्याशतमुदीरितैः ॥३२॥
चतुरस्रद्वयं कृत्वा तदन्तर्वृत्तयुग्मकम् ।
तदन्तरष्टकोणं च तदन्तर्वृत्तयुग्मकम् ॥३३॥
कृत्वा तत्र लिखेन्मध्ये विद्याद्यं नामसंयुतम् ।
वृत्तयोरन्तराशेषं बहिः कोणेषु चाष्टसु ॥३४॥
लिखेद्द्वे ऽक्षरे तेषु बाह्यवृत्तद्वयान्तरा ।
कर्मानुरूपान् भूतार्णान् दशभूपुरमध्यतः ॥३५॥
मातृकां विलिखेद्दिक्षु द्वादश द्वादश क्रमात् ।
अन्त्यं चतुर्षु कोणेषु शेषाणां च विलिखने ॥३६॥

---

वा पक्षान्तरे ॥२८॥ त्रिसप्तरात्रान्—एकविंशतिदिनान् । क्षीराक्तैः छागमांसैरित्यन्वयः । छागोमेषः ॥२९॥३०॥

अथ यन्त्राणीत्यादिभिर्वै इत्यन्तैः सप्तभिः श्लोकैः दशयन्त्राणि उपदिशति । तत्र एतदुक्तं भवति—इष्टप्रमाणक्रमेण वृत्तद्वयं निष्पाद्य तद्बहिरष्टकोणं प्राग्वद्विधाय तत्कोणाग्रस्पृष्टास्पृष्टिकया वृत्तद्वयं विधाय तद्बहिरन्तर्बहिर्विभागेन द्व्यङ्गुलान्तरालं समचतुरस्रद्वयं निष्पाद्य सर्वमध्ये विद्यायां हृल्लेखां सनामाक्षरामालिख्य अ(धि)विकृतविद्याशेषाक्षरषट्कमन्तर्वृत्तवीथ्यामालिख्य स्वरविकृताक्षरेषु षष्ट्यधिकशतसङ्ख्येषु आदितः षोड़शाक्षराणि बहिरष्टसु कोणेषु प्रतिकोणमग्रमारभ्य प्रादक्षिण्येन द्वयं द्वयं समालिख्य बाह्यवृत्तवीथ्यामपि कर्मानुरूपं भूताक्षराणि तथा समालिख्य बहिश्चतुरस्रवीथ्यां तथैव मातृकाक्षराणि प्रतिदिशं द्वादश द्वादश ईशाग्निनिर्ऋतिवाय्वादि समालिखेत् । तद्विलिखने तु तेषु मातृकाक्षरेषु स्वराणामन्त्ययोर्विन्दुविसर्जनीययोर्विन्दुचतुर्दशसु स्वराक्षरेषु संयोज्य विसर्जनीयं

स्वरैर्विन्दुं समायोज्य योजयेद्राञ्जने* परम्।
एवं यन्त्राणि जायन्ते दशसिद्धा(१)स्पदानि वै ॥३७॥
प्रथमं गैरिकैः कृत्वा तत्रावाह्य शिवां यजेत्।
सप्तम्यां त्रिषु(२) सन्ध्यासु सितापूपसमन्वितम् ॥३८॥
कृत्वा निवेद्यं पयसः प्रातर्मध्यन्दिने तथा।
दधिभक्तन्तु† सायन्तु चीरं मोचाफलं तथा ॥३९॥
एवं मण्डलमर्द्धं वा कुर्यात् पूजां समाहितः।
वाञ्छितं प्राप्नुयाद्देव्याः प्रसादेनाल्पयत्नतः ॥४०॥
द्वितीयं दरदैः कृत्वा तत्रावाह्याथ तद्दिने।
सुपक्वं छागमांसेन चौद्रमन्नं निवेदयेत् ॥४१॥
तावद्भजे(३)न्महीपालं वशे कर्तुमयत्नतः।
तथैव वनितां हृद्यां वशयेद्यावदायुषः ॥४२॥
तृतीयमपि सिन्दूरैर्विधायावाह्य तत्र ताम्(४)।
तावद्दिनं तथाऽभ्यर्च्य वशयेद्द्विविधान् रिपून् ॥४३॥

---

कादिलान्ताक्षरेषु चतुस्त्रिंशत्सु संयोज्य अन्त्यं क्षकारं चतुरस्रकोणे चतुष्काभ्यन्तरे अष्टकोणबहिर्वृत्तद्वयाद्बहिः सविसर्जनोयमालिखेत्। एतत् प्रथमं यन्त्रम्। द्वितीयादीनि यन्त्राणि अस्यैव यन्त्रस्याष्टकोणेषु द्वितीयाक्षरादिषो शकं प्राग्वदालिखेत्। अन्यानि दश सुसमा(ना)नीति ॥३१॥३२॥३३॥३४॥३५॥॥३६॥३७॥

प्रथममित्यादिभिः समीरिता इत्यत्यन्तैरध्यर्धैस्त्रयोविंशति(भिः) श्लोकैर्दशविध-यन्त्रप्रयोगांस्तत्फलानि चोपदिशति। तत्र—प्रथमे यन्त्रे। यजेत - नित्यक्रमतः। सिता—शर्करा ॥३८॥ पायसादीनि त्रीणि निवेद्यद्रव्याणि यथाक्रमं सन्ध्या-त्रये निवेदयत् इत्यर्थः ३९॥ एवमर्द्धं—मण्डलार्द्धम् ॥४०॥ दरदैः—जातिलिङ्गैः। तद्दिने—सप्तम्याम् ॥४१॥ तावत्—प्रागुक्तमण्डलादि। भजेत्—नित्यक्रमतः। अत्र-

---

(१) सिद्ध्यास्फुटानि इति मू० पु० पा०। (२) नृषु इति मू० पु० पा०।
(३) इवे न्मही इति मू० पु० पा। (४) तमिति मू० पु० पा०।
* द्राञ्जनै इति मू० पु० पा०। † भक्ताश्वमांसन्तु इति मू० पु० पा०।

चतुर्थं कुङ्कुमैः कृत्वा तत्र मध्येऽर्चयेत्तथा ।
सप्ताहादापदः सर्वाः प्रयान्त्यस्याः प्रसादतः ॥४४॥
पञ्चमं चन्दनैः कृत्वा तन्मध्ये पूजयेच्छिवाम् ।
केवलं पायसं मोचां सितां घृतसमन्विताम् ॥४५॥
निवेदयंस्त्रिसन्ध्यासु मासाद्रोगानशेषतः ।
जित्वा सुखी चिरं जीवेच्छेषमायुर्निरामयः ॥४६॥
अभिषिञ्चेच्च तत्रैव कुम्भं संस्थाप्य तैर्यजन् (जंयम्) ।
कृत्वा तस्मै दक्षिणां च दद्या(द्द्रव्य)द्भूरि स्वशक्तितः ॥४७॥
प्राणप्रदाते तस्मै तु दद्यात्सर्वस्वमेव वा ।
येनासौ तोषमायाति तावद्वित्तं समर्पयेत् ॥४८॥
षष्ठं कर्पूरसंयुक्तं पटीरैरालिखेत्ततः ।
मस्तृणे वा शिलापट्टे पीठे वा सौधभूतले ॥४९॥
अन्नाज्यं पायसापूपव्यञ्जनानि निवेदयेत् ।
पूजयेत्त्रिषु सन्ध्यासु जपन्विद्यां तथा वशी ॥५०॥
त्रिसप्तरात्रमात्रेण ज्वराद्वीमाभिचारजात् ।
मुच्यन्ते प्राणिनोऽचिन्त्याः शक्तयो मन्त्रयन्त्रयोः ॥५१॥
सप्तमं ताम्रपट्टे तु कृत्वाऽऽवाह्याभिपूज्य वा(१) ।
स्थापयेन्मन्दिरे तस्मिँल्लक्ष्मीरास्तेऽतिसुस्थिरा ॥५२॥
अष्टमं राजते कृत्वा बिभृयात् सर्वसम्पदे ।
नवमं हैमगं कृत्वा भूषादौ धारयेच्छिवे* ! ॥५३॥

---

प्रकरणे सर्वा(त्रा)र्चनं नित्यक्रमतः । तथैव—पूर्ववत् । द्वितीययन्त्रे पूजनात् ॥४२॥ तावद्दिनं—प्राग्वत् । तथा—द्वितीययन्त्रपूजानिवेद्यद्रव्यसहितम् । द्विविधान्—सहजकृत्रिमान् । तत्र सहजः—स्वकुलोत्पन्नः, कृत्रिमस्त्वापराधकृत् ॥४३॥ तथा—

---

(१) कृत्वाऽऽवाह्यानि पूजयेत् इति मू० पु० पा० ।  * क्रिये इति मू० पु० पा० ।

दशमे सर्वकार्य्याणि साधयेदर्चयन् शिवाम्।
यद्यद्धि वाञ्छितं कार्य्यं तत्तन्मध्यगतं तथा ॥५४॥
कृत्वा तां पूजयेत्तत्र तत्कार्यं हृदये स्मरन्।
तद्दिनैस्तदवाप्नोति नात्र कार्या विचारणा ॥५५॥
दशैव तानि यन्त्राणि भूर्जे कृत्वाऽभिपूज्य च।
सिक्थनिर्मितपात्रस्थचौद्रमध्ये निवेश्य तत् ॥५६॥
त्रिसन्ध्य(१)मर्चयेद्रक्तगन्धपुष्पैः समाहितः।
साध्यस्याभिमुखो विद्यां जपन्नित्यमनुस्मरन्(रेत्) ॥५७॥
पाशेन कण्ठमाबध्य यान्ति(पाति) तं निजपादयोः।
न्यस्ताञ्जलिकरं शीर्षे दासोऽहमितिवादिनम् ॥५८॥
त्रिसप्तरात्राद्वश्याः स्युर्नरनारीनृपादयः।
तदेव कोष्णं कृत्वा च(२) सन्ध्यासु त्रिषु नित्यशः ॥५९॥
कामार्ता वनिताः काम(३)ज्वरतप्ताशयात् शनैः।
कुलं लज्जां विवेकं च परित्यजास्य किङ्कराः ॥६०॥
भवेयुरिति यन्त्राणां प्रयोगास्ते समीरिताः।
प्राणप्रतिष्ठाविद्यां ते वक्ष्येऽहं शृणु पार्वति ! ॥६१॥

---

प्रागुक्तनिवेद्यद्रव्यसहितम्॥४४॥ पायसादि प्रतिसन्ध्यमेकैकम् ॥४५॥४६॥ तैः—यन्त्रविलिखितविद्याक्षरैः। तस्मै—अभिषेक्त्रे ॥४७॥ असौ—अभिषेक्ता ॥४८॥४९॥ अन्नादि प्रतिसन्ध्यं सर्वम्। जपन्—शतं सहस्रं वा ॥५०॥५१॥५२॥५३॥ तन्मध्यगतं—दशमयन्त्रमध्यगतम्। तथा—प्राग्वत् ॥५४॥ तां—दूतीनित्याम्। तद्दिनैः—प्राग्वन्मण्डलादिभिः ॥५५॥ दशैव तानि—प्रत्येकमितिशेषः। अभिपूज्य—प्राणप्रतिष्ठापुरःसरं तत्तल्लिखिताक्षरैः। सिक्थं—मधूच्छिष्टम्। तत्—यन्त्रमितिशेषः ॥५६॥ इत्थमिति वक्ष्यमाण प्रकारतः ॥५७॥५८॥ तदेव—यन्त्राधिष्ठितं क्षौद्रम् ॥५९॥ अस्य—प्रयोक्तुः ॥६०॥ भवेयुरिति पूर्वत्रान्वयः।

---

(१) त्रिसन्धिम इति मू० पु० पा०। (२) तद्दैवकोष्ठं कुर्याच्च इति मू० पु० पा। (३) तीव्रज्वरेति मू० पु० पा०।

वातो नभोधरायुक्तः स्पर्शो व्याप्तेन संयुतः ।
जवी दाहमरुद्युक्तो व्योमापि मरुता युतम् ॥६२॥
अग्निर्हंसश्च पूर्वार्णौ(१) पश्चादादित्रयं तथा ।
ज्यावह्नियुक्ताथोऽम्बु स्यात् षष्ठसप्तमकौ पुनः ॥६३॥
हृच्छिख्यग्नियुतं माया रयगादित्रयं पुनः ।
हृद्दाहाम्बुचरैः खेन गोत्रादाहाग्निभिः परम् ॥६४॥
व्याप्तं मरुत्समोपेतं व्योमाग्निगमनन्तरम् ।
पुनराद्यत्रयं चाम्बुमरुद्व्युनभसा युतम्(२) ॥६५॥
शून्यं मायान्वितं पश्चाच्चतुर्थं पञ्चमं तथा ।
अग्निर्हंसो मरुद्युक्तो व्याप्तं च मरुता युतम् ॥६७॥
खं स्याद्द्रयधरायुक्तं हृदम्बुमरुदन्वितम् ।
हंसश्च मरुता युक्तश्चत्वारिंशल्लिपिर्मनुः ॥६८॥

---

प्राणेत्यादिना श्लोकोत्तरार्द्धेन सर्वतन्त्रसाधारणां प्राणप्रतिष्ठा विद्यां प्रस्तौति ॥६१॥

वात इत्यादिभिर्मनुरित्यन्तैः षड्भिः श्लोकैश्चत्वारिंशदक्षरां प्राणप्रतिष्ठा-विद्यामुपदिशति । तत्र वातः—अकारः । नभोधरायुक्तं—मुइति । स्पर्शोव्याप्तेन संयुतः—ष्य इति । जवी दाहमरुद्युक्तः—प्रा इति । व्योमापि मरुतायुतम्—णइति॥६२॥ अग्निः—ईकारः । हंसो—हः । पूर्वार्णौ इत्यस्य पूर्ववर्णौ प्राणा इति । आदित्रयं—अमुष्य इति । ज्या वह्नियुक्ता—जी इति । अम्बु—वकारः । षष्ठ सप्तमकौ इ ह इति॥६३॥अथ हृच्छिख्यग्नियुतं—स्थि इति । माया—विसर्जनीयः । र य गा तकारोपरिस्थिता त—इति । आदित्रयं—प्राग्वत् अमुष्य इति अक्षरत्रयम् । हृत्—सकारः । दाहाम्बुचरैः खेन—र्वे इति । इत्येकं(व) त्रयो-विंशमक्षरम् । गोत्रादाहाग्निभिः परं(द्रि)त्रि इत्येतत् चतुर्विंशमक्षरम् । त्रि(न्द्रिय) इत्यत्र आदौ विन्दुः सम्प्रदायप्राप्तः॥६४॥ व्याप्तं मरुत्समोपेतं—या इति । व्योमा-ग्निगमनन्तरं-णि इति षड्विंशमक्षरम् । आद्यत्रयं—अमुष्य इत्यक्षरत्रयम् । अम्बु-

---

(१) पूर्वाख्यौ इति मू० पु० पा० । (२) तासायुतमिति मू० पु० पा०

यादिसप्ताक्षरैः कुर्यात् षडङ्गानि द्वियोगतः।
त्वगादिषु च तान्येव न्यसेच्छक्तिपुटस्थितम्(१) ॥६९॥
ध्यायेद्देवीं प्राणशक्तिमरुणामरुणाम्बराम्।
अरुणाकल्पमुकुटामरुणाधरपल्लवाम् ॥७०॥
अरुणायतनेत्राब्जयुग्मचारुस्मिताननाम्।
प्रसूनपिण्डं पाशं च दधानां पाणियुग्मतः ॥७१॥
स्वसमानाभिरभितो वेष्टितां दशशक्तिभिः।
अनन्तशक्तियुक्ताभिः पूजयेत्पद्ममध्यतः ॥७२॥

---

मरुत्—अम्बुसहितोमरुदित्यर्थः वा इति। व्युनभसायुतंङ्म इति। एकत्रिंशमक्षरमितिशेषः (जम)इति ॥६५॥ शून्यं मायान्वितं—माया विसर्जनीयः नः इति। चतुर्थं प्रा इति। पञ्चमं—णइति। अग्निः—ईकारः। हंसोमरुद्युक्तः—ह्वा इति। व्याप्तं च मरुतायुतं—या इति॥६७॥ खं स्याद्वयधरायुक्तं न्नु इति। हृदम्बुमरुदन्वितं—स्वाइति। हंसश्च मरुतायुक्तः—ह्वा इति। एवं चत्वारिंशदक्षरः प्राणप्रतिष्ठामन्त्रः। एषं सर्वतन्त्रेषु सर्वयन्त्रपुत्तलिकाभिषेककुम्भदेवतावेशादीनां प्राणप्रतिष्ठामन्त्रः ॥६८॥

यादीत्यादिना श्लोकेन प्राणप्रतिष्ठाविद्याया षड़ङ्गादिन्यासमुपदिशति। तत्र द्वियोगतः—अक्षरद्वययोगतः। तद्यथा—(य)राभ्रां हृदयं,रलाभ्यां शिरः,लवाभ्रां शिखा, वसाभ्रां कवचं,शषाभ्रां नेत्रं,षसाभ्रामस्त्रं, एवं षड़ङ्गानि जातिभिः सहितं कुर्यादित्यर्थः। त्वगादिषु—त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रेषु सप्तसु धातुषु। तान्येव—प्रागुक्तानि यादि(सा)शान्तानि सप्ताक्षराणि। शक्तिपुटस्थितं—एतत्क्रियाविशेषणम्। सप्तसु प्रत्यक्षरं ह्रुंस्वाःपुटितं यथा स्यात्तथा तत्तन्नामयुक्तेषु ह्रद्दोर्दयमूलापरमङ्गलकद्वादयहृदादिपाणिपादयुगाख्येषु स्थानेषु हृदय एव वा न्यसेदिति सम्प्रदायार्थः ॥६९॥

ध्यायेदित्यादिभिर्मध्यत इत्यन्तैस्त्रिभिः श्लोकैः प्राणशक्तिध्यानमुपदिशति। तत्र प्रसूनपिण्डं—दक्षिणे देव्याः प्राणात्मकत्वात्। (२)ततः प्राणनं प्रसूनपिण्डम्। दशशक्तिभिः—प्राणादिभिः। अनन्तशक्तियुक्ताभिः प्रत्येकमितिशेषः॥७०॥७१॥७२॥

---

(१) शक्तिपुटोत्थितमिति मू० पु० पा०।
(२) ततृप्राणनमिति टी० पु० पा०।

प्राणापानसमानाश्च व्यानोदाना च शक्तयः ।
नागा कूर्मा सकृकरा देवदत्ताधनञ्जया ॥७३॥
चतुरस्रद्वयं कृत्वा तदन्तर्वृत्तयुग्मकम् ।
तदन्तर्दशपत्राब्जं तदन्तस्तद्द्वयं तथा ॥७४॥
कृत्वा मध्ये समावाह्य कृतार्घ्यः पूजयेच्च ताः ।
लक्षं जपेत्पयोभक्षस्तद्दशांशं हुनेत्तथा ॥७५॥
तिलैः शुद्धैः सर्षपैश्च सितैर्मधुरसंयुतैः ।
तर्पयेत्सौरभाद्येन जलेनेत्थं सुसाधयेत् ॥७६॥
तन्त्रेऽस्मिन् यास्तु पुत्तल्यो यन्त्राण्युक्तानि सर्वतः ।
अनया विद्यया साध्य प्राणांस्तत्र नियोजयेत् ॥७७॥
यन्त्र मस्याः शृणु प्राज्ञे ! सद्यः प्रत्ययकारकम् ।
येन पुत्तलिका जीवस्पन्दयुक्ता मनोर्बलात् ॥७८॥
प्राक्प्रत्यक्दक्षिणोदक्च सूत्राण्यष्टौ निपातयेत् ।
कोष्ठान्येकोनपञ्चाशज्जायन्ते तेषु विन्यसेत् ॥७९॥
प्रागुत्तरं समारभ्य परितोपि प्रवेशतः ॥
शिष्टेषु मध्यनवसु लिखेदङ्कादितः क्रमात् ॥८०॥

---

प्राणेत्यादिना श्लोकेन प्राणशक्तिदेव्याः परिवारशक्तीरुपदिशति। तत्र प्रधानाप्राणशक्तिरेषां समष्टिरूपा ॥७३॥

चतुरस्रद्वयमित्यादिभिः साधयेदित्यन्तैस्त्रिभिः श्लोकैस्तत्पूजामण्डलं तत्पूजां तन्मन्त्रसाधनप्रकारं चोपदिशति। तत्र तद्द्वयम् - वृत्तद्वयम्। अन्यच्चक्रनिर्माणं सुगमम् ॥७४॥ कृतार्घ्यः - प्राग्वत् ॥७५॥ सितैः—गौरैः ॥७६॥

तन्त्रेऽस्मिन् नत्यादिना श्लोकेन सर्वत्र पुत्तल्यादिप्राणप्रतिष्ठाविधानमुपदिशति। तत्र तत्र - तेषु। अन्यत् सुगमम् ॥७७॥

यन्त्रमित्यादिभिर्भवेन्दित्यन्तैरध्यर्द्धैश्चतुर्भिः श्लोकैः तद्यन्त्रविधानं तत्प्रयोगं चोपदिशति। तत्रजीवस्पन्दयुक्ता—साध्यजीवागमतः। विन्यसेत् - प्राणप्रतिष्ठा-विद्याक्षराणीतिशेषः ॥७८॥७९॥ प्रागुत्तरं —ऐशान्याम्। परितः—प्राद-

ततः शिष्टद्वये साध्यनामालिख्याथ साधकम् ।
सञ्जप्य विद्यां हस्तेन सजीवेन स्पृशन् शतम् ॥८१॥
तेन पुत्तलिकाः कुर्यात्सिद्धये नान्यथा भवेत् ।
साध्यजीवाद्यानयनं शृणु वक्ष्यामि तेऽद्भुतम् ॥८२॥
मन्त्रवीर्यं स्मृतिं(१) कुर्वन् तया तद्देहगर्भतः ।
ज्ञानकर्मेन्द्रियाण्यर्थान् मनोजीवं तनुं तथा ॥८३॥
तस्मात्साध्यशरीरान्तात्पुत्तल्या(२) नामभिस्तथा ।
रक्तरज्ज्वा शक्तिमय्या(ध्या) तान्यानीयार्पयेद्धिया ॥८४॥
विद्यायास्त्र्यक्षरान्तेषु साध्यनामानि योजयेत् ।
एवं नियोजितां विद्यां सहस्रं प्रजपेत्स्पृशन् ॥८५॥
जीवहस्तेन(म) तच्चित्ते निशामध्येषु साधकः ।
एवं संस्थापितप्राणा पुत्तली स्पन्दतेऽब्दतः(३) ॥८६॥

---

त्रिखण्डेन । प्रविशतः—अमु(नु)क्रमम् । अङ्कोदितानि—यकारादिसप्ताक्षराणि । यन्त्रनिर्माणे अन्यत् सुगमम् ॥८०॥ स्पृशन्-यन्त्रमितिशेषः ॥८१॥ तेन—द्रव्येण । एतदुक्तं भवति—यैर्द्रव्यैः सप्तपुत्तलिकाकरणमुक्तं तानि द्रव्याणि यन्त्रे निधाय वा तेषु द्रव्येषु यन्त्रं निधाय वा तैर्द्रव्यैः पुत्तलिकां कुर्यादिति ।

साध्येत्यादिभिरब्दत इत्यन्तैरर्द्धाधिकैश्चतुर्भिः श्लोकैः पुत्तल्यादिषु साध्यजीवाद्यानयनमुपदिशति । तत्र मन्त्रवीर्यस्य पञ्चत्रिंशत्पटले वक्ष्यमाणत्वादिह नोच्यते॥८२॥ तया—स्मृत्या सार्द्धमितिशेषः । तद्देहगर्भतः—साध्यदेहाभ्यन्तरात् । अर्थान्—इन्द्रियार्थान् दश । जीवं आत्मानम् । तनुं—त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रौजः संज्ञानष्टधातून् । सविन्दूनि यादीन्यष्टाक्षराणि सर्वादौ संयोज्य तदनु तत्तद्धातूनां नामोच्चारणानन्तरं आकृष्य प्रतिष्ठापयास्युक्त्वा यथोपदेशमानयेदित्यर्थः ॥८३॥८४॥ त्र्यक्षरान्तेषु, एतदुक्तं भवति—प्राणप्रतिष्ठाविद्याया अमुष्य इति त्र्यक्षरान्तेषु साध्यनामानि योजयेदिति ॥८५॥ जीवहस्तेन—सश्वासप्रवाहपार्श्वस्थहस्तेन ।

---

(१) मन्त्रवीर्यास्मृतिं इति सो० पु० पा० । (३) तदा इति मू० पु० पा० ।
(२) शरीरान्ता पुत्तल्योतमभिन्नयेति मू० पु० पा० ।

साध्यस्य जन्मनक्षत्राख्याकर्णय वदामि ते ।
तज्जन्मलग्नसञ्जातनवां(ष्ट)शर्क्षं प्रधानकम् ॥८७॥
अन्यानि च नवर्क्षाणि नवग्रहसमन्वयात् ।
तेषु तेषु प्रयोगेषु वक्ष्याम्यपरहोमके ॥८८॥
रिपोर्नखस्य केशस्य चरणोत्थं रजस्तथा ।
अन्यानि चाङ्गरोमाणि पुत्तल्यां योजयेन्मृतौ ॥८९॥
वश्यादिषु च सर्वत्र पुत्तल्यां प्रोक्तया तया ।
एवं सर्वं समाख्यातं प्राणाकर्षणकर्म ते ॥९०॥
अनया विद्यया कृत्वा प्राणाकर्षणमुक्तया ।
ततोनिर्दिष्टपुत्तल्यां तत्र तत्रोक्तमाचरेत् ॥९१॥
सर्वत्र मारणे प्रोक्तं साध्यर्क्षग्रहसंस्थितिम् ।
उक्तानां तु न वर्क्षाणां तथैवाष्टकवर्गकम् ॥९२॥

---

तच्चित्ते—पुत्तलीचित्ते एवमित्येतदुक्तं भवति—प्रागुक्ते यन्त्रमध्ये पुत्तलीं संस्थाप्य साध्यजीवाद्यानयनं कुर्यादिति ॥८६॥

साध्यस्येत्यादिना होमके इत्यन्तेन श्लोकद्वयेन साध्यप्राणिनां जन्मनक्षत्राणि दशविधान्युपदिशति । तत्र तज्जन्मलग्नसञ्जातनवांशर्क्षं प्रधानकम् । एतदुक्तंभवति—यस्य जन्मसमयलग्ननवांशे तन्नवांशविशिष्टसंशकं तन्नवांशविशिष्टनक्षत्रं च तस्य प्रधानमिति ॥८७॥ अन्यानि च नवर्क्षाणि अन्योन्यसमानि गौणानीत्यर्थः । नवग्रहसमन्वयात् । नक्षत्राणामितिशेषः । सच राश्यन्वयः होमके—होमपटले ॥८८॥

रिपोरित्यादिभिराचरेदित्यन्तैः त्रिभिः श्लोकैः पुत्तलीनिर्माणे गुणविधानोपदेशं उक्तनिगमनं च करोति । तत्र मृतौ मारणप्रयोगे॥८९॥ वश्यादिष्वित्यत्र आदिशब्देन आकर्षणविद्वेषणादि । तया – साध्यनखकेशादिरहितया तत्र तत्र प्रोक्तद्रव्यनिर्मितया । तत्र—प्रयोग इति शेषः ॥९१॥

सर्वत्रेत्यादिना क्षणादित्यन्तेन श्लोकद्वयेन अभिचारप्रयोगे अभिचार्यस्य ग्रहानुकूल्यवीक्षणं तदनपेक्षणे प्रत्यवायं चोपदिशति । तत्र साध्यर्क्षग्रहसंस्थितिं—साध्यस्य प्रधाननक्षत्रराश्योर्ग्रहाणां बलाबलं च । तन्नवर्क्षाणां – तत्साध्यस्य नवग्रहदशाप्राप्तजन्मनक्षत्राणां नवानां अष्टवर्गकं आदित्यादि सप्तग्रहाणां जन्मलग्नस्य

दशास्थितिं च संवीक्ष्य कुर्यान्मारणमात्मवान् ।
अनवेक्ष्य कृतं कर्म स्वात्मानं हन्ति तत्क्षणात् ॥९३॥
ब्राह्मणं धार्मिकं भूपं वनितामास्तिकं नरम् ।
वदान्यं सदयं नित्यमभिचारे न योजयेत् ॥९४॥
योजयेद्यदि वैरेण प्रत्यगेनं निहन्ति तत् ।
अभिचारस्य विषयानाकर्णय वदामि ते ॥९५॥
पापिष्ठान्नास्तिकांश्चौरान् देवब्राह्मणनिन्दकान् ।
प्रजानां घातकान् सर्वक्लेशकर्मसु संस्थितान् ॥९६॥
क्षेत्रवित्तधनस्त्रीणामाहर्तारं कुलान्तकम् ।
निन्दकं समयानां च पिशुनं राजघातकम् ॥९७॥
विषाग्निक्षुरशस्त्राद्यैर्हिंसकं प्राणिनां सदा ।
नियोजयेन्मारणेषु कर्मस्वेतैर्न पातकी ॥९८॥
कृत्वाऽऽशु मारणं कर्म तदन्ते स्वधनार्द्धतः ।
पादतोवा गुरुं विप्रानाराध्य स्वेन नित्यया ॥९९॥
अभिषिंच्य ततोविद्यां जपेल्लक्षं हविष्यभुक् ।
जन्मत्रये(१)प्यब्दमात्रमभिषेकं समाचरेत् ॥१००॥

---

च । अन्योन्यानुग्रहज्ञापकं ज्योतिःशास्त्रोक्तमुपायमष्टवर्गकमिति कथयति ॥९२॥

दशास्थितिं – कालचक्रमहादशादिस्थितिम् । ग्रहाणामानुकूल्यप्रातिकूल्यादेक्षणं मारणे कर्म्मस्वेव, नान्यत्र ॥९३॥

ब्राह्मणमित्यादिना तदित्यन्तेनार्द्धाधेन श्लोकेनानभिचार्यान् तदभिचारणे-प्रत्यवायं चोपदिशति । तत्र धार्मिकमिति भूपमित्यस्य विशेषणम् । अभिचारे—मारणे, अन्यत् सुगमम् ॥९४॥

अभिचारेत्यादिभिः पातकीत्यन्तैरर्द्धाधैस्त्रिभिः श्लोकैरभिचार्यानुपदिशति । तत्र एतैः—मारणकर्मभिः । पातकी—साधक इतिशेषः ॥९५॥९६॥९७॥९८॥

---

(१) जन्मद्वयेप्य इति मू० पु० पा० ।

सदूर्वाहोममब्दन्तु तत्पापैरेष मुच्यते ।
एतत्ते कथितं सर्वं दूतीनित्याविधानकम् ॥१०१॥
पादतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०२॥
इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमते त्रयोदशपटलम् ।

---

कृत्वेत्यादिभिर्विधानत इत्यन्तैस्त्रिभिः श्लोकैरभिचारकरणप्रायश्चित्तमुपदिशति। तत्र आघ्न इति पदच्छेदः । हविष्यभुक्—हविष्यं नाम निर्लवणपक्वव्रीहितण्डुलान्नम्॥९९॥१००॥तत्पापैः—अभिचारकरणपापैः । एष - साधकः॥१०१॥१०२॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां शिवदूतीनित्याविद्याविधान-
प्रकाशनपरं त्रयोदशपटलं परिपूर्णं
परामृष्टम् ॥ १२ ॥

ग्रन्थसङ्ख्या—

यन्त्राख्येकादश व्याख्याग्रन्थाः प्रोक्ताः शतात्परम् ।
सार्द्धसप्तदशैव स्युः पटलेऽस्मिंस्त्रयोदशे ॥०॥

---

## अथ चतुर्दशपटलम् ।

अथ षोड़शनित्यासु नवमी या समीरिता ।
प्रोक्तैव त्वरिता विद्या प्रागेव द्वादशाक्षरा ॥१॥
तद्विधानं शृणु प्राज्ञे ! होम यन्त्रादिभिः(२) सह ।
येन(३) मन्त्री मन्मथाभो विक्षोभयति भूतलम् ॥२॥
विद्याचतुर्थवर्णादिसप्तभिस्त्वक्षरैस्तथा ।
कुर्यादङ्गानि युग्मार्णैः षट्क्रमेण कराङ्गयोः ॥३॥
शिरोललाटकण्ठेषु हृन्नाभ्याधारके तथा ।
ऊर्वोर्जान्वोर्जङ्घयोश्च पादयोश्च क्रमेण वै ॥४॥
द्वितीयोपान्त्यमध्यस्थैर्मन्त्रार्णैरितरैर्न्यसेत् ।
ताराद्यैः शृणु तद्ध्यानं तच्छक्तीस्तत्प्रपूजनम् ॥५॥
श्यामवर्णां शुभाकारां नवयौवनशोभिनीम् ।
द्वि*द्विक्रमादष्टनागैः कल्पिताभरणोज्ज्वलाम् ॥६॥

---

अथ चतुर्दशपटलम् ।

पूर्वस्मिंस्त्रयोदशे पटले अष्टम्या दूतीनित्याया विधानमुपदिश्यानन्तरं नवम्यास्त्वरितानित्याविद्याया विधानमुपदिशति—अथ षोड़शेत्यादि पातोद्यत्वन्तेन श्लोकशतरूपेण चतुर्दशेन पटलेन। तत्र अथ षोड़शेत्यादिना भूतलमित्यन्तेन श्लोकद्वयेन पटलार्थानुद्दिशति। तत्र प्रागेव—तृतीयपटले ॥१॥ विक्षोभयति—स्वात्मना प्रसिद्धिं करोति ॥२॥

विद्येत्यादिभिः पूजनमित्यन्तैस्त्रिभिः श्लोकैर्न्यासादिकमुपदिशति। तत्र तथा—यथा प्राणप्रतिष्ठाविद्यायां शृङ्खलाबन्धेन षड़ङ्गयोजनं ऊरुजानुजङ्घापादयोरेकैकम् ॥३॥४॥ द्वितीयोपान्त्यमध्यस्थैः द्वितीया-हृल्लेखा, अन्त्यस्य समीपमुपान्त्यं तयोर्मध्यस्थैर्मन्त्रार्णैरितरैरपि ताराद्यैः। एतदुक्तं भवति—प्रथमं हृल्लेखा, तदनु

---

(१) समाँमिति मू० पु० पा०। (२) सर्व्वैरिति मू० पु० पा०।

* द्विनिक्र इति वं० पु० पा०

ताटङ्कमङ्गदं तद्वद्रशनानूपुरान्वितैः ।
विप्रक्षत्रियविट्शूद्रजातिभिर्भीमविग्रहैः ॥७॥
पल्लवांशुकसंवीतां शिखिपुच्छकृतैः शुभैः ।
वलयैर्भूषितभुजां माणिक्यमुकुटोज्ज्वलाम् ॥८॥
बर्हिबर्हकृतापीड़ां तच्छत्त्रां तत्पताकिनीम् ।
गुञ्जागुणलसद्वक्षःकुचकुङ्कुममण्डनाम् ॥९॥
(१)त्रिनेत्रां चारुवदनां मन्दस्मितमुखाम्बुजाम् ।
पाशाङ्कुशवराभीतिलसद्भुजचतुष्टयाम् ॥१०॥
ध्यात्वैवं तोतलां देवीं पूजयेच्छक्तिभिर्वृताम् ।
तदग्रस्थां(२) च स्फाट्कारीं शरचापकरोज्ज्वलाम् ॥११॥
प्रसादे फलदाने च साधकानां त्वरान्विताम् ।
यतः सा त्वरितेत्युक्ता मायानित्या नवम्यसौ ॥१२॥

---

प्रणवस्तत उपान्त्यं ह्लेखामित्येवं क्रमेणान्या मन्त्रवर्णान्(३) वर्मादि फड़न्तान् दशसङ्ख्यान् प्रोक्तेषु दशसु स्थानेषु न्यसेदिति ॥५॥

श्यामवर्णामित्यादिभिर्वृतामित्यन्तैरद्धार्धैः पञ्चभिःश्लोकैर्देव्या नित्यसपर्याध्यानमुपदिशति। तत्र द्विद्विक्रमादित्यादिना विग्रहैरित्यन्तेनार्द्धाधिकेन श्लोकेनैतदुक्तं भवति—द्विद्विक्रमात् ब्राह्मणक्षत्रियवैश्यशूद्रजातिभिरष्टभिर्भुजगेन्द्रैः ॥६॥ क्रमात् कल्पितताटङ्काङ्गदरशनानूपुरयुगलामिति। अत्र चातुर्वर्ण्योत्पत्तिक्रमेणाभरणकल्पनमिति बोद्धव्यम् ॥७॥ पल्लवांशुकसंवीतां—किसलयशाखापरिधानाम्। बर्हिबर्हकृतापीड़ां—आपीड़ा—चूड़ा। तच्छत्त्रां—बर्हिबर्हच्छत्त्राम्। तत्पताकिनीं तद्वत्। आयुधकल्पनं वामोर्द्ध्वादिदक्षिणाधरहस्तान्तं वामदक्षिणक्रमेण ॥१०॥ तोतलां—त्वरिताम्। देव्यास्तु त्वरितातोतलातूर्णेतिनामानि ॥

तदग्रस्थेत्यादिभिर्मन्मथइत्यन्तैरर्द्धाधिकैः पञ्चभिः श्लोकैर्देव्याः परिवारशक्त्यादिकमुपदिशति। तत्र—शरचापकरोज्ज्वलां—धनुर्बाणोज्ज्वलकरयुगलाम् ॥११॥

---

(१) द्वि इति सो० पु० पा०।
(२) स्यात्फट्कारी इति मू० पु० पा०।
(३) न्वर्मादि इति टी० पु० पा०।

कृष्णवर्णो गदापाणिर्वर्बरोर्द्ध्वशिरोरुहः।
किङ्करस्त्वाग्रतस्तस्याः पूज्यः सर्वार्थसिद्धये ॥१३॥
तद्द्वारपार्श्वयोः पूज्ये जयाविजयसंज्ञिके।
शक्ती तत्सदृशे स्वर्णवेत्रवेल्लत्कराम्बुजे ॥१४॥
हुङ्कारी खेचरी चण्डा छेदिनी क्षेपणी ततः।
स्त्रीहुङ्कार्यौ क्षेमकरी लोकपालसमा इमाः ॥१५॥
पूज्याः पद्माष्टपत्रेषु स्थिता मन्त्रार्णशक्तयः।
याभिर्नित्यार्चिताभिः स्यान्नरो नारीषु मन्मथः ॥१६॥
शृणु पूजाविधिं तस्या स्त्वरिताया महेश्वरि!।
प्राग्वदर्घ्यं विधायेशामष्टसिंहाङ्घ्रिके शुभे ॥१७॥
आसने हेमरचिते विदध्यात् भूपुरद्वयम्।
पश्चिमद्वारसंयुक्तं तदन्तर्वृत्तयुग्मकम् ॥१८॥
तदन्तरष्टपत्राब्जं विधायात्र परां शिवाम्।
प्राग्वदावाह्य परितः शक्तिभिर्वेष्टितां तथा ॥१९॥

---

प्रसादे—आभिमुख्ये। अनेन श्लोकेन देव्या नामनिर्वाहः॥१२॥ गदापाणिः—अस्यापि पाणिद्वयम्। वर्वरः—कुटिलः। किङ्करः—देव्याः प्रेष्यभूतो भूतविशेषः ॥१३॥ तत्सदृशे—देवतासमानवर्णे। स्वर्णवेत्रवेल्लत्कराम्बुजे—अनयोरपि बाहुद्वयम् ॥१४॥ स्त्रीहुङ्कार्यौ—स्त्रीकारी हुङ्कारी इति च द्वेशक्ती। लोकपालसमाः। वर्णायुधवाहनैरिति शेषः॥१५॥ मन्त्रार्णशक्तयः—त्वरितामन्त्राक्षरशक्तयः। याभिः—अक्षरशक्तिभिः। स्यात्—साधक इति शेषः। मन्मथः—सर्वाः स्त्रियः कामवत्स्वात्मदर्शनेन क्षोभयतीत्यर्थः ॥१६॥

शृण्वित्यादिभिः समापयेदित्यन्तैः षड्भिः श्लोकैर्देव्या नित्यसपर्याक्रममुपदिशति। तत्र प्राग्वत्—षडङ्गमूलाभ्याम्। ईशां—सर्वाधिष्ठात्रीम्। अष्टसिंहाङ्घ्रिके—अष्टसिंहपादसहिते ॥१७॥ विदध्यादित्यादिना विधायेत्यन्तेन पादार्द्धेन श्लोकोत्तरार्द्धेन देव्या नित्यसपर्याचक्रमुपदिशति। तत्र एतदुक्तं भवति—पश्चिमद्वारोपेतं चतुरस्रद्वयं विधाय तदन्तर्वृत्तद्वयोपेतमष्टदलं पद्मं सकर्णिकं विदध्यादिति ॥१८॥ अत्र—चक्रे।

मुद्रादर्शनपूर्वं तु पूजयेत्तां यथोदितम् ।
अग्रपत्राग्रके वृत्तमध्ये वाऽर्च्यौ पुरोदितौ(१) ॥२०॥
किङ्करस्य बलिं दद्याद्देव्यग्रे प्रागुदीरितैः ।
स्वसमानगणाकीर्णमण्डलस्थस्य भक्तितः ॥२१॥
एवं पूजां विधायाग्रे जपेद्विद्यां सहस्रकम् ।
शतं वा कृतहोमस्तु पूजां प्राग्वत्समापयेत् ॥२२॥
ततः साधितविद्यस्तु प्रयोगानाचरेन्नरः ।
(२)बैल्वैर्दशांशं जुहुयात्पत्राद्यैः साधने जपे ॥२३॥
एवं संसिद्धमन्त्रैस्तु मन्त्रितैश्चुलुकोदकैः ।
फणिदंष्ट्रामृतानान्तु मुखे सन्ताड्य जीवयेत् ॥२४॥
तत्कर्णयोर्जपेद्विद्यां यष्ट्या(३) वा जपसिद्धये ।
सन्ताड्य शीर्षे सहसा मृतमुत्थापयेदिति ॥२५॥
काम्यहोमविधिं देवि ! शृणु वक्ष्ये यथाविधि ।
कृत्वा योनिं कुण्डमध्ये तत्राग्नौ विधिवद्धुनेत् ॥२६॥

---

एतदुक्तं भवति—आवाह्य कर्णिकामध्ये इतिशेषः ॥१९॥ मुद्रादर्शनपूर्वं—स्थापनादिमुद्राचतुष्टयपूर्वम् । एतत्सर्वसाधारणम् । यथोदितम्—अग्रादि प्रादक्षिण्येन । अग्रपत्राग्रके अग्रएवाग्रके अष्टदलानां देव्यग्रदलाग्रे वृत्तमध्ये—पद्मबाह्यस्थवृत्तद्वयवीथ्याम् । पुरोदितौ—फट्कारीकिङ्करौ तौ यथाक्रममग्रदलाग्रे वृत्तमध्ये वीथ्योरर्चयेदित्यर्थः ॥२०॥ बलिं—अन्यमितिशेषः । देव्यग्रे—प्राग्वत्त्वरितासन्निधौ । सर्वत्र बलिदानं तत्तन्मूलदेवतासन्निधौ । प्रागुदीरितैः—अन्नाद्यैः तन्मन्त्रेणेतिशेषः । (प्रागुदीरित)मण्डलं वृत्तमध्यम् ॥२१॥ प्राग्वत्—ललितासपर्यासमाप्तिवत् ॥२२॥ तत इत्यादिभिरितीत्यन्तैस्त्रिभिः श्लोकैर्विद्यासाधनं सिद्धविद्यस्य विषहरणविधानं चोपदिशति । तत्र पत्राद्यैः—आद्यशब्देन पुष्पमूलकाण्डफलान्यभिधीयन्ते । जपे—युगानुरूपमक्षरलक्षसङ्ख्याके दशांशं जुहुयादित्यन्वयः ॥२३॥ मन्त्रितैः ।

---

(१) पुरोहितौ इति सो० पु० पा० । (२) बिल्वैः इति मू० पु० पा० ।
(३) जप्त्वा इति सो० पु० पा० ।

तिलसर्षपगोधूमशालिधान्ययवैर्हुनेत्।
त्रिमध्वक्तैरेकशोवा समेतैर्वा समृद्धये ॥२७॥
बकुलैश्चम्पकैरब्जैः कह्लारैररुणोत्पलैः।
कैरवैर्मल्लिकाकुन्दमधुकैरिन्दिराप्तये ॥२८॥
अशोकैः पाटलैर्बिल्वैर्जातीविचकिलैः सितैः।
नवैर्नीलोत्पलैरश्वरिपुजैः(१) कर्णिकारजैः ॥२९॥
होमाल्लक्ष्मीं च सौभाग्यमायुर्वित्तं यशोनिधिम्।
यद्यद्धि वाञ्छितं सर्वमवाप्नोति सुनिश्चितम् ॥३०॥
दूर्वागुडूचीमश्वत्थं वटमारग्वधं तथा।
सितार्कं प्रसवजं हुत्वा रोगान्मुक्तोनरोऽचिरात् ॥३१॥
द्राक्षुजम्बूनारिकेलमोचागुडसितैर्हुतैः।
अचलां लभते लक्ष्मीं भोक्ता च भवति ध्रुवम् ॥३२॥
एतैरुदीरितैराज्यमधुक्षीरप्लुतैर्हुतैः।
एकैकैर्वनिता वश्या यावज्जीवं धनादिभिः ॥३३॥

---

शतवारमितिशेषः। तत्कर्णयोः—दष्टस्य कर्णयोः। जपन्—जीवयेदितिशेषः॥२४॥ वा पक्षान्तरे। जपसिद्धया—कराग्रस्पृष्टिकया विद्यासहस्रवारजपसिद्धया। मृतं—फणिदंशतः उत्थापयेत्। एष तृतीयः पक्षः ॥२५॥

काम्य होमइत्यादिभिः प्रियेइत्यन्तैः पञ्चभिः श्लोकैर्नानाविधद्रव्यहोमान्नानाविधफलावाप्तिमुपदिशति। तत्र योनिं कुण्डमध्ये—कुण्डपटलवक्ष्यमाणप्रकारेण कुण्डं कृत्वा तन्मध्ये योनिं कुर्यादित्यर्थः। एतत्सर्वहोमसाधारणम्। तत्र—योन्याम्। अग्नौ—स्थापिते इति शेषः। विधिवत्—प्राग्वदग्निमुखादिकं कृत्वेत्यर्थः ॥२६॥ एकशः—एकैकैः ॥२७॥ अरुणोत्पलं—प्राग्वत्। कैरवैः—सितैरिति-शेषः ॥२८॥ विचकिलानि—गुरुमुखादवगन्तव्यानि। स्मितैः—विकसितैः। अश्वरिपुजैः—करवीरपुष्पैः ॥२९॥३०॥ गुडूचीं—प्राग्वदमृतालताम्। सितैः—

---

(१) रक्तैरिपुजैरिति मू० पु० पा०।

तैस्तैराज्यप्लुतः भूपा वश्याः स्युर्हवनात्प्रिये ! ।
क्षीराक्तैस्तैर्हुतैर्मर्त्या वशे तिष्ठन्त्यशेषतः ॥३४॥
सर्षपाज्यैर्हुनेन्मृत्युकाष्ठाग्नौ वैरिमृत्यवे ।
तदक्तैर्वैरियोन्युत्थमांसैरपि च तत्कृते ॥३५॥
अक्षेन्धनाग्नौ योन्युत्थक्षतजोत्पाचितं चरुम् ।
आरुष्करघृतोपेतं फणिशीर्षस्रुचा हुनेत् ॥३६॥
कृष्णांशुकशिरोवेष्टः खड्गपाणिश्च रोषवान् ।
निशामध्ये हुनेत्सद्यो निहन्तुं वैरिणं हठात् ॥३७॥
मृत्युकाष्ठानले तस्य फलैः पत्रैश्च होमतः ।
सप्तरात्रादरातेस्तु गजाश्वा रोगमाप्नुयुः ॥३८॥
चतुरङ्गुलजैर्होमाच्चतुरङ्गं बलं रिपोः ।
सप्ताहाद्रोगदुःखार्तं भवत्येव न संशयः ॥३९॥
एवमस्यास्तु विद्याया वैभवं कोनु वर्णयेत् ।
तथापि तद्दिशा किञ्चिद्वर्ण्यते तच्छृणु प्रिये ! ॥४०॥

---

शर्कराभिः॥३१॥३२॥ एतैरुदीरितैः— तिलादिभिरिति शेषः । आज्यमधुक्षीरप्लुतैः— त्रिमधुसिक्तैः । त्रिमधुसिक्तत्वं सर्वसाधारणमेव । एकैकैरितिसर्वप्रयोगसाधारणमेव । धनादिभिरित्यत्रादिशब्दः— प्राणविषयः॥३३॥ तैस्तैराज्यप्लुतैः— केवलघृताभ्यक्तैस्तिलादिभिः सर्वैः षट्त्रिंशद्द्रव्यैरुक्तक्रमेण होमं कुर्यादित्यर्थः । क्षीराक्तैस्तैरुक्तक्रमेण होमं कुर्य्यादिति यावत् । एतदुक्तं भवति—तिलादिभिः सितान्तैः षट्त्रिंशद्द्रव्यैस्तत्तत्प्रयोगेषु प्रोक्तक्रमेण त्रिमध्वक्तैर्जुहुयादिति प्रथमपक्षः । केवलघृताभ्यक्तैस्तैर्जुहुयादिति द्वितीयः पक्षः । केवलक्षीराक्तैर्जुहुयादिति तृतीयः पक्षः इति । मृत्युः—कारस्करः । तदक्तैः— सर्षपाज्यसिक्तैः ! वैरियोन्युत्थमांसैः—शत्रुनक्षत्रयोनिमांसैः । तत्कृते—वैरिमृत्यवे ॥३५॥ योन्युत्थक्षतजोत्पाचितं—साध्यनक्षत्रयोनिरुधिरपाचितम् । फणिशीर्षस्रुचा— स्रुग्भूतेन छिन्नेन

---

(२) फणिशीर्षस्रु, वा इति सो० फणिशीर्ष स्व वा इति मू० पु० पा ।

अथ यन्त्राणि वक्ष्यामि समस्ताभीष्टसिद्धये ।
तानि सर्वाणि देवेशि ! कुरु चित्ते क्रमेण वै ॥४१॥
प्राक्प्रत्यक्दक्षिणोदक्च सूत्राणि द्वादशार्पयेत् ।
तदग्राण्यभितः कुर्यात्त्रिशिखान्यस्य मध्यगे ॥४२॥
कोष्ठे तारस्य मध्यस्थं नाम कृत्वा शिवादिषु ।
प्रादक्षिण्यप्रवेशेन द्वादशावृत्ति मायया ॥४३॥
विद्यामालिख्य सञ्जप्य बिभृयात् सर्वसिद्धये ।
श्रियै कीर्त्यै च वश्याय सौभाग्यायाखिलाप्तये ॥४४॥
विषग्रहगदोन्मादशान्त्यै युद्धे जयाप्तये ।
नरनारीनृपादीनां वश्याय बिभृयाच्च तत् ॥४५॥
प्राक्प्रत्यक् दक्षिणोदक्च नव सूत्राणि(१) पातयेत् ।
जायन्ते(२) च चतुःषष्टिकोष्ठानि परमेश्वरि ! ।

---

भुजङ्गमफणेनेत्यर्थः । निहन्तुं वैरिणं—वैरिनिधनाय हुनेदिति पूर्वत्रान्वयः॥३७॥ तस्य फलैः— मृत्युफलैः । पत्रैः— मृत्युपत्रैरित्यर्थः ॥३८॥ चतुरङ्गुलजैः—आरग्वधप्रसूनैः ॥३९॥ तत्—वैभवम् । दिशा—एकदेशेन । तत्-वैभवं भृणित्वन्वयः ॥४०॥

अथ यन्त्राणीत्यादिभिस्तदित्यन्तैः पञ्चभिः श्लोकैरेकविंशत्यधिकशतकोष्ठानुग्रहयन्त्रं तद्विनियोगं तत्फलानि चोपदिशति । तत्र त्रिशिखानि—प्रत्यग्रं त्रिशूलानि । मध्यगे—कोष्ठे सर्व्वमध्यस्थे कोष्ठे ॥४१॥४२॥ मायया—ह्रल्लेखया सार्द्धमितिशेषः ॥४३॥ तत्—यन्त्रमितिशेषः । एतदुक्तं भवति—प्राक्प्रत्यगग्राणि दक्षिणोदगग्राणि च समान्तरालानि द्वादशद्वादशसूत्राण्यास्फाल्याभितोऽष्टाचत्वारिंशत्सङ्ख्यानि तदग्राणि प्रत्येकं त्रिशूलीकृत्य एकविंशत्यधिकशतसङ्ख्येषु कोष्ठेषु सर्वमध्यस्थकोष्ठमध्ये प्रणवं नामगर्भं समालिख्य शिवादिप्रादक्षिण्यप्रवेशेनामुक्तक्रमं मूलविद्यायाः प्रणवादीनि प्रथमह्रल्लेखाविधुरं दशाक्षराणि द्वितीयह्रल्लेखोदरे द्वादशकृत्वः समालिख्य प्रोक्तक्रमेण बिभृयादिति ॥४४॥४५॥

---

(१) नवसूत्रनिपातनात् इति मू० पु० पा० । (२) ऽत्र इति मू० पु० पा० ।

तेषु सर्वनिक्र्त्यादि लिखेल्लक्ष्मीमनुक्रमात् ।
बहिस्तूर्णाक्षरैरन्ते वषड्युक्तैस्तु (पूजयेत्) वेष्टयेत् ॥४७॥
अनुग्रहं महाचक्रं विद्यां शृणु महेश्वरि ! ।
सर्वतोभद्रविन्यासानुष्टुभं सर्वसिद्धिदम् ॥४८॥
दाहवह्नियुतं चाद्यं वियद्धृन्मरुता ततः ।
नभश्च मरुतोपेतं व्याप्तं तेन समन्वितम् ॥४९॥
एतान्येव विलोमानि प्रथमं चरणं भवेत् ।
द्वितीयाद्यं द्वितीयं स्याद्ध्रुवा शून्यं द्वितीयकम् ॥५०॥
तृतीयं तच्चतुर्थं स्याज्जया (तु)च साभ्रचरा ततः ।
प्रतिलोमं तथैतेषां द्वितीयं चरणं भवेत् ॥५१॥

---

प्रागित्यादिना वेष्टयेदित्यन्तेन श्लोकद्वयेन चतुःषष्टिकोष्ठानुग्रहयन्त्रमुपदिशति । तत्र एतदुक्तंभवति—प्राक्प्रत्यगग्राणि दक्षिणोदगग्राणि च समान्तरालानि नव नव सूत्राण्यास्फाल्य चतुःषष्टिकोष्ठानि कृत्वा तत्र शिवनिर्ऋतिकोष्ठारम्भपङ्क्तिशोदक्षिणोत्तरावसानं चतुश्चतुःपङ्क्तिकं वक्ष्यमाणं(ं) सर्वतोभद्ररूपं(ं) श्रीविद्यानुष्टुभमालिख्य तद्बहिः प्रागादिषु चतसृषु दिक्षु ईशादीशान्तं चतुरावृत्ति तद्बाह्यरेखास्पृष्टां त्वरिताविद्यामन्तर्गतवष(फ)ट्कारैः त्वरिताक्षरैर्वेष्टयेदिति ॥४६॥४७॥

अनुग्रहमित्यादिभिः सङ्कथेत्यन्तैः सप्तभिः श्लोकैः प्रस्तावपूर्व्वकसर्व्वतोभद्राकारानुष्टुप् श्रीविद्योद्धारं तद्वैभवं चोपदिशति । तत्र सर्व्वतोभद्रविन्यासानुष्टुभं—सर्व्वतोभद्रप्रतिपादकत्वं तु चतसृषु पङ्क्तिषु प्रतिलोमानुलोमतोऽष्टकृत्वोवाचनसिद्धेः ॥४८॥ दाहवह्नियुतं चाद्यं वियत्—दाहवह्निभ्यां समेतं वियदक्षरं श्रीविद्याया आद्यमक्षरमित्यर्थः – श्री इति । हृन्मरुता ततः—सा इति द्वितीयम् । नभश्च मरुतोपेतं—मा इति तृतीयम् । व्याप्तं तेन समन्वितम्—तेन—मरुता या— इति चतुर्थम् ॥४९॥ एतान्येव—उक्तक्रमस्थितानि चत्वार्यक्षराण्येव । विलोमानि— उक्तक्रमविपर्यासतः । चरणं—पादः । एतदुक्तं भवति—उक्तक्रमस्थितानि चत्वार्यक्षराणि उक्तक्रमविपर्यासतोविलोमानि तान्येव यमोसाश्री

---

(१) बहिस्तूनाम्ततैरेतैः इति मू० पु० पा० ।

तृतीयतुर्यौ परत इला वन्ह्या(१) ततस्त्विला ।
मरुद्युता प्राग्वदेतत्प्रतिलोमं तृतीयकम् ॥५२॥
चतुर्थं द्वादशं विंशं तत्पूर्वं ते विलोमगाः ।
एतच्चतुर्थं चरणं श्रीविद्यायां महेश्वरि ! ॥५३॥
सर्वतोभद्ररूपैषा विद्या सर्वार्थसाधिका ।
यत्र स्थिताऽसौ चक्रस्था न तत्राशुभसङ्कथा ॥५४॥

---

इत्येवमष्टाक्षराणि श्रीविद्यानुष्टभः प्रथमः पादः इति। द्वितीयाद्यं—द्वितीयं स्यात्—प्रोक्तप्रथमपादस्य द्वितीयाक्षरं द्वितीयपादस्य आद्यमक्षरमित्यर्थः। सा इति द्वितीयपादस्य आद्यमक्षरम्। भुवाशून्यं द्वितीयकं—(को)नो इति द्वितीयमक्षरम् ॥५०॥ तृतीयं तच्चतुर्थं स्यात्—प्रथमपादस्य पा इति चतुर्थमक्षरं द्वितीयपादस्य तृतीयमक्षरं भवेदित्यर्थः। ज्या च साभ्रचरा ततः—ज्या—जकारः। अभ्रं-ञकारः। चर—एकारः—ञे इति चतुर्थमक्षरं भवेत्। एतेषामुक्तक्रमस्थितानां चतुर्णामक्षराणां चरणं प्राग्वत्। एतदुक्तं भवति—प्रोक्तक्रमस्थितानां चतुर्णामक्षराणां प्राग्वत् ज्ञेयानोसा इति व्युत्क्रमं पठेत्। तस्या अनुष्टुभोद्वितीयः पादोभवेदिति ॥५१॥ तृतीयतुर्यौ परतः—प्रथमपादस्य तृतीयचतुर्थाक्षरे साया इति तृतीयपादस्य प्रथमद्वितीयाक्षरे स्यातामित्यर्थः। इला वन्ह्या—वह्निना। स्त्रोत्वं स्यातन्त्वात्। ली इति तृतीयमक्षरम्। इला मरुद्युक्ता--ला इति चतुर्थमक्षरम्। एतत्प्रतिलोमं—प्रोक्तक्रमस्थितस्याक्षरचतुष्टयस्य प्रतिलोमं लालीयामा इति तृतीयः पादोभवेदित्यर्थः। तृतीयकं चरणमितिशेषः। पादइत्यर्थः॥५२॥ चतुर्थं द्वादशं विंशं तत्पूर्व्वं—अस्या विद्याया चतुर्थं पा इत्यक्षरं द्वादशं ञे इत्यक्षरं, विंशं ला इत्यक्षरं, तत्पूर्व्वं एकोनविंशं ली इत्यक्षरमेवं चत्वार्यक्षराणि प्रोक्तक्रमेण भवेयुः। ते विलोमगाः--उक्तक्रमस्थिता एते चत्वारोवर्णा विलोमतः पठिताः। एतत्—वर्णाष्टकम्। चरणं—प्राग्वत्। एतदुक्तं भवति—उक्तक्रमस्थिताश्चत्वारोवर्णास्तत्क्रमविलोमपठिताश्च पयो ञे ला लीला ञेया इत्येवं वर्णाष्टकं तस्याः श्रीविद्यानुष्टभश्चतुर्थः पादोभवेदिति ॥५३॥ सर्व्वतोभद्ररूपैषा—एतदुक्तं भवति—पूर्वोक्तचतुःषष्टिकोष्ठेषु ऊर्ध्वादिषु प्रथमद्वितीयतृतीयचतुर्थपङ्क्तिषु सर्वादि दक्षान्तं चतुरः पादान् समालिख्य तानेव पादान्

---

(१) वाह्याख्वत इति सू० पु० पा० ।

दशसूत्रनिपातेन कृत्वैकाशीति(सं)कं पदम् ।
तन्मध्यकोष्ठे (दावस्थं कृत्वा)मध्यस्थे दावे नामास्य वीथिषु ॥५५॥
लिखेद्वर्णचतुष्कं तत् (एकंतु) शृणु भद्रे ! यथाविधि ।
ज्याधरास्थैर्मायया हृत्ततोऽम्बु स्पर्शगा इला ॥५६॥
ततः श्रियो लिखेद्विद्यां शिवरक्षोदिगादिकाम् ।
प्राग्वत्तूर्णामृतार्णैस्तैर्वेष्टयेद्वृद्धियोजितैः ॥५७॥
ततोऽम्बु स्वयुतं तेन मा(ला)याकलितरूपिणा ।
वृत्तद्वयेन निष्पाद्य कुम्भं पद्माधरोत्तरम् ॥५८॥
कृत्वा स्वर्णादिसूत्रेषु सम्पूज्याभ्यर्च्य तत् पुनः ।
स्थापयेज्जपसंसिद्धं तेषु पूर्वोदितेषु वै ॥५९॥

---

अधस्थपङ्क्तिषु चतसृषु सर्वाधस्तात् प्रथमपादो यथा भवति तथा तद्वत् प्रतिलोमेन समालिख्य पश्येद्बाह्यपङ्क्तिषु चतसृषु प्रतिलोमानुलोमतः प्रथमपादो दृश्यते । सर्वत्र द्वितीयपङ्क्तिषु चतसृषु तथाविधो द्वितीयपादश्च दृश्यते । तथा तृतीयासु चतसृषु पङ्क्तिषु तृतीयपादश्च दृश्यते । तद्वच्चतुर्थीषु पङ्क्तिषु चतुर्थपादश्च दृश्यत इति । असौ श्रीविद्येतिशेषः ॥५४॥

दशेत्यादिभिः सम्पदेत्यन्तैः सप्तभिः श्लोकैरेकाशीतिपदोपेतामृतकुम्भाह्वयं यन्त्रं तद्विनियोगं तत्फलानि चोपदिशति । तत्र दावः—ठकारः ॥५५॥ तत्—शृण्वित्यन्वयः । ज्याधरास्थैः—जूँ इति । मायया हृत्—विसर्जयीयेन सहितः सकारः स इति । अम्बु—वकारः । स्पर्शगा इला—षल(ट) इति । एतानि चत्वार्यक्षराणि सर्वमध्यस्थकोष्ठपार्श्वस्थचतुःपङ्क्तिस्थकोष्ठचतुष्टयेष्वभ्यन्तरात् निर्गमनगत्या क्रमेण विलिखेदिति सम्प्रदायार्थः । अत्र केवलसम्प्रदायिनश्चतसृषु पङ्क्तिषु चत्वार्यक्षराणि पङ्क्तिक्रमेण एकैकमक्षरं चतुष्कं चतुष्कं विलिखेदिति कथयन्ति । तन्नाभिमतमस्मदाराध्यपादानाम् ॥५६॥ तूर्णामृतार्णैः—तूर्णामृताक्षरैः तूर्णामृताक्षराणि नाम फट्वियुक्तानि वषट्युक्तानि त्वरिताविद्याक्षराणि ॥५७॥ अम्बु स्वयुतं—वं इति । तेन—केवलं वं इत्यक्षरेण । मालाकलितरूपिणा—अन्योन्यानुषक्तलिखितविग्रहेण सार्द्धं इति शेषः । पद्माधरोत्तरं—अधरोत्तरतः ऊर्ध्वाधोमुखाभ्यां पद्माभ्यामुपेतं कुम्भमित्यर्थः ॥५८॥ सम्पूज्य—

तत्र लक्ष्मीरतिस्फीता नीरोगाश्च प्रजास्तथा।
गजाश्वा पशवस्त्वन्ये प्राणिनः सुखिनोऽनिशम् ॥६०॥
भूतप्रेतपिशाचादि पीड़ासु बिभृयादिदम्।
अलक्ष्मीशान्तये वश्यसिद्धये सर्वसम्पदे ॥६१॥
निग्रहं शृणु देवेशि! शत्रवो यस्य शक्तितः।
स्वल्पेनैव तु कालेन भवन्त्येव परासवः ॥६२॥
प्राग्वदेकाशीतिपदं कृत्वा तन्मध्यकोष्ठके।
दाहगर्भे नाम कृत्वा तथा दिग्वीथिषु क्रमात् ॥६३॥

---

देवतामितिशेषः। अभ्यर्च्य—यन्त्रमितिशेषः। पूर्वोदितेषु—एकादशराश्युदयकालेषु तत्तद्राशिस्थानेषु चेतिशेषः ॥५९॥ एतदुक्तं भवति—प्राक्प्रत्यक् दक्षिणोदक्च समान्तरालमास्फालितैर्दशभिः सूत्रैरेकाशीतिपदानि विधाय तत्र सर्व्वमध्यकोष्ठे उपरि विन्दुयुक्तठकारोदरे नामालिख्य तत्कोष्ठपार्श्वस्थपङ्क्तिषु चतसृषु क्रमेणाग्रादिप्रादक्षिण्येन जूँ इत्यक्षरं सः इत्यक्षरं वकारं षट् इति चतुर्षु कोष्ठेषु च अभ्यन्तरान्निर्गमनगत्या विलिख्य तत ईशादिकं निरृत्यादिकं च प्रागुक्तां श्रीविद्यानुष्टुभं मध्यवीथिचतुष्टयव(र्ग)र्जमालिख्य सर्वबाह्ये अभितः ईशादीशान्तं तूर्णामृताक्षराणि चतुरावृत्त्या प्राग्वत्समालिख्य सर्व्वमध्यकोष्ठमध्यमवष्टभ्य चतुष्कोणस्थतूर्णामृताक्षरमानेन भ्रमेण वृत्तं निष्पाद्य तद्बाह्येऽ(न)ङ्गुलमानेच तथावृत्तं निष्पाद्य उपरितनभागे च अधोभागेच मध्यतश्चतुरङ्गुलान्तरालं वृत्तद्वयं मार्जयित्वा तदग्रचतुष्टयात् मनाग्वक्रं समान्तरालमुपरि चतुरङ्गुलं कुम्भमुखाकारं यथा भवति तथा समुन्नमय्य तत्कुम्भमुखे तिर्यक्(च) रेखाद्वयं प्रसार्य तत्कुम्भवीथीमध्यं अन्योन्यस्पृष्टवकारमालया शृङ्खलारूपया अन्तर्मुखया समापूर्य सर्वत्रोपरि विन्दुं समालिख्य कुम्भाधस्तात् पद्मकर्णिकास्थं कुम्भं यथा भवति तथा समालिख्य कुम्भमुखे च अधोमुखमूर्द्धनालं च पद्मं समालिख्य प्रोक्तक्रमेण मनीषितेषु विनियोगात् प्रोक्तानि फलानि च स्युरिति ॥६०॥६१॥

निग्रहमित्यादिभिरसुरैरपीत्यन्तैरष्टादशभिः श्लोकैः एकाशीतिपदोपेतैः निग्रहयन्त्रं तत्र लेख्यानि कूटाक्षराणि सर्वतोभद्राकारां कालीविद्यां तथाविधं यममन्त्रं

---

(५) स्वैरं प्रभवन्ति परासवः इति सी० पु० पा०।

लिखेद्बीजचतुष्कन्तु वह्निमारुतविग्रहम् ।
यैः सद्योवैरिणः स्वीयं विमुञ्चन्ति कलेवरम् ॥६४॥
रसोदाहच्मास्वयुतो ग्रासोदाहच्मया स्वगः ।
प्रभा दाहच्मास्वयुत हंसोदाहादिसंयुतः ॥६६॥
ईशरक्षोदिगारभ्यात्पङ्क्तिशोविलिखेत्ततः ।
काल्या यमस्य क्रमतो विद्यांमन्त्रमसंक्रमम्(१) ॥६७॥
सर्वतोभद्ररूपा तु काल्यनुष्टुभमीश्वरि ! ।
शृणु वक्ष्यामि परतो यमानुष्टुभमीश्वरि ! ॥६८॥
प्राणोमरुत्समोपेत इला वन्ह्या समन्विता ।
नभो मरुद्युतं दाहश्चतुर्णां प्रतिलोमतः ॥६९॥
प्रथमं चरणं तस्य द्वितीयं शून्यमेव च ।
नभोभुवा ग्रास एतत् प्रतिलोमात् द्वितीयकम् ॥७०॥
तृतीयमेकादशमं ततो गोत्रा चरान्विता ।
रयस्तेषां विलोमं च तृतीयं चरणं मनोः ॥७१॥

---

तत्फलं चोपदिशति । तत्र यस्य– निग्रहप्रयोगस्य ॥६२॥ दाहगर्भे–उपरि बिन्दुयुक्तरेफोदरे ॥६३॥ वह्निमारुतविग्रहं–वह्निमारुतविग्रहत्त्वं नामाक्षरतोऽनुभावतश्च। यैः–कूटाक्षरैश्चतुर्भिः। कलेवरं–शरीरम्॥६४॥रसो दाहच्मास्वयुतः भ्रूं इति। ग्रासो दाहच्मयास्वगः–च्रूँ इति। प्रभा दाहच्मास्वयुता–व्लूँ इति। हंसोदाहादि संयुतः–ह्रूँ इति ॥६६॥६७॥६८॥ प्राणोमरुत्समोपितः–का इति। इलावन्ह्या समन्विता लो इति। नभोमरुद्युतं–माइति। दाहः–रेफः। चतुर्णां प्रतिलोमतः –प्रथमं चरणंस्यात् ॥६९॥ एतदुक्तं भवति–उक्तक्रमस्थितानां चतुर्णामक्षराणां प्राग्वत् प्रतिलोमपठनात्कालीविद्यानुष्टुभः पादः स्यादिति। द्वितीयं-अस्या विद्यायाः प्रथमपादस्य द्वितीयमक्षरं द्वितोयपादस्य प्रथममक्षरमित्यर्थः लो इति। शून्यं–नकारोद्वितीयमक्षरम्। नभोभुवा–मो इति तृतीयमक्षरम्। ग्रासः–

---

(१) विद्यामन्त्रं च सङ्क्रममिति मू॰पु॰ पा॰।

चतुर्थं द्वादशं विंशं रयोबाल(१)विलोमकम् ।
चतुर्थं चरणं प्रोक्तं विद्यैषा सर्वनाशिनी ॥७२॥
व्याप्तं काली तृतीयं च मरुताम्बुसमन्वितम् ।
नाद एषां विलोमं च प्रथमं चरणं यमे ॥७३॥
एतद्द्वितीयतुर्यौ च नभसा भूश्च नादकम् ।
एतेषां प्रतिलोमं च द्वितीयं चरणो मनाः ॥७४॥

---

त्वकारः चतुर्थमक्षरम् । एतत्प्रातिलोम्याद्द्वितीयकम्—प्रोक्तक्रमस्थितानां चतुर्णामक्षराणां प्राग्वत्प्रातिलोम्यतोद्वितीयः पाद इत्यर्थः ॥७०॥ तृतीयं—प्रथमपादस्य तृतीयं माइत्यक्षरं तृतीयपादस्य प्रथमाक्षरं भवति । एकादशमं—अस्या अनुष्टुभः एकादशमो इति द्वितीयमक्षरम् । गोत्रा चरान्विता—दे इति तृतीयमक्षरम् । रयः—तकारः चतुर्थमक्षरम् । एषां विलोमश्च तृतीयं चरणं—प्रोक्तक्रमस्थितानां चतुर्णामक्षराणां प्रतिलोमपठनं तृतीयपाद इत्यर्थः । मनोः—विद्यायाः । मनुरितिमन्त्रविद्ययोः साधारणः शब्दः॥७१॥ चतुर्थं—अस्या विद्यायाः व इति चतुर्थमक्षरं चतुर्थपादस्य आद्यमक्षरं इत्यर्थः । द्वादशं—त्वकारो द्वितीयम् । विंशं-तकारः तृतीयमक्षरम् । रयः—तकारः । *अबा अम्बुवास्तोत्वं स्वातन्त्र्यात् त्व इति चतुर्थमक्षरम् । विलोमकं—प्रोक्तक्रमस्थितानामेषां चतुर्णामक्षराणां विलोमपठनात् चतुर्थपादो भवतीत्यर्थः । एषा—एवं प्रोक्ता । सर्वनाशिनी प्रयोगादितिशेषः । एवमेषा प्राग्वत् सर्वतोभद्राकारा काल्यनुष्टुबुक्ता ॥७२॥

व्याप्तमित्यादिभिः शिवे इत्यन्तैश्चतुर्भिः श्लोकैः सर्व्वतोभद्राकारां यमानुष्टुभमुपदिशति । तत्र व्याप्तं—यकारः प्रथममक्षरम् । कालीतृतीयं—काल्यनुष्टुभस्तृतीयमक्षरं मा इति अस्या द्वितीयमक्षरम् । मरुताम्बुसमन्वितं—वा इति तृतीयमक्षरम् । नादः—ठकारः चतुर्थमक्षरमित्यर्थः । एषां विलोमं—चतुर्णामक्षराणां प्राग्वद्विलोमपठनात्प्रथमः पादो भवति । यमे—यमयन्त्रे ॥७३॥ एतद्द्वितीयतुर्यौ च—एतस्य—यममन्त्रस्य द्वितीयचतुर्थाक्षरे द्वितीयपादस्य प्रथमद्वितीयाक्षरे माठ इति भवतः । नभसा भूः—सो इति तृतीयमक्षरम् । नादः ठकारश्चतुर्थमक्षरम् । एषां प्रतिलोमात् प्रोक्तक्रमस्थितानां चतुर्णामक्षराणां प्रतिलोमपठनात् प्राग्वत्

---

(१) वायो इति मू० पु० पा० ।

* रयो'स्वाल इत टी० पु० पा० । रयोश्वा रयः तकारः अश्वः इति व'० पु० पा० ।

अम्बुयुक्तो मनु(१)श्चास्मिन्नेकादशकमेव च ।
रसः क्ष्मया वह्निदाही प्रतिलोमात् तृतीयकम् ॥७५॥
नादो नादो दाहवह्नीरयोर्वा तदनन्तरम् ।
प्रतिलोमं तु तेषां स्याच्चतुर्थं चरणं शिवे ! ॥७६॥
एवं मन्त्रद्वयं कोष्ठेष्वालिख्य बहिरप्यथो ।
वेष्टयेद्व्याप्तदाहाभ्यामुक्तक्रमसमन्वितम् ॥७७॥
मर्कटीदण्डिगरलैरालिप्तं स्थापितैरकम् ।
जप्तं विनिक्षिपेदक्षविवरे चत्वरेऽथ वा ॥७८॥
वल्मीके मातृभवने शास्तुरायतनेऽथ वा ।
श्मशाने प्रोक्तसमये प्रोक्तक्रमसमन्वितम् ॥७९॥
यत्र देशादिगं यन्त्रं तत्रालक्ष्मीर्गदैः समम् ।
मारीतु सुस्थिरा साध्या सर्वैः देवासुरैरपि ॥८०॥

---

द्वितीयः पाद इत्यर्थः॥७४॥ अम्बुयुक्तो मरुत्—वा इति तृतीयपादस्य प्रथममक्षरम् । अस्मिन्नेकादशं—अस्मिन्—यमयन्त्रे मोऽइत्येकादशमक्षरं तृतीयपादस्य द्वितीयमक्षरम् । रसः क्ष्मयाभ्र इति तृतीयमक्षरम् । अग्निदाही-रि इति चतुर्थमक्षरं प्रतिलोमात् । एतदुक्तम्भवति—प्रोक्तक्रमस्थितानामेषां चतुर्णां वर्णानां प्राग्वद्विलोमपठनात् तृतीयः पाद इति॥७५॥ नादोनादः—टद्वयं चतुर्थपादस्य प्रथमद्वितीयाक्षरे गग इति भवतः । दाहवह्नी—री इति तृतीयमक्षरम् । योक्षत्व (यो वद्यात्व) इति चतुर्थमक्षरम् । प्रतिलोमं च तेषां—प्राग्वत् प्रोक्तक्रमस्थितानां चतुर्णामक्षराणां प्रतिलोमपठनाच्चतुर्थः पादः स्यादित्यर्थः ॥७६॥ व्याप्तदाहाभ्यां—यकाररेफाभ्याम् । उक्तक्रमसमन्वितम् अनुष्ठितान्तरालम् ॥७७॥ दण्डी—ब्रह्मदण्डी । गरलयोजनाप्रकारमुत्तरत्र स्वयमेव वक्ष्यति । स्थापितैरकं – प्राग्वत् कृतप्राणप्रतिष्ठम् ॥७८॥७९॥ देशादिगमित्यत्रादिशब्दस्य ग्रामनगरखेटखर्वटादयो विषयः । मारी—जनपदनाशकरी शक्तिः । निग्रहयन्त्रविरचनाक्रमस्तु प्रदर्श्यते । यथा—प्राक्प्रत्यग्दक्षिणोदगग्रैः समान्तरालैर्दशभिः सूत्रैरेकाशीतिपदानि निष्पाद्य तत्र सर्वमध्येकोष्ठे उपरि-

---

(१) मरुच्चास्मिन्निति मू० पु० पा० ।

प्राग्वच्च नवभिः सूत्रैरष्टाष्टकपदं शिवे ! ।
कृत्वा तेष्वीशरक्षोदिगारम्भात्कालिकामनुम्(१) ॥८०॥
विलिख्य यममन्त्रेण प्रोक्तबीजद्वयेन च ।
वेष्टयित्वा बहिश्चक्रं स्थापयेत् तदधोमुखम् ॥८१॥
एतच्च पूर्वचक्रोक्तफलकृत् परमेश्वरि ! ।
अनुक्तेष्वपि नामानि योजयेत्कोष्ठमध्यतः ॥८२॥
लवणोषणमेहाम्बु(२)गृहधूमाग्निसंयुत(ौ)म् ।
श्मशानाङ्गारनिम्बोत्थनिर्यासो विषमीरितम् ॥८३॥

---

विन्दुसहिते रेफोदरे नामालिख्य प्राग्वत् तत्पार्श्वपङ्क्तिषु चतसृषु चतुर्षु कोष्ठेषु प्रागुक्तक्रमेण भ्रूँ च्रूँ व्रूँ क्ष्रूँ इत्यक्षरचतुष्टयं अभ्यन्तरान्निर्गमनगत्या अभितः समालिख्य अभिचार्यः पुरुषश्चेत्तदन्तः काल्यनुष्टुभं बहिर्यममन्त्रं, वनिता चेत् अन्तर्यममन्त्रं बहिः कालीविद्याञ्च समालिखेत् । लेखने तु ईशादिकं निरृत्यादिकं च कालीमन्त्रं, अन्यदा तथा यममन्त्रं विलिख्य अन्यतरं बहिरीशादिनिरृत्यन्तं निरृत्यादीशान्तं च निरन्तरं द्विरालिख्य तद्बहिस्तन्निरन्तरं विन्दुयुक्तं पकारं रेफं च ईशादीशान्तं यथाक्रममन्तर्बहिर्विभागेन समालिख्य मनीषितेषु विनियुञ्ज्यात् । एतत् स्त्रीपक्षे च । स्त्री चेत् शास्तुरायतनाग्र एवाधस्तात्, पुरुषश्चेत् काल्याद्यायतनाग्र एवाधस्ताच्च खनेदिति ॥७९॥

प्राग्वत् इत्यादिभिः कोष्ठमध्यत इत्यन्तैस्त्रिभिः श्लोकैश्चतुःषष्टिकोष्ठोपेतं निग्रहयन्त्रं तद्विनियोगफलादिविशेषञ्चोपदिशति । तत्र यममन्त्रेण वेष्टनकथनं पुरुषनिग्रहविषयः । एतेन स्त्रीनिग्रहविषये अन्तर्यममन्त्रं भवति, बहिः कालीमन्त्रवेष्टनं च बोद्धव्यमिति सम्प्रदायार्थः ॥८०॥ बीजद्वयेन—बिन्दुसहितरेफयकाराभ्यां पूर्ववद्वेष्टयेत् ॥८१॥ अनुक्तेष्वपीत्युक्तिः स्त्रीविषया । अत्र कालीयममन्त्राभ्यां प्रसिद्धममोघनिग्रहमुक्त्वा तस्यापि प्रतिकारस्त्वरिताविद्यानुग्रहयन्त्रविधानेन भवति । एतदर्थमेव मन्त्राक्षराभ्यां निग्रहकथनम् । यन्त्रविरचनाक्रमो यथा-प्राग्वन्नवभिः सूत्रैश्चतुःषष्टिकोष्ठानि कृत्वा तेषु ईशादिकं निरृत्यादिकञ्च अभिचार्यः पुरुषश्चेदन्तः कालिकामन्त्रं बहिर्यममन्त्रं स्त्री चेदन्तर्यममन्त्रं बहिः कालीविद्याञ्च प्राग्वत् समालिख्य पूर्वोक्ताभ्यां विन्दुसहिताभ्यां यकाररेफाभ्यां

---

(१) कालिकामुखम् इति मू० पु० पा० । (२) हिमाम्बु इति सो० हीमाम्बु इति मू० पु० पा० ।

विद्याद्यवर्णजठरे साध्यमालिख्य तद्बहिः ।
अष्टच्छेदेषु फट्वर्णमालिखेदष्टवर्णकम् ॥८४॥
कर्णिकास्थं ततोऽब्जं च वेष्टयेन्मायया ततः ।
बहिः कुम्भं विदध्याच्च प्रोक्ताक्षरविधानतः ॥८५॥
एवमन्यैश्च नवभिः विद्यावर्णैर्यथाक्रमम् ।
विदध्यान्नव यन्त्राणि दशानां च फलं शृणु ! ॥८६॥
सर्वरक्षां जयं वश्यं(१) नरनारीनृपादिनाम् ।
स्तम्भं लक्ष्मीयशोहेमवासांसि (च) समवाप्नुयात् ॥८७॥

---

प्रागुक्तक्रमेण वेष्टयित्वा प्रोक्तक्रमेण प्रोक्तेषु स्थानेषु अधोमुखं स्थापयेत्। तेन पूर्वोक्तान्येव फलानि स्युरिति ॥८२॥

लवणेत्यादिना श्लोकेन निग्रहयन्त्रालेखनार्थं विषस्वरूपमुपदिशति। तत्र—जषणं-जषः। मेहाम्बु— प्रस्रवः— अग्निः—चित्रकम्। अन्यदाराध्यमुखादवगन्तव्यम् ॥८३॥

विद्येत्यादिना यन्त्राणीत्यन्तेन त्रिपादाधिकेन श्लोकद्वयेन मूलविद्याक्षरेषु दशभिर्दशभिः अक्षरैर्दशयन्त्रविधानमुपदिशति। तत्र प्रोक्ताक्षरविधानतः—पूर्वोक्तसबिन्दुकशृङ्खलारूपवकाराक्षरमालावेष्टनतः। एतदुक्तं भवति - अष्टदलं पद्मं विधाय तत्कर्णिकामध्ये विद्याप्रथमहृल्लेखां तदुदरे विद्याद्यभूतं प्रणवं तन्मध्ये नाम चालिख्य शेषाण्यष्टौ मन्त्राक्षराणि हृल्लेखाद्वय*फट्कारविधुराणि क्रमेण अग्न्यादिप्रादक्षिण्येनाष्टसु दलेषु समालिख्य तत्पद्मं द्वितीयहृल्लेखया उक्तक्रमेणाऽऽवेष्ट्य तद्बहिः प्राग्वत् सबिन्दुकशृङ्खलितवकाराक्षरमालोपेतं उपर्यधश्च पद्मद्वयोपेतं कुम्भं कुर्यात्। एतत् प्रथमं यन्त्रम्। एवं अस्यैव यन्त्रस्य कर्णिकामध्ये हृल्लेखोदरे विद्यातृतीयाक्षराणि क्रमेण एकमेकं नामगर्भं विन्यस्य तद(न)न्तरादितत्पूर्वान्तं प्राग्वदेभिरक्षरैः दलस्थैः पूर्वोक्तेन साङ्गं नव यन्त्राणि हृल्लेखामध्ये सनामकं फट्कारमालिख्य प्रणवविधुरैस्तृतीयादिभिः शेषाक्षरैः प्राग्वत् दलस्थैः दशमं च एवं दशयन्त्राणि कुर्यात् इति ॥८४॥८५॥

दशानामित्यादिना आप्नुयादित्यन्तेन पादाद्येन श्लोकेन दशानां यन्त्राणां क्रमेण असाधारणानि दशफलान्युपदिशति। तत्र अर्थः सुगमः ॥८६॥८७॥

---

(१) सर्वरक्षाभवेदित्थं इति सी० पु० पा०। * वषट्कार इति वं० पु० पा०।

अनावृत्तान्यक्षराणि अन्तेष्वेकादशाथ तैः।
स्वरभिन्नैर्भवेत्(१) सङ्ख्या षट्सप्तत्या शतं स्मृतम् ॥८८॥
तैर्यन्त्रकरणं तेषां फलानि च यथाक्रमम्।
शृणु वक्ष्यामि देवेशि! साधकाभीष्टसिद्धये ॥८९॥
वृत्तयोर्मध्यगं कृत्वा पद्मषोड़शपत्रकम्।
तन्मध्ये कर्णिकामध्ये शक्तिं साध्यसमन्विताम् ॥९०॥
परेषु षोड़शार्णानि वेष्टयेत्तच्च मायया।
वृत्तयोरन्तरा(२)बाह्ये कुम्भं प्रोक्तं समालिखेत् ॥९१॥
एवमेकादशोक्तानि यन्त्राणि प्रथितानि वै।
विनियोगानथैतेषां क्रमेण शृणु पार्वति! ॥९२॥
प्रथमं हयरक्षाकृत् द्वितीयं गजरक्षकम्।
तृतीयं नृपरक्षायां चतुर्थं दण्डरक्षकम् ॥९३॥
पञ्चमं कुरुते राजवेश्मरक्षां तु सर्वतः।

---

अनावृत्तानीत्यादिभि र्वै इत्यन्तैरध्यर्द्धैश्चतुर्भिः श्लोकैः स्वरविकृतमूलविद्याक्षरैरेकादशयन्त्राण्युपदिशति। तत्र शक्तिं—ह्ल्लेखाम्॥८८॥८९॥९०॥ परेषु—दलेष्वित्यर्थः। तत्—पद्मम्। मायया—ह्ल्लेखया। वृत्तयोरन्तरा—पद्मबाह्यवृत्तद्वयवीथ्याम्। वृत्तयोरन्तरा मायया वेष्टयेदित्यन्वयः। बाह्ये—सर्वबाह्ये। प्रोक्तं—प्राग्वत्सविन्दुकशृङ्खलितवकारमालासहितम्। एतदुक्तं भवति—षोड़शदलं पद्मं विधाय तत् बहिर्वृत्तद्वयं कृत्वा तद्बहिः प्राग्वत् सविन्दुकशृङ्खलितवकारमालासहितमुपर्यधश्च पद्मद्वयोपेतकुम्भं च विधाय तत्पद्मकर्णिकामध्ये नामगर्भां ह्ल्लेखामालिख्य षोड़शदलेषु विद्यायाः स्वरविकृतेषु षट्सप्तत्यधिकशतसङ्ख्येष्वक्षरेषु आदितः षोड़शाक्षराणि अग्रादिप्रादक्षिण्येनालिख्य पद्मबाह्यवृत्तयोरन्तरा ह्ल्लेखया समावेष्टयेत्। एतत् प्रथमं यन्त्रम्। एवमस्यैव यन्त्रस्य षोड़शदलेषु अन्यानि च षोड़शाक्षराणि समालिखेत्। एवं प्रोक्तेन सार्द्धमेकादशयन्त्राणि भवन्तीति ॥९१॥

---

(१) स्वरभिन्नैर्यथा सङ्ख्यां स्वराषट्सप्ततिस्मृताम् इति सो पु० पा०।
(२) रन्तराद्बाह्यं इति सो पु० पा०।

षष्ठं सचिवरक्षाकृत् सप्तमं पुररक्षकम् ॥९४॥
अष्टमं गृहरक्षा स्यात् सर्वेषामपि सर्वदा ।
फणिचोरग्रहादिभ्यो भयेभ्यः शत्रुतस्तथा ॥९५॥
नवमं सर्वरोगार्त्तेः सर्वेषामपि सर्वदा ।
उत्तारकं स्याद्देवेशि ! प्राक्प्रोक्तविधिना युतम् ॥९६॥
दशमं भूर्जगं कृत्वा प्राग्वत्सिक्थोक्तलिङ्गकम्(१) ।
स्थापयेच्छीतले तोये घटादौ सविधेऽथ तम् ॥९७॥
पूजयेत्तानि च जपेत् स्पृशन् जीवकरेण त(म्)त् ।
घोराभिचारकृत्यादिजातो दाहज्वरः क्षणात् ॥९८॥
विमुच्य तं प्रयोक्तारं नाशयेत् तत्क्षणात् प्रिये ! ।
एवमेतानि यन्त्राणि नामतः सर्वकार्यकृत् ॥९९॥
सर्वासामपि नित्यानां प्रातरेव समृद्धये ।
पूजादौ च बलिं दद्यात् षोड़शार्णेन पार्वति ! ॥१००॥
पाणितत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ॥
अस्या निष्फालनात्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥१०१॥

---

विनियोगीत्यादिभिः कार्यकृदित्यन्तैरर्द्धैः सप्तभिः श्लोकैस्तेषां यन्त्राणां विनियोगानुपदिशति। तत्र—दण्डरक्षकं-सेनारक्षाकरमित्यर्थः ॥९२॥९३॥९४॥९५॥ प्राक्प्रोक्तविधिना युतमिति—प्राणप्रतिष्ठाभिषेकोधारणमर्चनं चोच्यते ॥९६॥ दशमैकादशयोः प्रयोगस्य समानत्वात् पृथक् नाभिहितः। सविधे—रोगार्तस्येतिशेषः। तं—घटम् ॥९७॥ तानि—लिखितान्यक्षराणि ॥९८॥ तं—रोगार्तम्। प्रयोक्तारं—अभिचारकृत्यादीनामितिशेषः। नामतः सर्वकार्यकृत्—एतानि सर्वाणि यन्त्राणि मध्ये नामाक्षरविन्यासकौशलात् सर्वकार्य्यकराणीत्यर्थः ॥

सर्वासामपि इत्यादिना श्लोकेन सर्वासां नित्यानां प्रातः पूजासमारम्भे च बलिविधानमन्त्रमतिदिशति। तत्र—सर्वासामितिशेषः। षोड़शार्णेन—तृतीयपटलावसानोक्तेन मन्त्रेणेतिशेषः ॥९९॥१००॥

---

(१) लिङ्गके इति सी० पु० पा०।

## इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमते चतुर्दशं पटलम् ।

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य प्रपञ्च-
सारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां शिवदूतीनित्याविद्याविधान-
प्रकाशनपरं चतुर्द्दशपटलं परिपूर्णं
परामृष्टम् ॥ १२ ॥

ग्रन्थसङ्ख्या—

षड़्विंशतिश्च यन्त्राणि व्याख्याग्रन्थाः शतद्वयात् ।
सार्द्धपादा विंशतिश्च पटलेऽस्मिंश्चतुर्दशे ॥

## अथ पञ्चदशपटलम् ।

अथ षोड़शनित्यासु दशमी या समीरिता ।
विद्योक्ता कुलसुन्दर्यास्तस्याः पूजाविधिं शृणु ॥१॥
तद्ध्यानमथ तन्न्यासं तच्छक्तीस्तत्समर्चनम् ।
तत्साधनं तथा रूपभेदान् यागांश्च वाक्प्रदान् ॥२॥
लोहितां लोहिताकारशक्तिवृन्दनिषेविताम् ।
लोहितांशुकभूषास्रग्लेपनां षण्मुखाम्बुजाम् ॥३॥
प्रतिवक्त्रं त्रिनयनां तथा चारुस्मितान्विताम् ।
अनर्घ्यरत्नघटितमाणिक्यमुकुटोज्ज्वलाम् ॥४॥
ताटङ्कहारकेयूररसनानूपुरोज्ज्वलाम् ।
रक्तस्तबकसम्भिन्नलसद्वक्षस्थलां शुभाम् ॥५॥
कारुण्यानन्दपरमामरुणाम्बुजविष्टराम् ।
भुजैर्द्वादशभिर्युक्तां सर्वेषां सर्ववाङ्मयीम् ॥६॥
प्रवालाक्षस्रजं पद्मं कुण्डिकां रत्ननिर्मिताम् ।
वसुपूर्णां(१) तच्चषकं (२)लुङ्गीव्याख्यानमुद्रिकाम् ॥७॥

---

### पञ्चदशपटलम् ।

पूर्वस्मिंश्चतुर्दशे पटले नवम्यास्त्वरितानित्याया विधानमुपदिश्यानन्तरं दशम्याः कुलसुन्दरीनित्याविद्याया विधानमुपदिशति । अथ षोड़शेत्यादि विगाहत इत्यन्तेन श्लोकशतरूपेण पञ्चदशेन पटलेन । तत्र अथ षोड़शेत्यादि प्रदानित्यन्तेन श्लोकद्वयेन पटलार्थानुद्दिशति । तत्र उक्ता—तृतीयपटल इति शेषः । तद्ध्यानं—नित्यसपर्यार्थमिति शेषः । तत्साधनं—विद्यासाधनम् । तयोः—विद्यादेवतयोः ॥१॥२॥

लोहितामित्यादिभिरपेक्षया इत्यन्तैर्नवभिः श्लोकैर्नित्यपूजाध्यानं काम्यध्यान-

---

(१) रत्नपूर्णां इति मू० पु० पा० । (२) सलुङ्गव्याख्यान इति सी० पु० पा० ।

दधानां दक्षिणै र्वामैः पुस्तकं चारुणोत्पलम्।
हैमीं च लेखनीं रत्नमालां कम्बुवरं(१) भुजैः ॥८॥
अभितः स्तूयमानां च देवगन्धर्वकिन्नरैः।
यक्षराक्षसदेवर्षिसिद्धविद्याधरादिभिः ॥९॥
ध्यात्वैवमर्चयेन्नित्यं वाग्लक्ष्मीकान्तिसिद्धये।
सितां केवलवाक्सिद्ध्यै लक्ष्म्यै हेमप्रभामपि ॥१०॥
(२)धूमाभां वैरिविद्विष्ट्यै मृतये निग्रहाय च।
नीलां च मूकीकरणे (तां)(३) स्मरेत्त(त्त)दपेक्षया ॥११॥
त्रिभिस्तैरुदितैर्मूलवर्णैः कुर्यात् षडङ्गकम्।
आदिमध्यावसानेषु पूजाजपविधौ क्रमात् ॥१२॥
प्रत्येकं तैस्त्रिभिर्बीजैर्दीर्घस्वरसमन्वितैः।
कुर्यात्कराङ्गवक्त्राणां न्यासं प्रोक्तं यथाविधि ॥१३॥

---

भेदांश्चोपदिशति। तत्र षण्मुखाम्बुजां—ऊर्ध्वप्राग्दक्षिणोदक्पश्चिमापरत इत्युपरिष्टात् वक्त्रन्यासे स्वयमेव वक्ष्यति ॥३॥४॥५॥ सर्ववाङ्मयीम्—सर्ववेदभाषाशब्दमयीम् ॥६॥ तच्चषकं—रत्नचषकम्। लुङ्गी—मातुलुङ्गी ॥७॥ दक्षिणैः भुजैरित्यन्वयः। अरुणोत्पलं-रक्तकैरवम्। अत्र उभयपार्श्वयोरूर्ध्वाद्यायुधकल्पनम् ॥८॥९॥१०॥ प्रति(वि)ग्रहाय व्याध्यादिक्लेशाय। तत्तदपेक्षया—तत्तत्प्रयोगानुगुण्येन ॥११॥

त्रिभिरित्यादिभिर्वर्णकैरित्यन्तैः पञ्चभिः श्लोकैः न्यासक्रममुपदिशति। तत्र आदिमध्यावसानेषु जपपूजाविधौ—जपस्य सङ्कल्पितसङ्ख्याया अर्द्धांशावसानम्। तत्र न्यासं कृत्वाऽन्यार्द्धांशं जपेत्। जपमध्ये न्यासः। अस्याः कुलसुन्दर्या एव सपर्यामध्यमावाहनात्पूर्वं जपमध्यन्यासकालवर्जं अन्ये न्यासकालाः सर्वसाधारणाः। क्रमात्—यथाक्रमम् ॥१२॥ दीर्घस्वरसमन्वितैः—प्रथमे कूटे दीर्घस्वरयोजनं नाम तस्य स्वराक्षरत्वात् आँ ईँ ऊँ ऐँ औँ अः इति केवलदीर्घस्वरषट्कोच्चारणम्। एवं सर्वत्र स्वराक्षरेषु दीर्घस्वरयोजनम्। अन्ययोः प्रागवत्। कराङ्गवक्त्राणां—करा-

---

(१) नवं भुजम् इति सी पु० पा०।
(२) धूमाभां इति सी पु० पा०।
(३) तामिति मू० नास्ति।

ऊर्ध्वं प्राग्दक्षिणोदक्च(१)पश्चिमापरनामभिः ।
शुचिनत्यन्तर(२)स्थैस्तैस्तदात्मसु यथाक्रमम् ॥१४॥
आधाररन्ध्रहृत्स्वेतद्द्वितीयं लोचनत्रये ।
तृतीयं श्रोत्रचिबुके चतुर्थं घ्राणतालुषु ॥१५॥
पञ्चमं चांसनाभीषु ततः पाणिपदद्वये ।
मूलमध्याग्रतोन्यस्येन्नवधा मूलवर्णकैः ॥१६॥

---

ङ्गयोः प्राग्वत् । वक्त्राणान्तु वक्ष्यमाणप्रकारेण॥१३॥ शुचिनत्यन्तरस्थैः—ऐँकारनमः-शब्दमध्यगतैः। तैः—वक्त्रनामभिः। तदात्मसु—तत्तत्तत्स्थानाकारेषु। पूर्वोक्त-तत्तत्षड़ङ्गबीजानां क्रमात् एकैकमेकैकन्यूने * ऐँ ऊर्ध्ववक्त्रायनमः इति ऊर्ध्ववक्त्रे न्यसेत्। एवमितरेषु। पूर्वदक्षिणोत्तरपश्चिमापरवक्त्रेषु पञ्चसु तथा-विधैस्तत्तन्नाममन्त्रैरुद्दिष्टक्रमेण न्यसेदिति सम्प्रदायार्थः। पूजासमये चावा-हनानन्तरं देवतायास्तत्तद्वक्त्रेषु प्रथमकूटाक्षरषट्के तत्तन्मन्त्रैः पूजयेत्। एतदुक्तं भवति - विद्यायाः कुलसुन्दर्यास्त्रीणि बीजान्येकैकमुक्तक्रमेण दीर्घस्वरषट्कयो-जनात् षोढ़ाषोढ़ा कृत्वा सम्भूय अष्टादशसङ्ख्यक्षरेषु प्रथमकूटाक्षरषट्कोन(ण)-पूजाजपविधिस्तत्प्रारम्भे प्रोक्तक्रमेण कराङ्गवक्त्रत्रयन्यासं कुर्यात्। तन्मध्ये द्वितीयकूटाक्षरषट्कोनं(णं) प्रोक्तक्रमेण कराङ्गवक्त्रत्रयन्यासं कुर्यात्। अवसाने तृतीयकूटाक्षरषट्कोनप्रोक्तक्रमात्न्यासत्रयं कुर्यादिति ॥१४॥

आधारेत्यादिना श्लोकेन मूलविद्याक्षरैस्त्रिभिर्नवावरणं† न्यासक्रममुपदिशति। तत्र एकं—एकवारमितिशेषः। एवं द्वितीयमित्यादीन्यपि वारवाचीनि ॥१५॥ पाणिपादद्वये—पादद्वये पादद्वयेच एवं चतुष्टयेपि। एकैकस्मिन्मूलमध्याग्रेषु त्रिषु स्थानेषु षष्ठवारं सप्तमं वारमष्टवारं नवमवारं च एवं पूर्वोक्तैः सह नवधा न्यसेदि-त्यर्थः। एतदुक्तं भवति—अत्र आधारादिषु नवसु त्रिकोणाकारेषु त्रिकेषु उद्दिष्टक्रमेण तत्तत्स्थानेषु त्रिभिर्विद्याक्षरैर्नववारं न्यासं कुर्यादिति। पूजाजपविधा-नारम्भमध्यावसानेषु व्यापकान्तमेवैतान् प्रोक्तान् न्यासान् कुर्यादितिसम्प्र-दायः ॥१६॥

---

(१) दक्षिणोत्तरपश्चिमेति सौ पु० पा०

(२) शुचिनः स्वंतरस्थैस्तैः स्तदात्मसु इति मू० पु० पा० ।

* एकैकानने इति इति वं० पु० पा० ।  † नववारं इति वं पु० पा० ।

भाषा सरस्वती वाणी संस्कृता प्राकृता परा।
खड्गरूपा वित्तरूपा रम्याप्यानन्दकौतुके(१) ॥१७॥
एता एकादश प्रोक्ता नवयोनिषु पूजयेत्।
बहिरष्टच्छदाम्भोजे ब्राह्म्याद्याश्च समर्चयेत् ॥१८॥
चतुरस्रे लोकपालान् शक्तिरूपांस्तथाऽर्चयेत्।
इन्द्राग्नियमरक्षोभिर्वरुणानिलसोमकान् ॥१९॥
ईशानं तद्विधिं प्रागाद्यष्टदिक्ष्वधरोत्तरम्।
शक्त्यन्तैर्नामभिः प्राग्वत् पूजयेत् सर्वसिद्धये ॥२०॥
चतुरस्रद्वयं कृत्वा प्राक्प्रत्यग्द्वारसंयुतम्।
तन्मध्ये वृत्तयुग्मस्थं कुर्यादष्टच्छदाम्बुजम् ॥२१॥
चतुस्त्रिपञ्चचत्वारिभागतोनवयोनिकम्।
कृत्वाऽत्र तां समावाह्य प्राग्वत्सम्यग्यथार्चयेत् ॥२२॥

---

भाषेत्यादिभिः सिद्धये इत्यन्तैश्चतुर्भिः श्लोकैर्देव्याः परिवारशक्तीरुद्दिशति—तत्र आनन्दकौतुके—आनन्दा कौतुका इति च द्वे शक्ती ॥१७॥ नवयोनिषु—मध्ययोन्यान्तु त्रिषु कोणेषु प्रथमां दशमीमेकादशीं च पूजयेत् ॥१८॥ तथा—वक्ष्यमाणप्रकारेण ॥१९॥ शक्त्यन्तैर्नामभिः—इन्द्रशक्त्यादिप्राग्वत्* सम्प्राचर्यन्तैः ॥२०॥

चतुरस्रद्वयमित्यादिभिर्वै इत्यन्तैरद्धर्द्धैश्चतुर्भिः श्लोकैर्नित्यपूजाचक्रं पूजाक्रमं चोपदिशति। तत्र चतुस्त्रिपञ्चचत्वारिभागतः—वृत्तव्यासस्येतिशेषः। चत्वारीति स्वातन्त्र्योक्तिः। एतदुक्तं भवति—वृत्तव्यासे प्राक्प्रत्यग्रूपं ब्रह्मसूत्रं कृत्वा तत् षोडशधा विभज्य प्रागादिचतुस्त्रिपञ्चांशेषु चिह्नानि विधाय तेषु चिह्नेषु त्रिषु तिर्यक् सूत्रत्रयं वृत्तावसानकं निष्पाद्य तेषु मध्यमसूत्रस्य दक्षिणोत्तरवृत्तसन्धिद्वयमारभ्य ब्रह्मसूत्रस्य पश्चिमवृत्तसन्ध्यवधि सूत्रद्वयमास्फाल्य पश्चिमसूत्रस्य दक्षिणोत्तरवृत्तसन्धिद्वयमारभ्य ब्रह्मसूत्रस्य पूर्वस्ववृत्तसन्ध्यवधि सूत्रद्वयमास्फाल्य ततः प्राक् सूत्रदक्षिणोत्तरवृत्तसन्धिद्वयमारभ्य पश्चिमसूत्रस्य ब्रह्मसूत्रसन्ध्यवधिसूत-

---

(१) कौतुकमिति सी० पु० पा०। (वाहुरूपा चित्ररूपारम्याथा इति मू० पु० पा०।

* सम्प्राचर्यन्तम् इति टी० पु० पा०।

एकादशस्त्वन्तशक्तौ मध्ययोनेस्तु पार्श्वयोः ।
तथैव लोकपालान्तशक्ती द्वारद्वयेऽर्चयेत् ॥२३॥
विशेष एष सामान्यमन्यदर्चनमम्बिके ! ।
सम्राज्ञ्यां बलिं दद्यात्पूजान्ते कुरुकुल्लया ॥२४॥
एवं नित्यार्चनं कुर्यान्नित्यहोमं घृतेन वै ।
प्रातः सलिलपानं च कुर्याद्विद्यात्मसिद्धये (१)॥२५॥
चन्दनोशीरकर्पूरकस्तूरीरोचनान्वितैः ।
काश्मीरकालागुरुभिर्मृगस्वेदमदैरपि ॥२६॥

---

द्वयमास्फाल्य प्रथमास्फालितं ब्रह्मसूत्रं सम्मार्जयेत् । एवं कृते वृत्तस्पृष्टाष्टास्रकं सुसमं नवयोनिचक्रं निष्पन्नं भवति । तद्बहिरष्टदलं पद्मं कृत्वा तद्बाह्ये प्राक्प्रत्यग्द्वारयुक्तं चतुरस्रद्वयं कृत्वा तत्र उक्तक्रमेण तां पूजयेदिति ॥२१॥२२॥ एकादशस्तु—भाषादिषु शक्तिष्वितिशेषः । अन्तशक्तिं* दशमीं आनन्दाख्यां शक्तिमेकादशीं कौतुकाख्यां शक्तिंच । मध्ययोनेस्तु पार्श्वयोः—मध्यस्थाया योन्या उत्तरदक्षिणयोः कोणयोरर्चयेत् । प्रथमाया भाषाख्यायाः शक्तेर्मध्ययोन्यग्रकोणस्थानां अष्टासुपूजनन्तु मध्ययोनिशक्तित्रयार्चानन्तरम् । लोकपालान्तशक्ती—अनन्तब्रह्मशक्ती । द्वारद्वये—पूर्वपश्चिमयोरिति शेषः । एतदुक्तं भवति—पूर्वद्वारस्य† दक्षिणपार्श्वे इन्द्रशक्तिं उत्तरपार्श्वे अनन्तशक्तिं पश्चिमद्वारि दक्षिणपार्श्वे वरुणशक्तिं उत्तरपार्श्वे ब्रह्मशक्तिं अन्याश्च तत्तद्दिक्षु समर्चयेदिति ॥२३॥ विशेष एषः—मध्ययोनेस्तु पार्श्वयोरित्याद्युक्तः । अत्र अष्टच्छदे पद्मे नवयोनिषु च अग्रादारभ्य प्रादक्षिण्येन पूजयेत् । चतुरस्रे तु उक्तक्रमेण पूर्वद्वारमारभ्य प्रादक्षिण्येनार्चयेदिति यावत् । सामान्यं पूर्वोक्तवदित्यर्थः ॥ ॥२४॥ एवं—उक्तप्रकारेण ।

प्रातरित्यादिना श्लोकोत्तरार्द्धेन ज्ञानसिद्ध्युपायमुपदिशति तत्र विद्यात्मसिद्धये—केवलया अनया कुलसुन्दरीविद्यया त्रिवारजप्तचुलुकसलिलपानेन सम्यक् ज्ञानसिद्ध्यात्मशुद्धिःस्यादिति यावत् ॥२५॥

चन्दनेत्यादिना सिद्धये इत्यन्तेनाध्यर्द्धेन श्लोकद्वयेन साधकस्य पूजारम्भे गुणविधानं देवीपूजागन्धद्रव्याणि चोपदिशति । तत्र मृगस्वेदमदैः—मृगस्वेदैः

---

(१) शुद्धये इति मौ० पु० पा० ।
* अन्तशक्ती इति टी० पु० पा० ।
† पूर्वद्वारस्य इति टी० पु० पा० ।

आलिप्तगात्रो हृष्टान्तःकरणो मौनमास्थितः(१) ।
चित्रभूषाम्बरः स्रग्वी जपेद्विद्यां निशामुखे ॥२७॥
पूजयेच्च शिवामेतैर्गन्धैः सर्वार्थसिद्धये ।
सर्वाभिरपि नित्याभिः प्रातर्मातृकया समम् ॥२८॥
त्रिजप्ताभिः पिबेत्तोयं तथा वाक्सिद्धये शिवे ! ।
अन्यैरपि च मन्त्रैस्तैर्विद्याभिस्तत्प्रसिद्धगति ॥२९॥
प्राग्वल्लक्षत्रयं जप्त्वा तद्दशांशं च तर्पयेत् ।
सुगन्धिसलिलैर्होमं तावत्त्रिमधुराप्लुतैः ॥३०॥
पालाशपुष्पैर्विकचैरदुष्टैरविखण्डितैः ।
सिद्धविद्या(?)पुनः कुर्यात्काम्यकर्माणि साधकः ॥३१॥
देव्या वर्णविभेदेन फलभेदाः समीरिताः ।
विद्यास्वरूपभेदाँस्तु शृणु वच्म्ये यथाविधि ॥३२॥

मृगमदैश्च ॥२६॥ हृष्टान्तःकरणः—देवताहंभावनयेति शेषः । पूजयेच्च चकारेण । निशामुखे इत्याकृष्यते । एतैर्गन्धैः—चन्दनादिभिः दशविधैर्द्रव्यैः ॥२७॥

सर्वाभिरित्यादिना प्रसिद्धगतीत्यन्तेनार्द्धाद्येन चैकेन श्लोकेन सर्वनित्याभिरन्यविद्याभिः सर्वमन्त्रैश्च वाक्सिद्धिप्रयोगमुपदिशति । तत्र सर्वाभिः—षोडशभिरितिशेषः ॥२८॥ विद्याभिः—अन्याभिरिति शेषः । एतदुक्तं भवति—प्रातःसन्ध्याविध्यवसाने चुलुकेनोदकमादाय तन्मध्ये वच्म्यमाणं मातृकायन्त्रं विभाव्य मातृकामकारादिक्षकारान्तामेकपञ्चाशदक्षरां प्रत्यक्षरं बिन्दुमतीं त्रिवारं संजप्य पश्चात् स्वाभिमतां नित्यामन्यां विद्यां मन्त्रं वा त्रिवारं सञ्जप्य तत्सलिलममृतमयं भावयन् मूलाधारात् जिह्वाग्रान्तां सरस्वतीनाड़ीं दीपशिखाकारां ध्यात्वा तस्यां होमधिया आचामेत् । एवं प्रतिदिवसं प्रातर्विदधतश्चतुर्विधं पाण्डित्यं स्वात्मज्ञानञ्च नियतं भवतीत्युपह्वरः सम्प्रदायार्थः ॥२९॥

प्राग्वदित्यादिना साधक इत्यन्तेन श्लोकद्वयेन विद्यासाधनप्रकारमुपदिशति । तत्र प्राग्वत्—ललितावत् । तावत्—तद्दशांशम् ॥३०॥ अदुष्टैः—कृम्याद्यनुपहतैः । अविखण्डितैः—वृन्तस्थैः ॥३१॥

(१) मौनसंयुत इति मू० पु० पा० ।

त्रयीमयत्वं विद्याया स्तथा व्यञ्जनसङ्गमात् (१)।
वाच्यवाचकरूपस्य प्रपञ्चस्यामितात्मनः ॥३३॥
कारणत्वं (२) परात्मत्त्वममेयत्त्वं च वै क्रमात् ।
कथयामि शृणु प्राज्ञे! विधिविस्तरवैभवाः(३) ॥३४॥
अकारादिः सामवेदोऽऋग्वेदस्य तदादिकः ।
यजुर्वेद इकारादिस्तेषां संयोगतः शुचिः ॥३५॥
तन्निष्पत्तिं शृणु प्राज्ञे ! प्रोक्तं(४) पूर्वापरक्रमात् ।
विलिख्य योजयेत्पूर्वं शब्दशास्त्रानुसारतः ॥३६॥
गुणसन्ध्या*ऋग्यजुषां ततस्तेनापरं तथा ।
वृद्धिसन्ध्या+समायुज्यादित्युत्पन्नं शुचेर्वपुः ॥३७॥
तेन त्रयीमयीविद्याकार्यकारणयोगतः ।
आद्यक्षरप्रसूतानि सर्वाण्यन्यानि येन वै ॥३८॥

---

देव्या इत्यादिभि र्वैभवा इत्यन्तैस्त्रिभिः श्लोकैर्विद्याव्याप्तिवैभवादिकं प्रस्तौति। तत्र देव्या वर्णविभेदेन—सितां केवलवाक्सिद्धौ इत्यादिपूर्वोक्तेन देवीरूपवर्णभेदेन ॥३२॥ त्रयीमयत्वं—वेदमयत्वम्। विद्यायाः—कुलसुन्दर्या इति शेषः। वाच्यवाचकरूपस्य—शब्दात्मना अर्थात्मना च ॥३३॥ परात्मत्त्वं—परमोत्कृष्टत्त्वम्। अमेयत्त्वं—देशकालाकारैरनियन्त्रितत्त्वम् ॥३४॥

अकारादिरित्यादिभिर्वै इत्यन्तैश्चतुर्भिः श्लोकैर्विद्यायाः प्रथमकूटस्य वाग्भवस्य त्रयीमयत्वमुपदिशति। तत्र एतदुक्तं भवति—सामवेदस्यादिभूतमकारं तत्पार्श्वे ऋग्वेदस्यादिभूमकारम्। उभयोरप्युपरि यजुर्वेदस्यादिभूतमिकारं च विलिख्य पूर्वेणाकारेण (उ) इकारयोगात् गुणसन्ध्या एकारं उत्तरेणाकारेण तेनैव एकारेण चोक्तप्रकारेण वृद्धिसन्ध्या एकारं च निष्पाद्य एवं त्रयीप्रथमाक्षरनिष्पन्नत्वादैकारस्य त्रय्याः प्रथमाक्षरत एव उपरितनयोरक्षरसन्दर्भस्य बीजाङ्कुरवत् तेषां कारणत्वात् तन्मयत्वादैकारस्य च त्रयीमयत्वमुक्तमिति ॥३५॥३६॥३७॥३८॥

---

(१) संश्रयात् इति मू० पु० पा०।
(२) कारणं परात्मत्त्वममी इति सी० पु० पा०।
(३) विचित्रा सत्त्ववैभवा इति मू० पु० पा०।
(४) प्रोक्तामूर्द्धाधरःक्रमात् इति मू० पु० पा०।
* गुणसञ्ज्ञा इति सी० पु० पा०।
+ वृद्धिसंज्ञा इति सी० पु० पा०।

मध्यमार्णगतप्राणा व्यञ्जनादेस्तु मातृका।
प्राग्वत्कारणकार्यत्वयोगाद्वाचकरूपकम् ॥३९॥
तद्वर्णकरसायोगा भूतादित्वेन वाच्यता।
इति वाचकवाच्यत्वरूपाद्विश्वात्मतोदिता ॥४०॥
परारूपं तृतीयेन त्रिंश(तो)कोक्तं त्रिकात्मकम्।
एवमेषा विश्वमयी विद्यारूपभिदाः शुभाः ॥४१॥
शुचिराद्या वाक्स्वरूपा द्वितीया वह्निरीरिता।
विन्दुसर्गात्मनोरैक्यरूपा सात्वावयोर्वपुः* ॥४२॥

---

मध्यमित्यादिना उदिता इत्यन्तेन श्लोकद्वयेन विद्याया विशिष्टसन्दर्भरूपं त्रयीमयत्वमुक्त्वा अशेषशब्दानामशेषार्थानां चान्योन्यव्याप्तिरूपतां विद्यायाश्च ऐक्यमुपदिशति। तत्र एतदुक्तं भवति—विद्याया द्वितीयाक्षरगतककारलकारयोर्मध्ये व्यञ्जनात्ममातृकादिभूतत्वात्ककारस्य पञ्चभूतादिस्तृतीयखण्डस्य तस्यास्तत्रोक्तं व्यञ्जनस्य ज्ञेयरूपत्त्वं अचां ज्ञानरूपत्त्वं विसर्जनीयस्य ज्ञातृरूपत्वं एवं ज्ञातृज्ञानज्ञेयरूपत्रिकात्मकविश्वात्मकत्वमस्यास्तृतीयखण्डस्याप्युक्तभूतपृथिव्यक्षरात्मकत्वाल्लकारस्यचैवमादिग्रहणबलादशेषः शब्दःशेषः पञ्चभूतात्मकोवाच्यवाचकरूपः प्रपञ्चश्च एवमभिन्नरूपोऽनया विद्यया व्याप्त इति ॥३९॥४०॥

परारूपमित्यादिना श्लोकेन पूर्वं विद्यायाः प्रथमद्वितीयाक्षरव्याप्तिमुपदिश्य तृतीयाक्षरव्याप्त्यादिकमुपदिशति। तत्र—एतदुक्तं भवति—प्रागुपदिष्टत्रिंशिकाख्यागमप्रोक्तपराविद्यारूपत्वात् (अस्याविद्यायास्तृतीयखण्डस्य तस्यास्तत्रोक्तं व्यञ्जनस्य ज्ञेयरूपत्वं चोक्तज्ञानरूपत्त्वं विसर्जनीयस्य ज्ञातृरूपत्त्वं च, एवं ज्ञातृज्ञानज्ञेयरूपत्रिकात्मकविश्वात्मकत्वमस्यास्तृतीयखण्डस्याप्युक्तमिति) एवमस्या विद्यायाःत्रिभिःखण्डैस्त्रिप्रकारतोऽशेषविश्वात्मता प्रतिपादिता। एवं रूपतोमियत्वं च सुप्रतिपादितत्वादव्यक्तं† तेन अनया विद्यया नासाध्यमस्ति सत्सम्प्रदायतः साधकस्येत्यर्थः। रूपभिदा—अस्या विद्यायाः स्वरूपभेदान् शृण्वित्यर्थः ॥४१॥

शुचिरित्यादिभिरात्मिकाइत्यन्तैस्त्रिभिः श्लोकैः सकलत्रैपुरविद्याराशिकन्दभूतां सङ्केतविद्याख्यपरमरहस्यभूतां विद्यामुपदिशति—तत्र शुचिराद्या वाक्स्वरूपा

---

* ( ) एतदन्तर्गतोग्रन्थः सो० पु० नास्ति। † तत्त्वात्तन्नोक्तं इति टी० पु० पा०।

तेन बीजेन विश्वात्मरूपा सा सम्यगीरिता ।
वनं तृतीयमाख्यातं मायया स्वेन वा युतम् ॥४३॥
एषा त्रैपुरकंदा स्यात्सङ्केतेति निगद्यते ।
ज्ञातृज्ञानज्ञे यदोषगुणतेजस्त्रयात्मिका ॥४४॥
अस्यास्तु मध्यमे बीजे रसाप्राणनियोजनात् ।
वाच्यवाचकरूपात्मा प्रपञ्चस्य हि कारणे ॥४५॥
तृतीये हृत्समायोगात् त्रिकविश्वात्मतोदिता ।
हंसहृद्योगतस्तेषु जङ्गमा स्थावरा त्मता ॥४६॥
एकद्व्यादिसमायोगाद्व्यञ्जनानां तथा त्रिषु ।
ज्ञातुं न शक्यते संख्या विद्यानां परमेश्वरि ! ॥४७॥

---

प्रथमा वाग्भवाख्या द्वादशस्वरविग्रहा । द्वितीया वह्निः--सकलमातृकाक्षर-कारणभूतविन्दुविसर्जनीयैक्यरूपशिवशक्त्यात्मकश्चतुर्थस्वरः ॥४२॥ तेन बीजेन—तुर्यस्वरूपेण । विश्वात्मरूपा सा—प्रतिपादितशिवशक्तिरूपेण चतुर्थस्वरेण सा विद्या विश्वात्मरूपा प्रोक्तेत्यर्थः । वनं तृतीयम्—केवलञ्चतुर्दशस्वरास्तृतीया विद्या। मायया स्वेन वा – विसर्जनीयेन विन्दुना वेत्यर्थः॥४३॥ त्रैपुरकन्देति सङ्केतेतिचास्या-विद्यायाः संज्ञेति। तत्र कन्दवत्कन्दत्वम्। अस्या विद्यायास्त्रिषु खण्डेषु वक्ष्य-माणैकद्व्यादिव्यञ्जनयोगसम्भूतानामसङ्ख्यानां त्रैपुरविद्याराशीनां मूलभूतेत्यर्थः । ज्ञातृज्ञानज्ञेयदोषगुणतेजस्त्रयात्मिका। एतदुक्तं भवति—ज्ञातृज्ञानज्ञेयात्मत्वेन वातपित्तश्लेष्मरूपत्वेनाग्निसूर्यसोमात्मकत्वेन चाशेषं विश्वं सम्पूर्यावतिष्ठत इति ॥४४॥

अस्या इत्यादिना आत्मताइत्यन्तेन श्लोकद्वयेन अस्याविद्याया मध्यमे ककार-लकारयोगादुपरमे सकारयोगाच्च प्रागुपदिष्टां सव्याप्तिं त्रिखण्डेषु हकारसकार-योगात् व्याप्तिवासनां चोपदिशति। तत्र अस्याः सङ्केतविद्यायाः कारणेति स्वातन्त्र्योक्तिः। कारणतेत्यर्थः॥२५॥ त्रिकविश्वात्मता—ज्ञातृज्ञानज्ञेयात्मरूपविश्वा-त्मता। तेषु—त्रिषु कूटेष्वितिशेषः। जङ्गमस्थावरात्मता। एतदुक्तं भवति। तेषु त्रिषु बीजेषु प्रत्येकं भकारसकारसंयोगात् अस्याश्च सङ्केतविद्याया जङ्गमस्था वरात्मत्ववासनोक्तेति ॥४६॥

एवं साऽनन्तविभवा तां निःशेषं वदेत्कथम्(१)।
तथापि भक्तसन्त्राणहेतोः काञ्चन वच्मि ते ॥४८॥
आयुर्लक्ष्मीकीर्तिभोगसौन्दर्यारोग्यदायिका।
ऐहिकामुष्मिकज्ञानमयी सकलसिद्धिदा ॥४९॥
विद्यायाः कुलसुन्दर्या हंसयोगात्त्रिषु क्रमात्।
विजयाख्या महाविद्या विश्वसंत्राणतत्परा ॥५०॥
हृत्समायोगतस्तेषु जीवाख्या विश्वचिन्मयी।
द्वयोर्नियोजनात्तेषु जायते (सा) आवयोर्वपुः ॥५१॥
हृदादिस्त्वन्मयी विद्या हंसादिर्मन्मयो मनुः।
तेषु दाहसमायोगाद्विश्वाख्या विश्वविग्रहा ॥५२॥

---

एकद्वेत्यादिना श्लोकेन तस्याः सङ्केतविद्याया एकद्व्यादिव्यञ्जनयोगादिना-ऽसङ्ख्यातरूपत्वमुपदिशति। तत्र एतदुक्तं भवति—तस्याः सङ्केतविद्यायास्त्रिषु-खण्डेषु द्वितीयतृतीयविधुरं प्रथमे वा प्रथमतृतीयविधुरं द्वितीये वा प्रथमद्वितीय-विधुरं तृतीये वा तेष्वन्यतमविधुरमितरयोर्वा समस्तेषु वा कादिक्षान्ताक्षराणां पञ्चत्रिंशत्सङ्ख्याकानां क्रमव्युत्क्रमापक्रम एकद्व्यादिसमायोगात् या विद्याः संभवन्ति तासां संख्यास्वरूपं ज्ञातुं वक्तुं वा न केनापि शक्यमिति ॥४७॥

एवमित्यादिना सिद्धिदा इत्यन्तेन श्लोकद्वयेन उक्तवक्ष्यमाणास्त्रैपुररत्नभूता-विद्यास्तवनमुखेन प्रस्तौति। तत्र सा—सङ्केतविद्या। तां—एकद्व्यादिसम्भूताम्। असङ्ख्याता विद्याः। काञ्चन—प्रधानभूताम्। ऐहिकामुष्मिकज्ञानमयी इत्युक्त्या असमीचीनतद्द्वयप्रतिपादकविद्याभ्योविशिषयति ॥४८॥

विद्याया इत्यादिभिः स्मृता इत्यन्तैः षड्भिश्लोकैरेकादशविद्यास्वरूपोपदेशं सम्भूयोक्तानां त्रैपुररत्नभूतानां विद्यानां सङ्ख्यानिगमनं च करोति। तत्र एतदुक्तं भवति—कुलसुन्दर्यास्त्रिषु खण्डेषूपरि प्रत्येकं हकारयोजनाद्विजयाख्या सर्वेषा-मैहिकामुष्मिकज्ञानप्रदानात् सर्वरक्षाकरोविद्या ॥५०॥ तेषु हकारमपास्य तत्र सका-रयोजनात् विश्वचैतन्यरूपिणो (बीजा) जीवाख्याविद्या ॥५१॥ तेषु तत्र हकारपूर्वं-सकारयोजनात् मन्त्राख्योमन्त्रः सकारपूर्वंहकारयोजनात् विद्याख्याविद्या तेषु त्रिषु

---

(१) तान्यशेषं ब्रुवे कथमिति सू॰ पु॰ पा॰।

प्रत्येकं शक्तिपुटिता विद्या विश्वविमोहिनी ।
खेचराम्बुरसोपेतमायाभ्यां पुटिता तु सा ॥५३॥
त्रिपुरामृतसंज्ञा सा सर्वाप्ययन(१)विग्रहा ।
मायाद्या मोहिनी प्रोक्ता तन्मध्या क्षोभिणी मता ॥५४॥
तदन्ता क्लेदिनी ख्याता वातादिस्थान्महोदया ।
त्रयोदशेति कथितास्त्रिपुरा(त्रिनस)विधयः स्मृताः ॥५५॥
आसां क्रमविपर्यासजाताविद्याष्टसप्ततिः ।
तासां विधानं ते प्रोक्तमशेषं लक्षसागरे ॥५६॥
सम्पत्करीति काप्यस्ति विद्या साऽचिन्त्यवैभवा ।
तां वक्ष्ये शृणु देवेशि ! साधकाभीष्टसिद्धये ॥५७॥

कूटेषु प्रथमे हकारसकारयोरधस्तादन्त्ययोर्व्यञ्जनान्तेरेच फयोजनात् विश्वमयी विश्वाख्याविद्या ॥५२॥ केवलक्रमे सुन्दर्यास्त्रिखण्डानि प्रत्येकं ह्स्लें खाभ्यां पुटयेत् । सा विश्वमोहिनी विद्या॥५३॥ पुनरपि तस्याएव ह्स्लें खा(ह्स्लें कारा)भ्यां पुटनात् त्रिपुरामृताख्या विद्या ॥५४॥ तत्त्वज्ञानात् सर्वलाभात् (संयोग) संपोषणविग्रहा । तस्याः कुलसुन्दर्याः प्रथमकूटमपास्य तत्र ह्स्लें खायोजनात् मोहिनीनामविद्या । तथा-मध्यमखण्डमपास्य तत्र ह्स्लें खाया नियोजनात् क्षोभिणीनाम विद्या । तद्वत् चरमखण्डस्थाने ह्स्लें खानियोजनात् क्लेदिनीनाम विद्या । पुनस्तस्याः कुलसुन्दर्याः प्रथमखण्डमपास्य तत्र अकारयोजनात् महोदयाख्या विद्या । एवं त्रिपुराकन्दाख्या सङ्केतविद्या तदुवकुलसुन्दरीविद्याभ्यां समेता विजयादिकामहोदयान्ता कएादश-विद्याः सम्भूय त्रयोदशविद्याः त्रिपुरारत्नाख्याः समीरिता इति ॥५५॥

आसामित्यादिना श्लोकेन तासां त्रयोदशविद्यानां पञ्चत्रिंशत्पटलोक्तक्रमाप-क्रमव्युत्क्रमयोगान् प्रत्येकं षट्भेदतः सम्भूय अष्टसप्ततिसङ्ख्याता विद्यास्तासां प्रपञ्चितं विधानं लक्षसागराख्यागमे समुपदिष्टमिति चोपदिशति ॥५६॥

संपत्करीत्यादिभिः समुन्नयेदित्यन्तेनैकादशभिः श्लोकैस्तत्प्रस्तावपूर्वमन्वर्थ-संज्ञसम्पत्करीविद्योपदेशं तद्ध्यानोपदेशं तद्विधानोपदेशं पूर्वोक्ताष्टसप्ततिविद्याना-मुपास्तिक्रमं च करोति । तत्र प्राणोरसामरुद्वह्निस्वयोगादाद्यमीरितं—ककार-

(१) प्यानय इति टी० पु० पा० ।

प्राणोरसामरुद्दक्षिस्वयोगाद्यमोरित(ा)म् ।
वातेन च चरस्वाभ्यां द्वितीयमपि पार्वति ! ॥५८॥
हंसहृद्वनमायाभिस्तृतीयं परमेश्वरि ! ।
एवं त्रिवर्णा सा विद्या विधानं चाथ कथ्यते ॥५९॥
तृतीयबीजेनाङ्गानि दीर्घस्वरयुजा क्रमात् ।
कुर्यात्कराङ्गयोः प्रागवदित्थं ध्यायेच्च तां ततः ॥६०॥
दाड़िमीकेसरप्रख्यदेहवासोविभूषणाम् ।
चतुर्भुजां त्रिनयनां प्रसन्नस्मेरवक्त्रकाम् ॥६१॥
रत्नाभिषेकसम्पन्नामष्टपत्राब्जमध्यगे ।
त्रिकोणे स्वस्तिकासीनां करुणानन्दमन्दिराम् ॥६२॥
प्रवालाक्षस्रजं रत्नचषकं रत्नपूरितम् ।
पुस्तकं च वरं(दं) हस्तैर्दधानां सर्वमङ्गलाम् ॥६३॥
अकारादिसकारान्तषोड़शत्रयकल्पिते ।
कुलासने हलक्षार्णमध्ये तद्विद्ययाऽन्विते ॥६४॥

---

लकारआकारईकारविन्दुभिस्तस्याः प्रथमं कूटमुक्तमिति यावत्। अत्र आकार ईकारयोर्गुणसन्धिर्न भवति। वातेन च चरस्वाभ्यां द्वितीयम्-अकारएकारबिन्दुभिर्द्वितीयं कूटम्। अत्रापि वृद्धिसन्धिर्न भवति ॥५७॥५८॥ हंसहृद्वनमायाभिस्तृतीयम्—हकारसकारऔकारविसर्जनीयैस्तृतीयं कूटम्। परमेश्वरीति देवीसम्बुद्धिः ॥५९॥ कराङ्गयोः—कराङ्गन्यासयोः। विन्दुयुक्तेन दीर्घस्वरयुजा तृतीयबीजेन कुर्यादित्यर्थः। इत्थं—वक्ष्यमाणप्रकारेण ॥६०॥६१॥ स्वस्तिकासीनां—स्वस्तिकसंज्ञकेन आसनेन स्थिताम्। मन्दिरामिति स्वातन्त्र्योक्तिः—मन्दिरमित्यर्थः ॥६२॥ करेषु दक्षिणोर्ध्वादि वामाधरान्तं धार्याणि पार्श्वक्रमेण कल्पयेत् ॥६३॥ अकारादिसकारान्तषोड़शत्रयकल्पिते—अकारककारथकारोपक्रम-विसर्जनीयतकारसकारावसानत्रिरेखा सर्वत्र त्रिकोणकल्पिः तन्मध्ये शिष्ट-हलाड्क्षिदयाक्षादिशब्दार्थप्रपञ्चविग्रहा परमा शक्तिः स्थितेति। शक्तिमन्त्रेषु परमोपह्वरः सम्प्रदायार्थः। कुलासनं नाम एवं विशिष्टं चक्रं त्रिकोणम्। तद्विद्ययाऽन्विते

समावाह्यार्घ्यसङ्कल्पपूर्वं तामर्चयेत्क्रमात् ।
मध्ये त्रिकोणकोणेषु रतिप्रीतिमनोभवान्(म्) ॥६५॥
(१)अग्रादिसव्यगास्तद्वदष्टपत्रेषु मातरः ।
चतुरस्रे लोकपालान् प्राग्वच्छक्तीः समर्चयेत् ॥६६॥
विधानमष्टसप्तत्या(२) इति सम्यक्समीरितम् ।
बलिद्वयं च होमं च प्राग्वदन्यत् समुन्नयेत् ॥६७॥
चतुर्गुणचतुर्थांशस्वसमाननियोजिते ।
ब्राह्मीरसवचादुग्धे शृतं सर्पिस्त्रिभिर्दिनैः ॥६८॥

—तद्विद्यया सहिते। एतत्कुल्लासनविशेषणम् ॥६४॥ अर्घसङ्कल्पः प्राग्वत् ॥६५॥ सव्यगाः—वामावर्तक्रमेण। तद्वत्—अग्रादिवामावर्तक्रमेण। अष्टमातरः—ब्राह्म्याद्याः प्राग्वत्। शक्तीः—शक्तिरूपान् प्रागादिस्थितानित्यर्थः॥६६॥ अष्टसप्तत्या विद्यानामितिशेषः। अष्टसप्ततिविधानां विद्यानामेतदेव विधानमित्यर्थः। बलिद्वयं आद्यन्तयोरितिशेषः। होमं—नित्यहोमं प्राग्वत्। एतदुक्तं भवति—पूजादौ षोड़शाक्षरेण मन्त्रेणावसाने कुरुकुल्लासप्ताक्षर्या च प्रोक्तक्रमेण बलिद्वयं दत्वा नित्यपूजाक्रमतो होमं कुर्यादिति। अन्यत्—आद्यन्तयोर्मन्त्राणां बीजद्वयसप्ताक्षरीयोजनादि। आसां नित्यसपर्याचक्रविरचनाक्रमो यथा—प्राक्प्रत्यक्द्वारोपेतं समचतुरस्रद्वयं विधाय तदन्तरष्टदलं पद्मं विधाय तत्कर्णिकायां यथामानं समत्रिरेखां योनिं विधाय तत्र प्रोक्तक्रमेण प्रोक्ताः शक्तीः पूजयेदिति ॥६७॥

चतुर्गुणेत्यादिना कविरित्यन्तेन श्लोकद्वयेन ब्राह्मीघृतोत्पादनविधिं तेन घृतेन मूकस्य वाक्सिद्धिप्रयोगं चोपदिशति—तत्र ब्राह्मीव चे* गुरुमुखादवगन्तव्ये। सर्पिः—घृतम्। एतदुक्तं भवति—सम्पादनीयघृतमानस्य चतुर्गुणं ब्राह्मीस्वरसमानं घृतमानचतुर्थांशं वचामानं घृतमानसमानं क्षीरं, एवमुक्तमानक्रमेण चत्वारि संयोज्य त्रिभिर्दिनैर्मृद्वग्निना सम्पाच्य चिक्कणघृतभाण्डे संशोध्यावतार्य शिशिरे तस्मिन्वक्ष्यमाणमातृकायन्त्रं रजतपट्टे विधाय कृतप्राणप्रतिष्ठं तद्यन्त्रमस्मिन् घृते निक्षिप्य कुशदूर्वादर्भेष्वन्यतमेन घृतं संस्पृशन् सबिन्दुकां मातृकामयुतवारं

(१) अग्रादिसर्वगा इति मू० पु० पा०। (२) विधानमिषुस्र इति सो० पु० पा०।

* ब्राह्मी च इति टी० पु० पा०।

सयन्त्रं मातृकाविद्याजप्तं त्वयुतमादरात् ।
दिनशोविलिहेत्प्रातरब्दान्मूकोभवेत् कविः ॥६९॥
शिवोऽम्बिका कुमारश्च विधिर्विष्णुस्तथा रमा ।
कुबेरोरविचन्द्रारज्ञागुरुसितसौरयः ॥७०॥
वारेशास्तेषु वारेषु तांस्तु तद्दिनविद्यया ।
नामसप्ताक्षरीयुक्त्या पूजयेत्तर्पयेद्धुनेत् ॥७१॥
वर्णौषधिसमुत्थेन भस्मना मन्त्रितेन तु ।
मातृकान्याससहितं स्पृशेद्रक्षाकृते मनुम्(२) ॥७२॥
विशेषतो महीपानामार्तानां च विधिं चरेत् ।
तेन ते सुखिनोभूयः सान्वया यावदायुषम् ॥७३॥

---

जपित्वा पश्चात् प्रोक्तविद्यास्वन्यतमां(च) तत्संख्यं जपित्वा सुरक्षितं निक्षिप्य क्वचित्त्रिसन्ध्यं मातृकया विद्यया च समर्चयेत् । प्रातः प्रातः मातृकाविद्याभग्रां त्रिवारमभिजप्तं निष्कत्रयमानं तद्घृतं लिहतः संवत्सरात् प्रोक्तफलसिद्धिरिति॥६८॥६९॥

शिव इत्यादि हुनेदित्यन्तेन श्लोकद्वयेन अर्कादिसप्तवाराणां प्रतिवारं देवताद्वयं तत्पूजादिकं तत्प्रयोजनं चोपदिशति । तत्र रमा—लक्ष्मीः । आरः—भौमः । सितसौरय इति स्वातन्त्र्यात् । सितसौरेत्यर्थः । सितः—शुक्रः ॥७०॥तेषु सप्तस्वर्कादिष्विति शेषः । तान्‌ - वारेशान् । द्विविधान् । तत्तद्दिनजविद्यया-तत्तद्दिननित्याविद्यया । नामसप्ताक्षरीयुक्त्या—तत्तन्नाम तदन्ते च सप्ताक्षरीयुक्त्येत्यर्थः । हुनेत्—जुहुयात् । तेन वाञ्छितसिद्धिः स्यादिति शेषः । एतदुक्तं भवति—अर्कादिषु सप्तसु वारेषु प्रतिवारं प्रोक्तान् द्विविधान् वारेशान् प्रोक्तक्रमेण द्वौ द्वौ तत्तद्दिननित्याविद्यायुक्तेन सप्ताक्षर्यन्तेन तत्तन्नाममन्त्रेण तत्तन्मण्डले पूजातर्पणहोमादिना वाञ्छितसिद्धिरिति ॥७१॥

वर्णौषधीत्यादिना यावदायुषमित्यन्तेन श्लोकद्वयेन वक्ष्यमाणविद्यया मातृकावर्णौषधिभस्मना मातृकायन्त्रलेखनप्राणप्रतिष्ठापुरःसरं विद्यामातृकाभिजप्तेन विद्यया क्रमितया मातृकया वक्ष्यमाणमातृकाक्षरस्थानेषु क्रमेण सन्ध्ययोः स्पर्शतः सर्वापद्भ्यो रक्षा भवति सर्वेषामित्युपदिशति ॥७२॥७३॥

---

(२) कृतेन तु इति सी० पु० पा० ।

क्रूरेषु व्याधिषु प्राप्तेष्वभ्यर्च्यैवं तु मण्डले ।
नवकोष्ठे नव प्रोक्तान् राहुकेतुसमन्वितान् ॥७४॥
मध्येन्द्रयमपाशीन्दुवह्निरक्षोऽनिले(ख)परे ।
कोष्ठे तांस्तैर्यजेत्सद्योमुक्तरोगः सुखी भवेत् ॥७५॥
ग्रहार्त्तिषु रिपुक्लेशे दुर्भिक्षे त्रिविधे तथा ।
उत्पाते समरोद्योगे कुर्यादुक्तार्चनादिकम् ॥७६॥
सम्पूज्य तद्विदां सम्यग्दद्याद्गां स्वर्णमम्बरम् ।
तेन सर्वापदुन्मुक्तः सुखी जीवति भूतले ॥७७॥
ब्रूहि मे मातृकान्यासं तद्यन्त्रं परमेश्वर ! ।
कथयामि द्वयं तेऽद्य वक्ष्ये तत्पटलेऽखिलम् ॥७८॥
ह्रस्वदीर्घस्वरद्वन्द्वपुटितैः षण्ढवर्जितैः ।
कुर्यादङ्गानि षड्वर्गैः पञ्चपञ्चदशाक्षरैः ॥७९॥

---

क्रूरेष्वित्यादिभिर्भूतले इत्यन्तैश्चतुर्भिः श्लोकैर्नवग्रहपूजया विपत्तारणमुपदिशति। तत्र—एवं—अष्टाविंशपटलवक्ष्यमाणप्रकारतः। मण्डले नवकोष्ठगते—तत्तन्मण्डले इत्यर्थः ॥७४॥ मध्येत्यादिना ग्रहाणां वक्ष्यमाणं दिग्विभागं स्मारयति। शुभाशुभक्रमात्। तान्—नवग्रहान्। तैः—उक्तप्रकारैर्दिननित्यासमाक्षरीमध्यगतैर्नवभिर्नाममन्त्रैः॥७५॥ त्रिविधे इत्यस्य उत्पाते इत्यत्रान्वयः॥७६॥ तद्विदां—विद्याविदाम्। गां—धेनुम्। तेन—अर्चनादिना। एतदुक्तं भवति प्राक्प्रत्यक्दक्षिणोदगग्रैश्चतुर्भिः सूत्रैः समान्तरालं नवकोष्ठानि निष्पाद्य तेषूक्तक्रमेण नवग्रहाणां अष्टाविंशपटलवक्ष्यमाणानि मण्डलानि विधाय तत्र तत्तद्दिननित्यासमाक्षरीमध्यगतैस्तत्तन्नाममन्त्रैर्नवभिः पूजातर्पणहोमादिना तद्विद्याविदां सम्पूजनस्वर्णादिदानेन सर्वापद्भ्योविमुक्तः सुखी भवतीति ॥७७॥

ब्रूहीत्यादिभिर्न्यसेदित्यन्तैरष्टभिः श्लोकैर्मातृकाषडङ्गन्यासादिकं मातृकान्यासं चोपदिशति। तत्र तद्यन्त्रं—मातृकायन्त्रम्। द्वयं—न्यासं यन्त्रं च। अद्य—अस्मिन् पटले। तत्पटले—मातृकापटले। अखिलं—अन्यदितिशेषः॥७८॥

ह्रस्वेत्यादिना इत्थमित्यन्तेन त्रिपादाधिकेन एकेन श्लोकेन एतदुक्तं भवति—स्वरेषु—ऋॠऌॡ इति चत्वारि षण्ढाक्षराणि। तद्वर्जितैरन्यैर्द्वादशभिः अइउए-

स्वरेषु मध्यतः प्रोक्ताश्चत्वारः षण्ढविग्रहाः ।
कराङ्गयोर्विधायेत्थं आदिक्षान्ताक्षराणि वै ॥८०॥
भाले वक्त्राक्षतौ नेत्रश्रोत्रनासाकपोलतः ।
ओष्ठदन्तशिरोजिह्वास्वेकशोविन्यसेत्स्वरान् ॥८१॥
करयोः पादयोर्मूलमध्यसन्धिष्वथाग्रतः ।
विन्यसेच्चतुरोवर्गान् पञ्चमं पार्श्वपृष्ठतः ॥८२॥
नाभौ हृदि च विन्यस्य व्यापकान् दशधातुषु ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रान्तगामिषु ॥८३॥
प्राणशक्त्यात्मसु तथा न्यसेदेवं समाहितः ।
हृदयस्पर्शिनां तेषां स्मरन् धातुषु विन्यसेत् ॥८४॥
अथवा हृदये स्कन्धयुगे च त्रिककक्षयोः ।
(१)हृदयाधस्तथापादजठरे वदने न्यसेत् ॥८५॥

---

ओत्र' इति षड्भिर्ह्रस्वैः, आ ई ऊ ऐ औ अः इति दीर्घस्वरैः षड्भिश्च सविन्दुकैः कचटतपवर्गान् पञ्चपञ्चाक्षरान् यादिकं दशाक्षरं वर्गं च सविन्दुकान् तान् प्रोक्तक्रमेण पुटितान् कृत्वा तैः षड्भिः अन्ततो जातियुक्तैर्मन्त्रैः कराङ्गन्यासं कुर्यादिति ॥७९॥८०॥

आदिक्षान्तेत्यादिभिः न्यसेदित्यन्तैः पादाद्यैः पञ्चभिः श्लोकैर्देहे मातृकाक्षरविन्यासक्रममुपदिशति । तत्र मूलमध्यसन्ध्योः । मूलसन्ध्योरितिदोःकूर्परयोः, मध्यसन्ध्योरितिमणिबन्धाङ्गुलि मूले चोच्येते, पादयोस्तु मूलमध्यशब्देन कटी जानुनी उच्येते । तत्र मध्यसन्धिद्वयमिति प्रपदाङ्गुलिसन्धो उच्येते । पञ्चमं वर्गमितिशेषः ॥८१॥८२॥ व्यापकान्—वर्णानितिशेषः । यादिक्षान्तानां व्यापकत्वं तेषां धात्वादिस्वरूपत्वात् ॥८३॥ प्राणशक्त्यात्मसु—प्राणशक्त्यात्मानोपि धातुत्वेनेष्यन्ते । तेषां—धातूनाम् । द्वितीयार्थे षष्ठी धातूनित्यर्थः ॥८४॥ अथवा—पक्षान्तरे । त्रिके अपरगते* हृदयाद्धस्तपादाग्रं हृदयादि हस्तयोरग्रावधि परामृशन् सकारं हृदयादिपादयुगाग्रावधि परामृशन् हकारं च न्यसेदित्यर्थः ॥८५॥

---

(१) हृदयाद्धस्तपादाग्रे जरे सो० पु० पा० ।  * त्रिकोणपरगते इति टी० पु० पा० ।

वृत्तद्वयावृतं चाष्टपत्रमब्जं(२) महीपुरम् ।
विधाय विलिखेन्मध्ये हंसहृद्वनशक्तिजम् ॥८६॥
कूटं स्वरान् केशरेषु वर्गान् पत्रेषु चालिखेत् ।
पञ्चपञ्चाक्षरोपेतान्(३) दारुचाम्बुनि दिक्षु च ॥८७॥
स्वरेष्वपुनरुक्तानि पञ्चान्यानि तु पञ्च वै ।
सव्यञ्जनाव्यञ्जनत्वभेदतोऽभूद्द्विरन्वयः ॥८८॥
सवाताग्निधरात्वेन शक्तिस्तत्पञ्चकं भवेत् ।
अन्यान्येकादश शिवे ! सन्धिमात्रादि सम्भवा ॥८९॥

---

वृत्तद्वयेत्यादिभिर्वितन्वत इत्यन्तैः सप्तभिः श्लोकैर्मातृकायन्त्रनिर्माणं तद्विनियोगं तत्फलानि चोपदिशति। तत्र हंसहृद्वनशक्तिजं कूटं हकारसकारऔकारविसर्जनीयैः संहतैरेकं कूटाक्षरम् ॥८६॥ स्वरान् केसरेषु—षोडशस्वरान् केसरेषु प्रतिदलमूलं द्वन्द्वशो लिखेत्। वर्गान्—कादीन् पञ्चपञ्चाक्षरोपेतान् वर्गानित्यन्वयः। सप्तेति शेषः। दावाम्बु—ठकारवकारौ। दिक्षु ठकारं विदिक्षु वकारं चालिखेदिति केचन कथयन्ति। तदस्माकं नाभिमतम्। उभयमप्यष्टसु दिक्षु लेख्यमित्यस्मत्सम्प्रदायार्थः ॥८७॥ अपुनरुक्तपञ्चस्वराक्षराणि वक्ष्यमाणानि अष्टमे दले लिखेदित्यर्थः। अन्यानि तु पञ्च वै—अन्येषु सप्तसु दलेषु पञ्चपञ्चाक्षराणि लिखितानि। वै इति हेतौ। सव्यञ्जनाव्यञ्जनत्वभेदतः—स्वराणां स्थितिर्द्विविधा व्यञ्जनाश्लिष्टा एका स्वयं राजत इति स्वरशब्दनिर्वाहात्। स्वतन्त्रा चापरा। तेनाष्टदलकेसरयोर्द्विरन्वयः। एतदुक्तं भवति—स्वरेषु वक्ष्यमाणान्यपुनरुक्तानि पञ्चाक्षराणि अष्टमे दले विलिखेदिति। तत्राष्टमे दले पञ्चाक्षरलेखनन्तु अन्येषु सप्तसु दलेषु पञ्चपञ्चाक्षराणां लिखितत्वात्। एवं व्यञ्जनसहितत्वेन व्यञ्जनरहितत्वेन च स्वराणां द्विधा स्थितत्वात् अत्र द्विरन्वयो भवति ॥८८॥ सवाताग्निधरात्वेन शक्तिः—अकार-इकार-उकार-विन्दुसहितो विसर्जनीयः। तत्पञ्चकं—अपुनरुक्तस्वराक्षरपञ्चकम्। एतदुक्तं भवति—अकार-इकार-उकार-विन्दु-विसर्जनीयाक्षराणि स्वरेष्वपुनरुक्तानि। इतराणि तेषामेव सवर्णदीर्घादितः सम्भूतानि चत्वारि षण्ढाक्षराणि

---

(२) वृत्तं गृहावृतं चाप्सुपत्र इति मू० पु० पा०। (३) वर्णान् वादीन्विदिक्षुचेति मू० पु० पा०।

एतद्यन्त्रस्य मध्यस्थं नाम कृत्वा प्रयोजयेत्।
प्रातर्मूर्द्धि स्मरेदिन्दुबिम्बस्थं सर्वसम्पदम् ॥९०॥
अभिषिकाद्धारणाच्च पूजनाल्लोहकल्पिते।
स्थापनाद्गृहदेशादौ यन्त्रं सर्वार्थसिद्धिदम् ॥९१॥
एतद्यन्त्रस्य मध्यस्था देवताः सकला अपि।
सन्निधिं फलदानं च साधकानां वितन्वते ॥९२॥

---

अकाररहितरेफलकारेण विभक्तरूपाणि। तेन तेषां पञ्चानामेव स्वरेषु प्राधान्यमन्यान्येकादशाक्षराणि सन्धिमात्रादिसम्भूतत्वात् पुनरुक्तानीति। यन्त्रविरचनाक्रमो यथा—स्वाभिमतमानेन भ्रमेण वृत्तं कृत्वा तद्बहिश्च एकाङ्गुलमानेन वृत्तं कृत्वा द्वितीयवृत्तव्यासार्द्धमानेन तद्बहिश्च वृत्तं कृत्वा तदन्तरष्टदलानि दिग्विभागेन कृत्वा तदन्तः केशरस्थानं च समान्तरालषोड़शरेखाभिः षोड़शधा कृत्वा तद्बहिरेकाङ्गुलमानेन चतुर्थं वृत्तं विधाय तस्य त्र्यङ्गुलात् बहिश्चतुरस्रमेकं रेखाग्राष्टशूलोपेतं कृत्वा कर्णिकायां हकारसकार—औकार—विसर्जनीयोपेतां शक्तिप्रसादाख्यामेकाक्षररूपां विद्यां हकारसकारान्तरालस्थनामवतीमालिख्य केशरस्थानेषु षोड़शस्वग्रादिप्रादक्षिण्येन षोड़शस्वरानालिख्य बहिरष्टदलेषु अग्रादिप्रादक्षिण्यक्रमेण कचटतपयशादीन् पञ्चाक्षरान् सप्तवर्गान् सप्तसु दलेषु समालिख्य अष्टमे अ इ उ अं अः इति पञ्चाक्षराणि समालिख्य चतुर्थवृत्तात् बहिरष्टसु दिक्षु प्राग्वत् ठकारवकारौ बहिरष्टौ समालिखेत्—सर्वाणि प्रोक्तान्यक्षराणि कर्णिकास्थाक्षरमन्तरेण सबिन्दून्यालिखेदिति ॥८९॥ एतद्—यन्त्रमितिशेषः ॥९०॥ लोहकल्पिते - यन्त्र इतिशेषः। पूजनादित्यस्यान्तेनान्वयः। स्थापनात्—यन्त्रस्येतिशेषः। आदिशब्दोग्रामादिविषयः ॥९१॥

एतद्यन्त्रस्येत्यादिना श्लोकेन सकलदेवताचक्रप्रतिष्ठासु हेमरजताश्माणामन्यतमेन कृते पट्टे यन्त्रमुत्कीर्य मध्ये सन्निधिर्होति नामाक्षरोपेतं सप्राणप्रतिष्ठं मासमात्रमभ्यर्चितं लक्षजप्तमातृकं प्रथमं तत्त्ववित् पूर्णात्मा सुपूजितम् संस्थाप्य तन्मध्ये सकलदेवतावेरं स्थापयेत्। एवं कृते तस्मिन् वेरे तासां देवतानां स्फुरणं समीचीनं भवति। स्थापयितुर्मनोषितफलं च सम्भवतीत्युपदिशति ॥९२॥

विद्यां तान्तु नरोमूर्खो जड़ोमूकोऽतिपातकी ।
नित्यशोजपपूजाद्यैः काले मत्समतां व्रजेत् ॥८३॥
जिह्वायामक्षराख्येतान्यसकृद्भावयेद्धिया ।
प्रविष्टोविद्वद्गोष्ठीषु(१) युज्यते वाग्मिभिर्जनैः ॥८४॥
मूर्द्धेन्दुबिम्बमध्यस्थं सुधावर्षविधायिनम् ।
विभावयन्निति मनुं जपेदेकाग्रमानसः ॥८५॥
मण्डलात्कवितासिद्धिः सर्वभाषामयी भवेत् ।
वादादिषु तु सर्वत्र देवतात्मा जयी भवेत् ॥८६॥
यन्त्राणि नित्यानित्यायाः समान्येकात्मयोगतः ।
प्रयोगजातमन्योन्यं विदध्यादैक्ययोगतः ॥८७॥
तेनात्मनोक्तानि शिवे ! सर्वसिद्धिकराणि वै ।
षोड़शस्वपि नित्यासु यन्त्रादन्यत्समीरितुम् ॥८८॥

---

विद्यानामित्यादिना भवेदित्यन्तैः चतुर्भिः श्लोकैः कुलसुन्दरीविद्यायाः प्रयोगविशेषैः फलविशेषानुपदिशति । तत्र तां—कुलसुन्दरीं विद्याम् । मूर्खः—अज्ञः । जड़ो –बालः । आद्यशब्दस्तर्पणहोमादिविषयः । मत्समतां – शिवसमताम् ॥८३॥ अक्षराख्येतानि—कुलसुन्दरीविद्याया इतिशेषः ॥८४॥ सुधावर्षविधायिनं—इन्दुमण्डलक्षोभतः । मनुं – कुलसुन्दरोविद्यां विभावयन्नित्यन्वयः । जपेन्मनुमित्यन्वयः ॥८५॥ आदिशब्दोव्यवहारद्यूतादिविषयः । देवतात्मा—देवताहम्भावनया । वादव्यवहारादिषु सर्वत्र देवताहम्भावनया तत्तत्करणाद्विजयो भवेदित्यर्थः ॥८६॥

यन्त्राणीत्यादिना श्लोकेन षोडशपटले नित्यानित्याप्रोक्तानि यन्त्राणि विद्ययोरैकरूप्यादस्याश्च तान्यपि यन्त्राणि साधारणानीत्यतिदिशति । तत्र – तद्यन्त्रातिदेशादत्रोक्तं यन्त्रद्वयं च नित्यानित्यासाधारणम् ॥८७॥

षोड़शस्वपीत्यादिना श्लोकेन नित्यानां सर्वासां विशेषसामान्यविधानं विभजते । तत्र - अन्यदिति जपतर्पणहोमार्चासेकभावनादिकम् । ऐक्ययोगतः—आसां षोड़शा-

---

(१) प्रविश्याविद्यागोष्ठीषु इति मू० पु० पा० ।

वृत्तयुग्मं षडस्रं च कृत्वा मध्याद्यमध्यतः।
नामालिख्य बहिः षट्सु तत्त्रयं स्वेन मायया ॥९९॥
विलिख्य मातृकां वृत्ते कृत्वा तद्धारणान्मुखे।
जिह्वायां भावनात् सर्वगोष्ठीष्वग्रं विगाहते ॥१००॥
वाचातत्त्वमयी व्याप्तिरिति सम्यक् समीरिता।
अस्या निष्फालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति श्रीषोडशनित्यातन्त्रेषु श्रीकादिमते पञ्चदशं पटलं परिपूर्णं परामृष्टम् ॥१५॥

---

नामैकरूपपरमार्थयोगतः। एतदुक्तं भवति—सर्वासां षोडशानां नित्यानां तत्तत्पटलप्रोक्तानि यन्त्राणि विधुराणि प्रयोगजातान्यन्योन्यमासामैक(क्य)-रूप्यात् साधारणानीति ॥९८॥

वृत्तयुग्ममित्यादिना विगाहतेइत्यन्तेन विद्यागोष्ठीविजयप्रदं यन्त्रमुपदिशति। तत्र मध्याद्यमध्यतः—कुलसुन्दरीविद्याया मध्यमकूटस्य आद्यस्य ककाराक्षरस्य मध्ये इत्यर्थः। तत्त्रयं—विद्याकूटत्रयम्। मायया—विसर्जनीयेन॥९९॥ अग्रं विगाहते—अग्रेसरोभवति—गरिष्ठोभवतीत्यर्थः। यन्त्रविरचनाक्रमो यथा—इष्टमानेन भ्रमिणा वृत्तं विधाय तन्मध्ये प्राग्वदभिमतमानेन(१) षट्कोणं विस्तीर्य(२) वृत्ताद्बहिरेकाङ्गुलमानेन च वृत्तं कृत्वा षट्कोणस्य मध्ये विद्याया मध्यमकूटाक्षरमालिख्य तस्यादिभूतस्य ककारस्योदरे नामाभिलिख्य तस्य षट्सु कोणेषु अधस्थेषु त्रिषु (३)मध्यादिप्रादक्षिण्येन विद्याक्षराणि त्रीणि(४) सविन्दूनि क्रमात् समालिख्य उपरिस्थेषु त्रिषु कोणेषु अमुक्तप्रादक्षिण्यक्रमात् विसर्जनीयोपेतानि तानि समालिख्य बहिर्वृत्तवीथ्यामग्रादिप्रादक्षिण्येन सविन्दुकान्यकारादिक्षकारान्ता-न्येकपञ्चाशदक्षराणि समालिख्य गुलिकीकृत्य प्रोक्तक्रमोपेतमास्ये तां कृत्वा (५) तच्च जिह्वायां विभावयन् प्रोक्तानि फलान्यवाप्नोति इति ॥१००॥

---

(१) दभिमताङ्गनेनेति टी० पु० पा०। (२) विरच्येति टी० पु० पा०।
(३) सव्यादिप्रा इति टी० पु० पा०। (४) यन्त्राणीति सो० पु० पा०।
(५) धृत्वे ति टी० पु० पा०।

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य प्रपञ्च-
सारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां
मनोरमाख्यायां व्याख्यायां शिवदूतीनित्याविद्याविधान-
प्रकाशनपरं पञ्चदशपटलं परिपूर्णं
परामृष्टम् ॥ १५ ॥

ग्रन्थसङ्ख्या—

अत्र यन्त्रद्वयं प्रोक्तं व्याख्याग्रन्थाः शतत्रयात् ।
सत्रिपादोनविंशाः स्युः पटले दशपञ्चके ॥

---

## अथ षोड़शं पटलम् ।

अथ षोड़शनित्यासु या प्रोक्तैकादशी तु ताम् ।
नित्यानित्यां शृणु प्राज्ञे! यदायत्तमिदं जगत् ॥१॥
विद्योद्धारः (१) कृतः पूर्वं तद्विधानमिहोच्यते ।
यासौ समस्तजीवानां देह(२)स्थितिविधायिनी ॥२॥
न्यासं ध्यानं ततः शक्तीस्ताभिः पूजां च साधनम् ।
यन्त्राणि वज्ररूपाणि षड़ाधारेषु संस्थितिम् ॥३॥
निग्रहानुग्रहौ षड़्भिः कालव्याप्तिरिति क्रमात् ।
दीर्घस्वरसमेताभ्यां हंसहृद्भ्यां षड़ङ्गकम् ॥४॥

---

अथ षोड़शपटलम् ।

पूर्वस्मिन् पञ्चदशे पटले दशम्याः कुलसुन्दरीनित्याविद्याया विधानमुपदिश्यानन्तरमेकादश्या नित्यानित्याया विधानमुपदिशति । अथ षोडशेत्यादिना सर्वत इत्यन्तेन श्लोकशतरूपेण षोडशेन पटलेन । अत्र षोडशेत्यादिभिः क्रमादित्यन्तैरध्यर्द्धैस्त्रिभिः श्लोकैः पटलार्थानुद्दिशति । तत्र यदायत्तं—नित्यानित्याधीनम् । जगत्—जङ्गमम् । देहस्थितिकरत्वात् ॥१॥ पूर्वं—तृतीये पटले । तद्विधानं—विद्याविधानम् । समस्तजीवानां—समस्तप्राणिनाम् । देहस्थितिविधायिनी—षडाधारादिस्थितत्वात् ॥२॥ संस्थितिम्—देवतानामिति शेषः । एतदुक्तं भवति—षड़ाधारेषु डाकिन्यादीनां षण्णां देवतानामवस्थितिं तदधिष्ठातृरूपत्वेन नित्यानित्यायाः स्थितिं च वक्ष्यामीति ॥३॥ षड़्भिः—आधारदेवताभिर्डाकिन्यादिभिः । (३) फलावाप्तिम्—कालेन देवताया ऐक्यव्याप्तिं च ॥

दीर्घस्वरेत्यादिना युतमित्यन्तेनार्द्धाद्यन्तेन श्लोकेन न्यासक्रममुपदिशति । तत्र दीर्घस्वरसमेताभ्यां—प्राग्वत् हंसहृद्भ्यां हकारसकाराभ्यां ह्सां ह्सीं इत्यादिभिर्जातियुक्तैर्मन्त्रैः प्राग्वत् षड़ङ्गानि विन्यसेदित्यर्थः॥४॥ विद्याक्षराणि—कूटप्रोक्तानि

---

(१) नित्योद्धार इति मू० पु० पा० । (२) देवस्थिति इति मू० पु० पा० ।
(३) कालव्याप्तिम् इति टी० पु० पा० । फलावाप्तिकालेन इति वं० पु० पा०

भ्रूमध्ये कण्ठहृन्नाभिगुह्याधारेषु च क्रमात् ।
विद्याक्षराणि क्रमशोन्यसेद्विन्दुयुतानि तु वै ॥५॥
व्यापकं च समस्तेन विधाय विधिना युतम् ।
ध्यायेत् समस्तसम्प्राप्तिहेतोः सर्वात्मिकां शिवाम् ॥६॥
उद्यद्भास्करबिम्बाभ्यां माणिक्यमुकुटोज्ज्वलाम् ।
पद्मरागकृताकल्पामरुणांशुकधारिणीम् ॥७॥
चारुस्मितलसद्वक्त्रषट्सरोजविराजिताम् ।
प्रतिवक्त्रं त्रिनयनां भुजैर्द्वादशभिर्युताम् ॥८॥
(१)पाशेक्षुगुणपुण्ड्रेक्षुचापखेटत्रिशूलकान् ।
वहन्तीं वरदां वामैरङ्कुशं पुस्तकं तथा ॥९॥
पुष्पेक्षु मण्डलाग्रञ्च नृकपालाभये तथा ।
दधानां दक्षिणैर्हस्तैर्ध्यायेद्देवीमनन्यधीः ॥१०॥
अनन्ताः शक्तयोदेव्यास्ताश्चा(२)कर्णय वदामि ते ।
ललिताशक्तिवृन्दोऽयं(३) बीजद्वयमथोक्रमात् ॥११॥

---

हकारादि डकारान्तानि संकेतविद्याविधुराणि षडक्षराणि । विन्दुयुतानि—प्रत्येकं विन्दुयुक्तानि । एतदुक्तं भवति—विद्याया हकारादिडकारान्तानि प्रत्येकं विन्दुयुक्तानि प्रोक्तेषु षट्सु स्थानेषु क्रमादेकैकशोन्यसेदिति ॥५॥ व्यापकं—प्राग्वत् । समस्तेन—त्रिभिः कूटैः सङ्केतविद्योपेतैः ॥

ध्यायेदित्यादिभिरनन्यधीरित्यन्तैरर्द्धाद्यैश्चतुर्भिः श्लोकैर्देव्या नित्यसपर्याध्यानमुपदिशति । तत्र सर्वात्मिकां—सर्वचैतन्यरूपत्वात् । चैतन्यरूपत्वन्तु धातुरूपदेहात्मिकानां डाकिन्यादीनामधिष्ठातृरूपस्वात्मरूपत्वात् ॥६॥७॥ वक्त्रषट्(क)सरोजविराजितां—षड्वक्त्रपद्मविराजितामित्यर्थः॥८॥ भुजेष्वायुधान्यूर्ध्वादि कल्पयेत् । खेटं—चर्मफलकम्॥९॥ मण्डलाग्रं खड्गविशेषः । नृकपालं—शिरःकपालम्॥१०॥

अनन्ता इत्यादिभिरानता इत्यन्तैः पञ्चभिः श्लोकैर्देव्या आवरणशक्तीरुपदिशति । अत्र अनन्ता इत्यत्र शक्तीनामक्षरविग्रहत्वान्न वक्तुं शक्यते । देव्या अनन्तशक्ति-

---

(१) पाशाङ्कुशपुण्ड्रे इति मू० पु० पा० ।
(२) स्ताश्चाकर्णय काश्यन इति मू० पु० पा० । (३) शक्तिवृन्दाद्या इति मू० पु० पा० ।

पूर्णमण्डलवर्णाः स्युस्ते शक्तीति च संयुताः।
सप्ताचर्या(१) युता संज्ञा विद्याः स्युर्द्वादशाक्षराः ॥१२॥
षट्सप्तत्या ऽपिच शतं यजेत्ताभिर्वृतां शिवाम्।
षट्कोणकोणेष्वासीनां डाकिन्याद्यास्तथाऽर्चयेत्(२) ॥१३॥
रक्षोनिलेन्द्रवह्नीशवरुणेषु क्रमाच्च ताः।
डाकिनीं शाकिनीं पश्चाल्लाकिनीं काकिनीमपि ॥१४॥
साकिनीं हाकिनीं मूले देवीसदृशविग्रहाः।
हेतीस्तामभितः शक्तिरूपास्तन्मुकुटानताः ॥१५॥
कृतन्यासार्घसङ्कल्पः पूजयेदीरितक्रमात्।
कुर्याच्च नित्यहोमन्तु जपेद्विद्यां यथोदितम् ॥१६॥

---

परिवारत्वन्तु स्वात्मस्वरूपत्वात्। काश्चन आकर्णय—वक्ष्यमाणशक्तीरितिशेषः ॥११॥ पूर्णमण्डलवर्णाः—अकारादयः क्षः इत्यन्ताः प्रोक्तसङ्ख्याः। अकारादि क्षकारान्तानां षट्त्रिंशद्वर्णानां प्रत्येकं षोडशस्वरयोजनेन षट्सप्तत्यधिकपञ्चशतसंख्याः एषां पूर्णमण्डलत्वं पञ्चविंशपटले वक्ष्यमाणत्वादिह नोच्यते। संज्ञाविद्या—नामरूपाविद्याः द्वादशाक्षराः—ह्रीं श्रीं अंशक्तिपादुकां पूजयामीत्यादिकाः ह्रीं श्रीं क्षः शक्तिपादुकां पूजयामि इत्यन्ताः एवंरूपेण द्वादशाक्षराः इत्यर्थः। तासां शक्तीनां वर्गक्रमेण षोड़शदलानि षट्त्रिंशत्पद्मानि षट्कोणाद्बहिः कृत्वा तेषु दलेषु ताः शक्तीः पूजयेदिति सम्प्रदायः। अथवा वर्गद्वयक्रमेण द्वात्रिंशद्दलानि अष्टदलपद्मानि कृत्वा तेषु ताः समर्चयेदिति स्वपारम्पर्यार्थः। डाकिन्यादीनां षट्कोणेष्वत्रोक्तानि स्थानानि पूर्वमेव व्याख्यातानि ॥१२॥१३॥१४॥ मूलदेवीसदृशविग्रहाः नित्यानित्यासमानरूपाः। तन्मुकुटाः—तत्तदायुधोपितमुकुटाः। नताः—(कृताञ्जलयः प्रह्वा) कुचभरनम्राः तत्तद्गुजस्थानस्थिताः। सर्वसाधारणमेतत् ॥१५॥

कृतेत्यादिभिर्गता इत्यन्तैः पञ्चभिः श्लोकैः चक्रविशेषैःशक्तिविशेषैश्च त्रिविधं पूजाक्रममुपदिशति। तत्र अर्घसङ्कल्पः—प्राग्वत्। ईरितक्रमात्—प्रोक्तक्रमात्। यथोदितं—प्राग्वत् ॥ १६ ॥ शतार्द्धैकदलान्वितं—एकपञ्चाशद्दलान्वितमित्यर्थः।

---

(१) सप्ताचर्यन्तकाः संज्ञा इति मू० पु० पा०। (२) डाकिन्यादीन्यतस्तथा इति मू० पु० पा०।

(१)षट्कोणाद्बहिरज्वन्तशताङ्कदलान्वितम् ।
कृत्वा तेष्वपि ताभिस्तु वृतां पूजासु मध्यमाः(२) ॥१७॥
द्विचतुःषट्दशदलैर्द्वादशाष्टद्वयच्छदैः ।
पद्मैरावृत्तषट्कोणे (३)यजेल्लक्ष्मीस्मृतार्चनात् ॥१८॥
चतुरस्रद्वयं बाह्ये चतुर्द्वारसमन्वितम् ।
विधाय तेषु शाखासु शक्तीनां विंशतिं यजेत् ॥१९॥
ब्राह्म्यादिलोकपालाख्याः षोड़शद्वारसंस्थिताः ।
अनन्तब्राह्मनियतिकालरूपा विगर्हिताः ॥२०॥

---

ताभिः—अकारादिक्षकारान्तैकपञ्चाशदक्षराणां शक्तिभिः ॥१७॥ अष्टद्वयच्छदैः—षोड़शदलैः ॥१८॥ शक्तीनां विंशतिम्—ब्राह्म्यादिलोकपालान्तानामष्टादशशक्तीनां नियतिकालशक्तिद्वयेन विंशतित्वम्। एतदुक्तं भवति—इष्टमानेन भ्रमेण वृत्तं कृत्वा तद्बहिः—षट्कोणोपेतं वृत्तं कृत्वा तद्बहिः सम्प्रदायात् षोड़शदलानि षड्विंशत्पद्मानि कृत्वा तद्बहिस्त्र्यङ्गुलान्तरालं चतुरस्रद्वयं कृत्वा ततस्तत्सु दिक्षु द्वाराणि सशाखानि कृत्वा तत्र सर्वमध्ये देवीं बहिः षट्कोणेषु प्रोक्तक्रमेण डाकिन्यादिषट्कं तद्बहिः पूर्णमण्डलाक्षरशक्तीर्वर्गक्रमेणाक्षरक्रमेण च षट्त्रिंशत्पद्मेषु तत्तत्षोडशदलेषु च प्रोक्तक्रमेणाभ्यन्तरान्निर्गमनगत्या पूजयेत्। तद्बहिश्चतुरस्रे चतस्रषु दिक्षु पश्चिमद्वारदक्षपार्श्वादि तद्वामपार्श्वान्तं प्रादक्षिण्यक्रमेण चतुर्द्वारपार्श्वाष्टकस्थानेषु ब्राह्म्याद्यष्टशक्तीः प्रादक्षिण्यक्रमेणार्चयेत्। ततस्तत्र पूर्वद्वारोत्तरशाखादि उत्तद्वारदक्षिणशाखावसानं प्रादक्षिण्यक्रमेणाष्टसु शाखासु इन्द्रादीशान्तं लोकपालशक्तीरष्टावर्चयेत्। तदनु तत्रानन्तब्रह्मनियतिकालशक्तीराग्नेयादिषु ईशान्तेषु चतुर्षु दिक्कोणेषु प्रादक्षिण्यक्रमेणार्चयेदिति च सम्प्रदायार्थः। अथवा प्रोक्तषट्कोणाद्बहिः प्राग्वत् सम्प्रदायात् द्वात्रिंशद्वारिंशद्दलान्यष्टादशपद्मानि कृत्वा तत्र वर्गद्वयक्रमेण पूर्णमण्डलवर्णशक्तीः समभ्यर्च्य चतुरस्रे प्राग्वदर्चयेदेष पक्षश्चोत्तमः। मध्यमस्तु प्रागुक्तषट्कोणाद्बहिरेकपञ्चाशद्दलं पद्मं कृत्वा तद्दलेष्वकारादिक्षकारान्तैकपञ्चाशदक्षरशक्तीरनयत् प्राग्वत् समर्चयेदिति। लघुप्रक्रियायां षट्कोणाद्बहिः षोड़शदलं तद्बहिर्द्वादशदलं तद्बहिर्दशदलं

---

(१) षट्कोणेविरचेवित्तं इति मू०पु०पा०। (२)मध्यमम् इति मू० पु० पा। (३) यजेत् लक्ष्मी इति मू०पु०पा०।

विदध्यात्साधनं प्राग्वद्वर्णलक्षं पयोव्रतः।
क्षिप्त्वाद्‌सिक्तैररुणैरम्बुजैर्हवनं तथा ॥२१॥
जपतर्पणहोमार्चासेकसिद्धमनुर्नरः।
कुर्यादुक्तान् प्रयोगांश्च नचेत्तद्धातुदेवताः ॥२२॥
प्राणांस्तस्य ग्रसन्त्येव कुपितास्तत्क्षणं शिवे!।
अनया विद्यया लोके यन्न साध्यं न तत् क्वचित् ॥२३॥
विद्याक्षराणि सप्त स्युस्तैः प्राग्वत्स्वरसंयुतैः।
शतं द्वादशसंयुक्तं तैर्यन्त्राणि वदामि ते ॥२४॥
वृत्तद्वयान्तः षट्कोणं तदन्तर्वृत्तयुग्मकम्।
विधाय मध्ये मायास्थमेकमक्षरमाख्यया ॥२५॥
बहिः षडालिखेत्षट्सु वृत्तयोर्भूतमातृका।
कृत्वा नवभिरेवं स्युः क्रमाद्यन्त्राणि षोडश ॥२६॥

---

तद्बहिः षट्दलं तद्बहिश्चतुर्दलं च पद्मं कृत्वाऽनन्त्रत् प्राग्वद्विलिख्य तेषु पद्मेषु तत्तद्दलेषु लकारशक्तिरहिता अकारादिक्षकारान्तपञ्चाशदक्षरशक्तीः षडाधारोक्त पूजाक्रमेण प्राग्वदर्चयेत् इत्येवं त्रयः पद्मा इति ॥१९॥२०॥

विदध्यादित्यादिभिः क्वचिदित्यन्तैस्त्रिभिः श्लोकैर्विद्यासाधनविधिमसिद्धस्य प्रयोगकरणे प्रत्यवायं विद्याया अनुभावं चोपदिशति। तत्र प्राग्वत्—ललिता विद्यावत्। पयोव्रतः—क्षीराहारी। तथा—जपदशांशतः ॥२१॥ नचेत्तद्धातुदेवताः इत्यत्र तच्छब्दः सर्वेषां षड्धात्वधीशत्वात् ॥२२॥ तस्य प्रयोक्तुः ॥२३॥

विद्येत्यादिना श्लोकेन विद्याक्षराणां स्वरसंयोगेन यन्त्रार्थं विस्तारमुपदिशति। तत्र सप्त—अनाहत्तानि तानि प्रथमकूटाक्षराणि ॥२४॥

वृत्तद्वयेत्यादिना षोडशेत्यन्तेन श्लोकद्वयेन स्वरविकृतविद्याक्षरैः षोडशयन्त्राण्युपदिशति। तत्र मायास्थं—हृल्लेखास्थम्। एतदुक्तं भवति—अभिमतमानेन भ्रमेण वृत्तद्वयमेकाङ्गुलान्तरालमन्तर्बहिर्विभागेन कृत्वा तद्बहिः षट्कोणं तद्बहिस्तथाविधं वृत्तद्वयं कृत्वा सर्वमध्ये प्रोक्तेषु स्वरविकृतेषु द्वादशाधिकशतसङ्ख्येषु विद्याक्षरेषु आद्यं नामगर्भं हृल्लेखोदरे समालिख्य द्वितीयादिषु षडक्षराणि षट्सु कोणेषु अग्रादि प्रादक्षिण्येनालिख्यान्तर्वृत्तवीथ्यां कर्मानुरूपाणि

प्रथमेन धृतेन स्यादौदरव्याधिसंहृतिः ।
द्वितीयेन शिरोरोगा नश्यन्ति परमेश्वरि ! ॥२७॥
तृतीयेनाक्षिरुक्शान्तिः श्रोत्रजानां परेण तु ।
पञ्चमेन भुजारोगाः प्रयान्त्यूर्द्ध्वेन पादजाः ॥२८॥
सप्तमेनान्तराधिस्था धृतेन निधनाश्रयाः ।
धृतेनाष्टमयन्त्रेण ज्ञानेन्द्रियगता गदाः ॥२९॥
परेण कर्मेन्द्रियगा दशमेनानिलोद्भवाः ।
एकादशेन पित्तोत्था द्वादशेन कफोद्भवाः ॥३०॥
त्रयोदशेन दोषाणां सन्निपातसमुद्भवाः ।
प्रयान्ति विलयं सद्यो यन्त्राणां शक्तिवैभवात् ॥३१॥
चतुर्दशेन यन्त्रेण भूतप्रेतपिशाचकाः ।
प्रयान्ति भीताः क्षणतः सर्वेऽन्येपि ग्रहाः शिवे ! ॥३२॥

---

भूताक्षराण्यालिख्य बाह्यवृत्तवीथ्यामग्रादिप्रादक्षिण्येन मातृकां सबिन्दुकामालिखेत् । एतत् प्रथमं यन्त्रम् । एवं षट्कोणमध्यस्थैः कोणस्थैश्च एवं सप्तभिः पूर्वपूर्वलिखितोपरितनैः स्वरविकृतविद्याक्षरैरन्यानि पञ्चदश यन्त्राणि भवन्तीत्येवं पूर्वोक्तेन सह षोडश यन्त्राणि भवन्ति ॥२४॥२६॥

प्रथमेत्यादिभिरन्यथा इत्यन्तैर्नवभिः श्लोकैः षोडशाणां यन्त्राणां समस्तरोगशान्तिषु विनियोगात् सर्वत्राभिषेकक्रमादिकं चोपदिशति । तत्र औदरव्याधिः गुल्मादिः । परमेश्वरीति देवीसम्बुद्धिः ॥२७॥ श्रोत्रजानां—रोगाणामितिशेषः । परेण— चतुर्थेन यन्त्रेणेतिशेषः । ऊर्द्ध्वेन—षष्ठेन यन्त्रेणेतिशेषः । प्राग्वत्—पादजा रोगा इति शेषः ॥२८॥ अन्तराधिस्था—अन्तराधिरिति कटेरूर्ध्वं कराधस्थात् करद्वयाधस्तादेहप्रदेशः तत्स्था रोगा इति शेषः । निधनाश्रयाः—मरणाश्रयभूताः अन्तराधिस्था इत्यत्रास्यान्वयः । ज्ञानेन्द्रियगताः—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणसम्भूताः । गदा - रोगाः ॥२९॥ परेण—नवमेन यन्त्रेणेतिशेषः । कर्मेन्द्रियगाः—वाक्पाणिपादपायूपस्थसम्भूताः । अनिलोद्भवाः— वातरोगसम्भवाः गदा इति शेषः । कफोद्भवाः—श्लेष्मदोषसमुद्भवाः । अस्मिन् प्रकरणे अनुक्तेषु विशेषेषु रोगा इत्ये-

तत्परेण महारोगा धृतेनाष्टौ न बाधकाः ।
षोड़शेन धृतेन स्यादायुरारोग्यमीश्वरि ! ॥३३॥
यन्त्राणि षोड़शैतानि धारयेद्व्याधिशान्तये ।
सर्वेषां प्राणिनां सम्यगनुक्तेषु गदेष्वपि ॥३४॥
सर्वत्र यन्त्रधरणं साभिषेकं सदक्षिणम् ।
सवंदनं सविश्वासं फलत्येवान्यथाऽन्यथा ॥३५॥
*कुर्विहीना तु सा विद्या पञ्चकूटाभिधा शिवे !
वाक्सिद्धिमन्यत्सकलं कुरुते न भिदा तयोः ॥३६॥
(१)तद्विद्याकूटभेदाः स्युर्विंशत्या शतसप्तकम् ।
तैर्वंजयन्त्रनिर्माणं फलानि च शृणु प्रिये ! ॥३७॥

---

तद्विशेष्यम् ॥३०॥ त्रयोदशेन—यन्त्रेणेतिशेषः । दोषाणां सन्निपातसमुद्भवा—वातादीनां त्रयाणां दोषाः सन्निपातात्समुद्भूताः । वैभवात्—अतिशयादित्यर्थः ॥३१॥ यन्त्रेणेत्येतदस्मिन् प्रकरणे यन्त्रानुक्तौ सर्वत्रान्वेति । ग्रहा—भूताद्याः । शिवे इति देवीसम्बुद्धिः ॥३२॥ तत्परेण—पञ्चदशेन । महारोगा—वातादयः । षोड़शेन धृतेन—धृतेन षोड़शेन यन्त्रेणेत्यर्थः । अत्र प्रकरणे सर्वसाधारणार्चनसेकस्थापनादीनि युञ्ज्यादितिसम्प्रदायार्थः ॥३३॥ व्याधिशान्तये—सर्वव्याधिशान्तये । एतदुक्तं भवति—एतानि सर्वाणि षोड़श यन्त्राणि अनुक्तेष्वन्येषु रोगेषु तत्तद्व्याधिशान्तये धारणादीनि कुर्यादिति । एतेन सर्वाणि यन्त्राणि प्रत्येकं सर्वरोगहराणि भवन्तीत्यर्थः ॥३४॥ सर्वत्र—अस्मिंस्तन्त्रे इतिशेषः । अन्यथाऽन्यथा—प्रोक्तान्यथाकरणे न फलत्ये(व) । एतदुक्तं भवति—सर्वसाधारणं यन्त्रधारणं यन्त्रेणाभिषेकं कृत्वाऽभिषेक्तुर्यावत्सन्तोषं वित्तानि च दत्त्वा तं समभिवन्द्यैतत्फलत्येवेति विश्वस्य यन्त्रधारणं कुर्यात् । एवं कृते फलत्येव अन्यथा न फलत्येव ॥३५॥

कुर्विहीनेत्यादिना श्लोकेन पञ्चकूटविद्याविधानं तस्याश्चैतद्विद्यात्मकत्वं चोपदिशति । तत्र कुर्विहीना—(ड)उकारविहीना । न भिदा तयोः—षट्कूटपञ्चकूटविद्ययोः ॥३६॥

तद्विद्येत्यादिना श्लोकेन नित्यानित्याविद्याचराणां सन्दर्भभेदसञ्जातस्वरूप—

---

(१) तद्विद्याधरभेदा इति मू० पु० पा० ।    * कुचिह्नीना इति मू० पु० पा० ।

प्राक्प्रत्यक्दक्षिणोदक्च सूत्राण्यष्टादश क्षिपेत् ।
तैस्तु कोष्ठानि जायन्ते नवाशीतिशतद्वयम् ॥३८॥
प्राग्वत्तत्कोणकोष्ठानि षटत्रिंशन्मार्जयेत्क्रमात् ।
मध्ये वज्रं यथा भूयात्तथा कुर्यात् समन्ततः ॥३९॥
सपञ्चचत्वारिंशत्कं शतं कोष्ठैस्तु वज्रकम् ।
त्र्यस्राणि चत्वार्यग्राणि चतुःकोष्ठैस्तु पूर्ववत् ॥४०॥
विधाय तस्य मध्याधःकोष्ठमारभ्य संलिखेत् ।
प्रादक्षिण्यप्रवेशेन कूट(ाँस्ताना)न्तस्याद्यखण्डजान् ॥४१॥
मध्येऽवशिष्टनवके वामदक्षत्रयद्वये ।
प्रतिलोमानुलोमात्मविद्याद्वयमथालिखेत्(१) ॥४२॥
शिष्टेषु त्रिषु कोष्ठेषु साधकाख्यां तदूर्ध्वगे ।
कर्ममध्येऽधरे साध्यमालिखेदपि सर्वतः ॥४३॥

---

संख्यापूर्वं वज्ररूपयन्त्रनिर्माणादिकं प्रस्तौति। तत्र तद्विद्याभेदाः—षट्कूटविद्यायाः पञ्चत्रिंशत्पटलवक्ष्यमाणक्रमेण अक्षराणां क्रमपौर्वापर्या(याता)त् स्वरूपभेदाः। तेषां सङ्केतविद्याखण्डत्रयपौर्वापर्यात् तत्प्रकारजनित सविंशति(२)शतत्रयाधिकचतुःसहस्रेषु सङ्केतविद्याखण्डजैर्भेदैरेव षड्यन्त्रनिर्माणमत्रोक्तम्। तैः—कूटभेदैः। प्रिये इति देवीसम्बुद्धिः ॥३७॥

प्रागित्यादिभिः शिवे इत्यन्तैरष्टभिः श्लोकैः प्रस्तुतविद्याकूटाक्षरभेदैः कोष्ठवज्राकाराणि षट्यन्त्राण्युपदिशति—तत्र षट्त्रिंशत् प्रतिकोणमितिशेषः ॥३८॥३९॥ त्र्यस्राणि चत्वार्यग्राणि-वज्रयन्त्रस्य चत्वार्यग्राणि त्रिकोणानि कुर्यादित्यर्थः। चतुःकोष्ठैस्तु पूर्ववत्—प्रतिदिशं चतुर्भिश्चतुर्भिः कोष्ठैरित्यर्थः॥४०॥ तस्य—यन्त्रस्य। मध्याधःकोष्ठं—अधस्थत्र्यस्रोपरिस्थपङ्क्तिस्थकोष्ठपञ्चकमध्यस्थकोष्ठम्। आद्यखण्डजान्—षट्स्वितिशेषः। तान् कूटान्विंशत्यधिकशतसङ्ख्याकान्। प्रथा तेषां क्रमेण विद्याक्षरषट्कोपक्रमत्वात् खण्डत्वम् ॥४१॥ मध्येऽवशिष्टनवके वामदक्षत्रयद्वये—मध्यस्थेषु नवसु कोष्ठेषु ऊर्ध्वाधःक्रमस्थितेषु त्रिपङ्क्तिकेषु कोष्ठेष्वित्यर्थः।

---

(१) थास्त्रिलात् इति सो० पु० पा०। (२) संविदसतिसत इति वं० पु० पा०

चतुस्त्रिकोणमध्यस्थं* द्विरेखाभिर्नवीकृतम् ।
मध्यवद्विलिखेत्तेषु वज्रयन्त्रमितीरितम् ॥४४॥
एवमन्यैः पञ्चभिश्च खण्डैः पञ्च प्रकल्पयेत् ।
इति षट्वज्रयन्त्राणि प्रोक्तानि क्रमशः शिवे ! ॥४५॥
लोहत्रयकृते(१) पट्टे शिलायां वा चतुर्षु वा ।

---

प्रतिलोमानुलोमात्मविद्याद्वयं—नित्यानित्याविद्यायास्त्रीणि खण्डानि कुर्यादित्यर्थः । ॥४२॥ प्रतिलोमानुलोमक्रमेण लिखेदित्यर्थः॥४३॥ द्विरेखाभि(र्न)वीकृतं—प्रतिकोणं समान्तरालं मध्यतस्त्रिरेखा(त्रता)मात्रानुगुण्येन द्विद्विक्रमेण षड्भीरेखाभि नंव-त्रिकोणानि कुर्यादित्यर्थः । मध्यवद्विलिखेत्तेषु—तेषु त्र्यस्रोदरस्थत्रिकोणनवकेष्वपि वामदक्षिणपार्श्वस्थत्रिकोणत्रये प्राग्वद्विद्यां मध्यत्रिकोणत्रये साधकादिनामाक्षराणि च लिखेदित्यर्थः॥४४॥ पञ्चभिश्च खण्डैः—नित्याविद्यायाः प्रागुक्तरूपैः प्रत्येकं विंश-त्यधिकशतकूटाक्षरात्मभिरितिशेषः । एतदुक्तं भवति - प्राक्प्रत्यक्दक्षिणोदगग्राणि अष्टादशसूत्राणि समान्तरालानि कृत्वा तैः सञ्जातेषु नवाशीत्यधिकद्विशतसङ्ख्येषु कोष्ठेषु चतुर्षु कोणेषु प्रतिकोणं (षट्त्रिंशत्) षट्त्रिंशत्कोष्ठानि कृत्वा प्राग्वन्मध्ये वज्राकारानुगुण्येन मार्जयेत् । पश्चादवशिष्टेषु वज्ररूपेषु पञ्चचत्वारिंशदधिकशत-सङ्ख्येषु कोष्ठेषु चतसृषु दिक्षु प्रतिदिशं चत्वारि चत्वारि कोष्ठानि मार्जयित्वा तत्र प्रागुक्तक्रमेण प्रतिदिशमेकैकक्रमेण चत्वारि त्रिकोणानि समत्रिरेखाणि विधाय तत्र त्रिकोणरेखात्रयं विभागीकृत्य तेषु मध्ये मध्ये चिह्नद्वयं (चिह्नद्वयं) विधाय चिह्नाच्चिह्नं सूत्रद्वयानुगुण्येन द्वयं द्वयमितिक्रमेण षड्रेखाः समालिखेत् । एवं कृते ऊर्ध्वाधःक्रमेण त्रिकोणत्रयं तत्पार्श्वयोरूर्द्ध्वयो(रूपं) स्त्रिकोणद्वयं (त्रिकोणद्वयं) तत्पार्श्वयोरेकैकमेकं त्रिकोणं इत्येवं नवकोणानि सम्भवन्ति । तत्राधःस्थत्रिकोणो-परिस्थपङ्क्तिकोष्ठपञ्चकमध्यस्थकोष्ठमारभ्य बाह्यवीथिकोष्ठेषु यावदुपक्रान्तकोष्ठं तत्सङ्ख्यानि कूटाक्षराणि प्रथमखण्डकूटाक्षरेष्वालिख्यामुक्तक्रममन्तः प्रविश्य द्वितीयपङ्क्तौ च प्राग्वदालिख्य एवमन्त्यार्वाद्विंशत्यधिकशतसङ्ख्यावसानविद्या-प्रथमकूटाक्षराणि विलिख्य मध्यतोऽवशिष्टेषु नवसु कोष्ठेषु मध्यगतेषु त्रिषु कोष्ठे-षूर्द्ध्वाधरान्तं क्रमेण साधककर्म्मसाध्याक्षराणि विलिख्य तेषां वामभागस्थपङ्क्ति गतकोष्ठत्रये अधरकोष्ठादूर्ध्वकोष्ठान्तदक्षिणभागपङ्क्तिस्थकोष्ठत्रये ऊर्ध्वकोष्ठा-

---

(१) लोहत्रयफले इति मू० पु० पा० ।      * मध्यचेति मू० पु० पा० ।

पट्टे वा फलकायां वा षट्कं षट्सु प्रकल्पयेत् ॥४६॥
फलकापट्टयोः पूजां कुर्यान्नित्यश एव तु ।
इतराणि तु संस्थाप्य यजेत्तत्रैव तां शिवाम् ॥४७॥
तत्स्थापनप्रदेशे तु विदध्यान्मण्डपं शुभम् ।
नवहस्तायामततं पताकातोरणान्वितम् ॥४८॥
फलपुष्पवितानाद्यै रुपेतं परिकल्पयेत् ।
उत्सेधायामविस्तारहस्तां वेदीं च मध्यतः ॥४९॥
एकं चेत् षट्कमथ चेत्कुर्याद्वे द्वादिकं तथा ।
(१)ईशप्राग्वह्निरक्षां(२) तु वायुदिक्षु यथाक्रमम् ॥५०॥
प्रथमं राक्षसि त्वन्यान्यन्येषूक्तक्रमेण वै ।
निवेद्य गन्धपुष्पाद्यैर्नृत्यगीतादिभिस्तथा ॥५१॥
समाराध्यैवमेवन्तु त्रिदिनं प्रोक्तशक्तिभिः ।
हुत्वा जपित्वा जीवोच्चे भानूच्चे वा स्थिरोदये ॥५२॥

---

दधःस्थकोष्ठान्तं च विद्यात्रिखण्डं समालिख्य बहिश्चतुर्दिक्षु लिखितत्रिकोणोदरस्थत्रिकोणनवकेष्वपि विद्यानामाक्षराणि मध्यवत् समालिखेत् । एतत् प्रथमं वज्रयन्त्रम् । एवमन्यान्यपि पञ्चवज्रयन्त्राणि विद्यायाः पञ्चभिः खण्डैः कुर्यात् । एवं पूर्वोक्तेन सार्द्धं षड् वज्रयन्त्राणि सम्भवन्तीति ॥४५॥

लोहत्रयेत्यादिभिरपि वा इत्यन्तैस्त्रयोदशभिः श्लोकैस्तेषां वज्रयन्त्राणां सामर्थ्यापादनार्थं मण्डपवेदिकानिर्माणं तत्र तेषां स्थापनं तत्र देवतामूर्तिसप्तकप्रतिष्ठां तदाराधनप्रकारं तत्फलानि फलकापटयोस्तद्यन्त्राणि विलिख्य तदाराधनस्य फलं चोपदिशति । तत्र शिलायां—दृषदि । षट्कं षट्सु एकद्व्यादिषु षट्स्वधिकरणेषु एकद्व्यादिकानि षटसु प्रत्येकं वा यथाक्रममेकैकं सर्वाणि वा सर्वत्र वा षड्यन्त्राणि वज्ररूपाणि कल्पयेदित्यर्थः ॥४६॥ पूजां—यन्त्रस्येति शेषः । इतराणि—लोहत्रयशिलालिखितानि च षड्यन्त्राणि । तत्रैव—संस्थापितेषु वज्रेषु । तां—नित्यानित्याम् ॥४७॥ तत्स्थापनप्रदेशे—वज्रयन्त्रषट्कस्थापनप्रदेशे । ततं—

---

(१) ईशेति सो॰ पु॰ पा॰ । (२) रक्षोन्त् इति मू॰ पु॰ पा॰ ।

स्ववाम(भा)गे भूम्युदये संस्थाप्य परमेश्वरि ! ।
देव्यात्मा तच्छिलाभिस्तु दृढमाबध्य तत्र वै ॥५३॥
देवीं षड्भिन्नतां ताभिर्डाकिन्यादिभिरम्बिके ! ।
मूर्तिसप्तकमुत्पाद्य प्रतिष्ठाप्य समर्चयेत् ॥५४॥
नित्यशस्तत्पुरोविद्याभजनं चापि कारयेत् ।
यत्र तत्र गदालक्ष्मीरिपुग्रहपिशाचकाः ॥५५॥
दुर्भिक्षक्षुद्रकर्मोत्थपीड़ाक्लत्याः परेरिताः ।
न कदाचित्सम्भवन्ति विद्यायन्त्रानुभावतः ॥५६॥
मङ्गलान्येव जायन्ते सर्वेषां सर्वतः सदा ।
धार्मिकाश्चैव राजानः पूर्णसप्ताङ्गसंयुताः ॥५७॥
फलकापटयोः क्लृप्तपूजातोनिजमन्दिरे ।
वाञ्छितं समवाप्नोति मण्डलान्मासतोऽपि वा ॥५८॥

---

विस्तारः॥४८॥ मध्यतः—मण्डपस्येति शेषः॥४९॥ एकं—यन्त्रमितिशेषः। षट्कं यन्त्राणामिति शेषः ॥५०॥ उक्तक्रमेण—डाकिन्यादीनां प्रागुक्तरक्षोवायुशक्रवह्नीश-वरुणदिक्षु स्थापनादित्यर्थः ॥५१॥ प्रोक्तशक्तिभिः—डाकिन्यादीनां परिवारभूता-भिर्वक्ष्यमाणाभिः। जीवोच्चे—बृहस्पतेरुभयोच्चे नित्योच्चे वा। भानूच्चेपि—तद्वत् स्थिरोदये—स्थिरराश्युदये ॥५२॥ भूम्युदये—श्वासपटलवक्ष्यमाणपृथिव्युदये। तत्—यन्त्रमिति शेषः। तत्र - वेदिकासु ॥५३॥ आदिशब्दोराकिन्यादिविषयः। मूर्तिसप्तकं—(डा)राकिन्यादीनां षण्णां देव्याश्चेति शेषः ॥५४॥ तत्पुरः—तासां सन्निधौ। विद्याभजनं—मूलविद्याभजनं कारयेदित्यर्थः ॥५५॥ क्षुद्रकर्मोत्थपीड़ाः विद्वेषणादिप्रयोगजाः क्लेशाः। विद्यायन्त्रानुभावतः—उभयोः सामर्थ्यात् ॥ ॥५६॥५७॥ क्लृप्तपूजातः—क्लृप्तयन्त्रषटकपूजनात्। मण्डलात्—प्राग्वत्। एतदुक्तं भवति—प्रोक्तानि षट्वज्ररूपाणि यन्त्राणि देवीनित्यपूजाचक्रं (यन्त्रं) च लोहत्रये शिलायां वा उक्तक्रमेण समुत्कीर्य तेषां स्थापनार्थं प्रोक्तायामविस्तारं पताकाद्यलङ्कृतं मण्डपं परिकल्प्य स्थापनीयं यन्त्रमेकं चेत् तन्मध्यतः प्रोक्तो-त्सेधायामविस्तारामेकां वेदिकां कृत्वा स्थापनीयानि यन्त्राणि षट्चेत् षट्वेदिकाः

आसां देहस्थितिं वक्ष्ये शृणु सर्वार्थदायिनीम् ।
सुषुम्नामध्यसंस्थेषु षडाधाराम्बुजेषु ताः ॥५९॥
तिष्ठन्ति प्राणिनां देव्यः सिद्ध्यन्ति ज्ञानपूजिताः ।
वहिश्च मण्डले पूजानुग्रहानिग्रहात्मिका(म्) ॥६०॥
*विशुद्धाख्ये कण्ठदेशे षोडशस्वरपत्रके ।
धूम्रवर्णाम्बुजे देवीं डाकिनीं तत्समाकृतिम् ॥६१॥
शक्तिभिः स्वररूपाभिरावृतां तत्र पूजयेत् ।
तया सर्वज्ञतासिद्धिर्भवत्येव न संशयः ॥६२॥

---

प्रोक्तादिक्षु परिकल्प्य तन्मध्ये चैकां वेदिकामुत्पाद्य तत्र प्रोक्तक्रमेण षट् यन्त्राणि निवेश्य मध्ये वेदिकायां देवीनित्यपूजाचक्रं निवेश्य गन्धपुष्पधूपाद्यैस्तेषु यन्त्रेषु डाकिन्यादिभिर्वक्ष्यमाणाभिस्तत्परिवारशक्तिभिर्देवीं च दिनत्रयं समाराध्य प्रतिदिनं सहस्रवारं जपित्वा तद्दशांशं हुत्वा बृहस्पत्युच्चे द्विविधे तरणेरुच्चे तथाविधेभानूच्चे वा स्थिरराश्युदये वा स्ववामनासापुटपृथिवीस्थानश्वासोदये वा तानि यन्त्राणि तासु वेदिकासु प्रोक्तक्रमेण संस्थाप्य शिलाभिर्दृढमाबध्य तासु वेदिकासु प्रतिवेदिकं डाकिन्यादीनां षण्णां देव्याश्च मूर्तिसप्तकमुत्पाद्य प्रतिष्ठाप्य समभ्यर्च्य तासां सन्निधौ मूलविद्याभजनं चापि कारयेत्। एवं यत्र क्रियते तत्र-प्रोक्तान्यमङ्गलानि न सम्भवन्ति। प्रोक्तानि मङ्गलानि भवन्त्येव। एतानि सर्वाणि वा एकमेकं वा फलकायां पटे वा कृत्वा निजमन्दिरे क्वचित्स्थाने स्थापयित्वा पूजनात् प्रोक्तकालात् समस्तं वाञ्छितं प्राप्नोति ॥५८॥

आसामित्यादिभिरास्पदमित्यन्तैस्त्रयोदशभिः श्लोकैः षडाधारस्थानानि तन्नामानि तत्तद्गताम्बुजानि तत्तदम्बुजस्थान्यक्षराणि तत्तदम्बुजगतानि दैवतानि तत्तद्वर्णं तत्तदनुग्रहार्थं पूजाक्रमं तत्तन्निग्रहार्थं पूजाक्रमादिकं चोपदिशति। तत्र आसां—डाकिन्यादीनाम्। देहस्थितिं—सर्वप्राणिनां देहेषु स्थितिम्। ताः—देव्यः इत्यत्रान्वयः डाकिन्यादय इति शेषः ॥५९॥ ज्ञानपूजिताः—आसां देहाधिष्टातृरूपत्वं परमार्थं गुरुमुखाज्ज्ञात्वा पूजिता इत्यर्थः। वहिश्च मण्डले—वक्ष्यमाणरूपे। पूजां वक्ष्ये इत्यत्रान्वयः ॥६०॥ तत्समाकृतिं—मूलदेवतासमाकृतिम्। आसां वर्णस्तु तत्तदाधाराम्बुजसमानः। विग्रहस्तु मूलदेवतास-

---

* विशुद्धाख्ये इति मू० पु० पा०।

अनाहताख्ये हृद्देशे सिन्दूरारुणपङ्कजे ।
राकिनीं द्वादशदले कादिठान्ताक्षरात्मभिः ॥६३॥
शक्तिभिः पूजयेन्नित्यं कीर्त्यायुःश्रीधनाप्तये ।
मणिपूरकसंज्ञे च नाभिस्थे दशपत्रके ॥६४॥
इन्द्रनीलनिभेड़ादि दशवर्णात्मशक्तिके ।
लाकिनीं पूजयेद्वैरिवि जयश्रीसमृद्धये ॥६५॥
ध्वजमूले समस्तापत्तारणायेष्टसिद्धये ।
वादिषड़्वर्णशक्तीभिरावृतां डाकिनीं यजेत् ॥६६॥
स्वाधिष्ठानाह्वये पद्मे बालार्कत्विषि षड़्दले ।
आधाराख्ये चतुष्पत्रे सुवर्णाभे सरोरुहे ॥६७॥
वादिशान्तार्णशक्तीभिरावृतां शाकिनीं यजेत् ।
पायुध्वजान्तरा.त्रास्त्रमध्ये तेजः समन्विताम् ॥६८॥
आज्ञाख्येऽब्जे भ्रुवोर्मध्ये द्विदले शु(भ)द्धविग्रहे ।
सेवितां हक्षशक्तिभ्यां हाकिनीं पूजयेत्तथा ॥६९॥
त्रिकालज्ञोनरः सर्वं(तो)चिन्तालोकनकारिणीम् ।
विश्वसृष्टिस्थितिध्वंसशक्तिदामप्ययत्नतः ॥७०॥
उक्तक्रमविपर्यासान्निग्रहोन्तर्वहिस्तथा ।
पूजनं सर्वदुःखार्तिनाशनं सम्पदास्पदम् ॥७१॥

---

मानः ॥६१॥ तया—पूजया ॥६२॥६३॥६४॥६५॥६६॥ ध्वजमूले—मेहनमूले ॥६७॥ पायुध्वजान्तरा—गुदरन्ध्रमेहनान्तरालप्रदेशे । त्रास्त्रमध्ये तेजः समन्वितां—कुण्ड-लिनीतेजोरूपाम् ॥६८॥ तथा—समुच्चये ॥६९॥ चिन्तालोकनकारिणीं हाकिनी मित्यत्रान्वयः । साधकस्य चित्तेषु भूतभविष्यवर्तमानकार्यज्ञानसामर्थ्यप्रदायिनी-मित्यर्थः ॥७०॥ अन्तर्वहिः—षड़ाधारेषु वक्ष्यमाणरूपे वाह्यगतयन्त्रे च । तथा—पूजनं अन्तर्वहिश्च उक्तवक्ष्यमाणक्रमानुलोमपूजनमित्यर्थः । एतदुक्तं भवति—प्रोक्तेषु कण्ठादिषु भ्रूमध्यान्तेषु षट्स्वाधारेषु प्रोक्तरूपाणां पद्मानां मध्ये डाकि-

भूमौ विधाय षट्कोणसप्तकं प्रोक्तदिक्क्रमात् ।
मध्ये च तत्र तां नित्यानित्या गन्धादिनाऽर्चयेत् ॥७२॥
अभितस्तत्षडस्रेषु तत्षट्कं तत्क्रमाद्यजेत् ।
बाह्येष्वपि च ताः प्राग्वत्प्रोक्तवर्णाः समर्चयेत् ॥७३॥
तासां षण्णामपि तथा षट्सु कोणेषु शक्तयः ।
षट्त्रिंशत्ताः समादेव्याः सर्वरूपायुधादिभिः ॥७४॥
प्राग्वत्स्वरेषु पञ्च स्युरपू(र्वा) कादिमान्तकाः ।
परेषु यवलक्षार्णरहिता स्तैस्तथाऽर्चयेत् ॥७५॥

न्यादिहाकिन्यन्ताः षट्देवता मूलदेवतासमानविग्रहास्तत्तदाधाराम्बुजप्रोक्तवर्णसमानरूपवर्णाः स्वस्वसमानाकारवर्णाभिरक्षरशक्तिभिः प्रत्येकमाधाराम्बुज प्रोक्तदलसङ्ख्याभिरावृताः प्रोक्तक्रमेणानुग्रहाख्यां सृष्टिक्रमपूजां कुर्यात् । तत्र बीजद्वयादीनि स्वस्वनामानि सम्प्राचर्यन्तानि तत्पूजाविद्याः तत्तन्नामविद्या पूजान्ते मूलविद्यया च पूजयेत् । तत्तदावरणशक्तीनामक्षरात्मिकादीनां नित्यानित्यपूजोक्तद्वादशाक्षरविद्यया आसामवसानभूतहाकिन्याद्युपक्रमभूतडाकिन्यन्ताः पूजानिग्रहाख्या संहारक्रमपूजा एवमन्तर्बहिश्चानुग्रहपूजां च कुर्यादिति ॥७१॥

भूमावित्यादिभिरर्चयेदित्यन्तैः चतुर्भिः श्लोकैर्बाह्यानुग्रहं चक्रं तत्र पूजनीयशक्तिध्यानं तत्पूजाक्रमं चोपदिशति । तत्र प्रोक्तदिक्क्रमात्—निर्ऋतिवायुशक्रवह्नीशवरुणमध्यदिक्क्रमात् । मध्ये च तत्र—तस्मिन् चक्रे सर्वमध्यस्थ(कोण)षट्के मध्ये । गन्धादिभिरित्यत्रादिशब्देन षोडशोपचारा उच्यन्ते ॥७२॥ तत्षडस्रेषु—मध्ये षट्कोणेषु । तत्षट्कं तत्क्रमात्—डाकिन्यादिशक्तिषट्कं निर्ऋत्यादि प्रोक्तक्रमदिक्षु । बाह्येष्वपि च अपिचेति समुच्चये । बहिषट्कोणषटके । ताः—डाकिन्याद्याः । प्राग्वत् निर्ऋत्यादिक्रमेण—प्रोक्तवर्णाः । स्वस्वाधारप्रोक्तवर्णाः॥७३॥ तथा निर्ऋत्यादिक्रमेण । समादेव्याः तत्तन्मध्यदेव्या तत्तन्मध्यदेवतासमानरूपवर्णरूपायुधा इत्यर्थः॥७४॥ प्राग्वत्स्वरेषु पञ्चस्युः—कुलसुन्दरीपटलप्रोक्तमातृकायन्त्रस्याष्टमदलाक्षराणि तानि अइउऋ अः इति पञ्च अपूर्वाः । अपुनरुक्ताः पञ्चाशद्वर्ण इति शेषः । परेषु यवलक्षार्णरहिताः—यादिक्षान्तेषु दशसु वर्णेषु पुनरुक्तयवलक्षवर्णचतुष्टय रहिताः तेषां चतुर्णां पुनरुक्तत्वं यणादेशसन्धिसम्भवित्वात् यकारवकारयोः । अन्ययोस्तु रलयोरभेदत्वात् ककारषकाररूपत्वात् च क्षकारस्य । तैः—षट्त्रिंश-

न्निरक्षरैः । तथा—प्रागुक्तद्वादशाक्षररूपैः । तत्राकारादिककारान्ताः षट्शक्तीः प्रथमे चक्रे पूजयेत् । एवमन्येष्वपि यथाक्रमं (षट्) षट् शक्तीः पूजयेत् । एतदुक्तं भवति—अन्योन्यानुगुणरेखाभिः सम्बद्धानि सप्त षट् कोणानि मध्यरक्षोवायुशक्रवह्नीशवरुणादिग्गतानि वरुणवायुईशशक्रवह्निनिरृतिसृष्टाग्रकाणि विधाय तेषु मध्यषट् कोणमध्ये प्रागुक्तारुणविग्रहां नित्यानित्यामावाह्य षोडशोपचारैरभ्यर्च्य तत् (त्रि) कोणषटके (तु) डाकिन्यादिहाकिन्यन्ताः षट् शक्तीस्तन्मध्यस्थनित्यानित्यासमानायुधविग्रहास्तत्तदाधारवर्णपद्मपर्णाश्च ध्यात्वा षोडशभिरुपचारैः क्रमादभ्यर्च्य ता एव डाकिन्यादिवह्निनिरृत्यादिदिग्गतषट्कोणषट् कमध्येषु प्रोक्तक्रमेणावाह्य पश्चिमाभिमुखा आधारवद्ध्यात्वा समभ्यर्च्य तासामभितः षट् कोणेष्वपि तत्तदावरणशक्तीः षट् त्रिंशतं तत्तदभिमुखाः निरृत्यादिप्रोक्तक्रमेण तत्तद्द्वादशाक्षरविद्याभिः षड् भिः षट् षट् क्रमेण वक्ष्यमाणतत्तन्निवेद्यविशेषोपचारसहितमर्चयेत् । एवमियमनुग्रहपूजा सर्वसम्पदवाप्तिकरीति । अस्य चक्रस्यायं विरचनात्क्रमस्त्रयोदशभिः श्लोकैः सार्द्धैः व्याख्यायते ।

चतुर्विंशाङ्गुलायामभ्रमात् वृत्तं विधाय तु ।
तत्र मध्ये ब्रह्मसूत्रं कृत्वा तस्यार्द्धमानतः ॥१॥
तत्पार्श्वयोश्चिह्नयुगं वृत्ते कृत्वा तथाऽन्यतः ।
विधाय चिह्नयुगलं चिह्नाच्चिह्नं द्वयोरपि ॥२॥
कृत्वा सूत्रद्वयं तिर्यक् पश्चिमाग्रयुगान्तयोः ।
ब्रह्मसूत्रस्थपूर्वाग्रावधि सूत्रद्वयं भवेत् ॥३॥
प्राक् सूत्राग्रद्वयात्तद्वत्कुर्यात्सूत्रद्वयं ततः ।
पश्चिमब्रह्मसूत्रान्तमित्थं षट् कोणकं भवेत् ॥४॥
ततस्तद्वह्निकोणादिवायुकोणान्तगं ततः ।
(तथेशानि)तद्दिगादि च रक्षोन्तं ब्रह्मसूत्रद्वयं भवेत् ॥५॥
प्रत्येकं ब्रह्मसूत्राणि त्रिधा कृत्वा तु चिह्नकम् ।
कृत्वाभितोऽथ वृत्तानि तत्तदर्द्धांशतोभ्रमात् ॥६॥
तेष्वेकं ब्रह्मसूत्रेषु चतुर्विंशतिभागकम् ।
कृत्वा तद्दशमांशेषु षट् सूत्राणि निपातयेत् ॥७॥
दिक्कोणवृत्तपर्यन्तं वायुवृत्तेषु षट्स्वपि ।
वृत्तस्पृक्सूत्रयुग्मारं मध्ये मध्ये निपातयेत् ॥८॥
सूत्राणि षट् ततस्तेषु वृत्तं कोणेषु मध्यतः ।
कृत्वा त्रिर्ब्रह्मसूत्राणि मार्जयेच्चक्रमुत्तमम् ॥९॥

एषामपि च चक्राणां शक्तीनां च विलोमतः ।
पूजा निग्रहसंज्ञा स्यात् सा शत्रूणां विपत्तये ॥७६॥
षट्सु चक्रेषु षट्कुम्भान्विधायारिमहीरुहः ।
क्वाथतोयाभिसम्पूर्णान् कृष्णाम्बरसमन्वितान् ॥७७॥
अर्द्धरात्रे यजेत्तास्तु तद्योनिबलिदानतः ।
क्षिप्रं त्वगादिभिस्ते स्युः पूर्णाः शत्रोः कलेवराः ॥७८॥
निवेद्य योनिरक्तेन सम्पन्नं चरुणा रिपोः ।
होमं च कुर्यात्तेनैव फणिशीर्षस्रुचा रुषा ॥७९॥
ध्यायेद्देवीश्च कुपिता दष्टौष्ठा बाहुभिर्निजैः ।
प्रहरन्तीः पिशाचेभ्योविकिरन्तीश्च तत्तनुम् ॥८०॥
जयागुलुच्छविलसत्कर्णा भीमार्तनिस्वनाः ।
ध्यात्वैवं निग्रहं कुर्याद्रिपूणां मारणाय वै ॥८१॥

---

रक्षोमारुतशक्राग्निशिववारिगतानि च ।
धूम्रसिन्दूरनीलोद्यद्भानुहैमेन्दु(भांसि)भानि च ॥१०॥
मध्यकोष्ठं विधायेत्थं डाकिन्यादीः समर्चयेत्
उद्यदर्यमबिम्बाभे नित्यानित्यां च मध्यमे ॥११॥
एतच्चक्रविनिर्माणमजानन्मान्त्रिकोनरः ।
निग्रहानुग्रहविधौ यतमानो विनश्यति ॥१२॥
रोगार्तौ द्वन्द्वयुद्धे च शत्रूणां च निपातने ।
तथा मनोषितप्राप्तौ सिद्धिरस्यार्चनाद्भवेत् ॥१३॥

अतः परं व्याख्येयानि ॥७५॥

एषामित्यादिभिर्मारणाय वै इत्यन्तैः षड्भिः श्लोकैरेष्वेव चक्रेषु निग्रहाख्यपूजाचक्रमुपदिशति । तत्र चक्राणां सप्तानां षट्कोणरूपाणामिति शेषः । शक्तीनां—तत्रतत्रोक्तषट्शक्तीनाम् । विलोमतः – चक्रशक्त्योरनुग्रहोक्तपूजाक्रमविलोमतः ॥७६॥ अरिमहीरुहः क्वाथतोयाभिसम्पूर्णान् – शत्रुनक्षत्र—वृक्षस्य कषायक्वथितजलपूर्णान् ॥७७॥ तद्योनिबलिदानतः:— शत्रुनक्षत्रयोनी-

चक्रं च निग्रहे प्रोक्तं वज्ररूपं भयङ्करम् ।
कांस्ये सीसेऽपि वा कृत्वा स्थापयेद्वैरिभूमिषु ॥८२॥
प्राक्प्रत्यक्दक्षिणोदक् च दशसूत्रनिपातनात् ।
एकाशीतिपदानि स्युस्तेषु कोणचतुष्टये ॥८३॥
प्रत्येकं दश कोष्ठानि मार्जयेच्छिष्टवज्रकैः ।
चतुर्दिक्षु त्रिकोणानि चतुःकोष्ठैः प्रकल्पयेत् ॥८४॥

---

च्छित्वा बलिदानतः । ते—कुम्भाः । कलेवराः—शरीराणि(१) ॥७८॥ योनि-रक्तेन—शत्रुनक्षत्रयोनिरुधिरेण । तेनैव—चरुणा । फणिशीर्षस्रुचा—भुजङ्गमस्य फणं छित्वा स्रुग्गतेन तेन फणेनेत्यर्थः ॥७९॥ तत्तनुं—शत्रुदेहम् ॥८०॥ गुलुच्छः—कलिका । एतदुक्तं भवति—प्रोक्तेषु सप्तसु षट्कोणचक्रेषु तत्तच्छक्तीः सावरणा(हे)-भीमरूपा स्तिष्ठन्तीरावाह्य तत्तदभिमुखा ध्यात्वा तत्तच्चक्रस्थानस्थिता एवानुग्रह-पूजाक्रम(प्रति)विलोमक्रमतः सचक्रावृतिशक्तीनां वक्ष्यमाणबलिं निवेद्य होमसहितं पूजयेत् । तेष्वेव सप्तसु षट्कोणचक्रेषु मध्यचक्रवर्जं षण्णां मध्येषु षट्कुम्भान्नि-धाय तेषु कुम्भेषु शत्रुनक्षत्रवृक्षकषायक्वथितजलान्यभिपूर्य प्रोक्तभीमरूपाः सर्वेषां त्वगादिधात्वीशाः प्राग्वत्तदभिमुखास्तिष्ठन्तीः(२) शत्रोस्तत्तत्त्वगादिधातूनाकृष्य तत्तत्कुम्भेषु सम्पूर्य तद्देहं स्वायुधैः शकलीकृत्य पिशाचेभ्योविकिरन्तीस्तैर्भक्ष्यमाणं तत्तद्देहं भावयन् तदिन्द्रियमनःप्राणान् स्वचेतसा प्राणप्रतिष्ठाप्रोक्तप्रक्रियया मध्य-देवतायां नियोजयन्ननुग्रहपूजोक्तक्रमप्रतिलोमतः पूजयन् शत्रुनक्षत्रयोनि बलिं छिन्दन् तदुक्तेन सम्पादितचरुणा निवेद्यं च कुर्वंस्तेन होमं फणिफणास्रुचा कुर्वन्नेवं पूजयन् प्रोक्तं फलमवाप्नोति इति । आसां षण्णां डाकिन्यादीनां त्वगा-दीनां च नित्यानित्याविद्यासम्बन्धाधारादिषु ३) तत्तन्निग्रहानुग्रहपूजनेषु रहस्यार्थश्च स्वगुरुमुखादेवावगन्तव्यः ॥८१॥

चक्रमित्यादिभिर्मर्दनमित्यन्तैरध्यर्द्धैः षड्भिः श्लोकैर्निग्रहकोष्ठवज्रचक्र-निर्माणं तत्प्रयोगविशेषं तत्फलं चोपदिशति । तत्र चतुःकोष्ठैः—प्रतिदिशमेकैकं कोष्ठं मार्जयित्वा तत्र त्रिकोणानि कुर्यादित्यर्थः ॥८२॥८३॥८४॥ मध्याधः

---

(१) कलेवरात् शरीरात् इति टी पु० पा० । कलेवरान् शरीराणि इति सो० पु० पा० ।
(२) तिष्ठन्तीति वङ्ग पु० पा० (३) धार आदिषु इति टी पु० पा० ।

तेषु मध्यस्थकोष्ठे च साध्यं कर्म समालिखेत् ।
शिष्टेषु मध्याधःकोष्ठमारभ्य प्रतिलोमजान् ॥८५॥
विद्याकूटांस्तु षट्त्रिंशदालिखेदप्रदक्षिणम् ।
साध्ययोन्यसृजा पिष्टतद्वृक्षक्षोदलेपितान् ॥८६॥
स्थापयेत्प्रोक्तसमये रिपुक्षेत्रगृहादिषु ।
श्मशाने चण्डिकागेहे कुलोत्सादकरं भवेत् ॥८७॥
इति निग्रहमाख्यातं समस्तरिपुमर्दनम् ।
अनुग्रहं शृणु प्राज्ञे ! पूजाचक्रविधानतः ॥८८॥
देवीस्ताः प्रोक्तरूपास्तु ध्यात्वा चक्रेषु पूजयेत् ।
नैवेद्यमासां सम्प्रोक्तं यदासां प्रीतिदायकम् ॥८९॥

---

कोष्ठमारभ्य सर्वमध्यकोष्ठस्याधः स्थितं कोष्ठमारभ्याप्रादक्षिण्येनामुक्तक्रमं निर्गमनगत्या लिखेदित्यर्थः। प्रतिलोमजान्—पञ्च(त्रिं)विंशपटलवक्ष्यमाणक्रमभेदेषु प्रतिलोमतः क्रमरूपान्॥८५॥ साध्ययोन्यसृजा-- शत्रुनक्षत्रयोनिरक्तेन। पिष्टः—आघृष्टः। तद्वृक्षक्षोदः—शत्रुनक्षत्रवृक्षक्षोदः—पङ्कः ॥८६॥ प्रोक्तसमये अरातेर्वैनाशिकनक्षत्रे अष्टमराश्युदये। आदिशब्दो देशादिविषयः। तत्र तत्रापि अष्टमराशिस्थाने॥८७॥ इति उक्तप्रकारेण। अरिमर्दनं—शत्रुनाशकरमिति यावत्। एतदुक्तं भवति—प्रागवदेकाशीतिकोष्ठानि कृत्वा तेषु कोष्ठेषु प्रतिकोणं दशदशकोष्ठानि मध्यवज्राकारेण मार्जयित्वा चतुर्दिक्षु प्रतिदिशमेकमेकं कोष्ठं मार्जयित्वा तत्र तत्र त्रिकोणानि विधाय तेषु त्रिकोणेषु मध्ये च साध्यमालिख्य सर्वमध्यकोष्ठाधःपङ्क्तिमध्यकोष्ठमारभ्याप्रादक्षिण्येनामुक्तक्रमं निर्गमनगत्या पञ्चत्रिंशे पटले वक्ष्यमाणक्रमभिन्नविद्याकूटान् प्रतिलोमजान् षट्सङ्केतविद्याजनितषट्प्रकारसम्बन्धान् एवं क्रमेण षट्त्रिंशत्कूटानालिख्य साध्यनक्षत्रयोन्यसृग्घृष्टतन्नक्षत्रवृक्षपङ्केनालिख्य प्रोक्तसमयेषु प्रोक्तस्थानेषु स्थापयित्वा प्रोक्तं फलमाप्नुयादिति ॥८७॥

अनुग्रहमित्यादिभिर्लघुविग्रह इत्यन्तै रर्धाधिः षड्भिः श्लोकैः प्रागुक्तानुग्रहचक्रपूजनं तत्तद्देवतानां निवेद्यविशेषांस्तासामङ्गनासु समर्चनमनुग्रहकोष्ठवज्र-

पायसान्नं गुड़ान्नं च मुद्गभिन्नान्नकं तथा ।
हरिद्रान्नं तिलान्नं च शुद्धान्नं षट्कमेव च ॥९०॥
चक्रेषु सप्तसु तथा तद्वर्णाश्चारुविग्रहाः ।
युवतीः सप्त संस्थाप्य प्राग्वदभ्यर्च्य ताः क्रमात् ॥९१॥
भूषणाम्बरगन्धा(१)स्रग्भोजनाद्यैस्तु तोषयेत् ।
तासु तुष्टासु तुष्टाः स्युः शक्तयस्ताः समास्तदा ॥९२॥
प्रागुक्तवज्रे साध्याख्यं तथालिख्यानुलोमजान् ।
कूटानुक्तसमारम्भान् प्रादक्षिण्येन सल्लिखेत् ॥९३॥
प्रोक्तेषु प्रोक्तरूपेण स्थापयेत् प्रोक्तभूमिषु ।
प्रोक्तान्येव फलानि स्युर्योगोऽयं लघुविग्रहः ॥९४॥

---

यन्त्रं तत्र पूजाक्रमं तत्फलानि चोपदिशति । तत्र पूजाचक्रविधानतः— पूजाविधानतः चक्रविधानतश्च । तत्र पूजाविधानं डाकिन्यादीनां युवतीनां च । चक्रविधानं तु वज्रयन्त्रादि ॥८८॥ ताः— डाकिन्यादीः । प्रोक्तरूपा इत्यनेनाधार(च)क्रमोक्तवर्णाः मूलदेवीसमानबाहुमुखाश्चेतिचोच्यते । सपुत्रदेव्या रक्तत्वमेव षट्कं मध्यस्थाया देव्या इति शेषः॥८९॥९०॥तद्वर्णाः— आधारप्रोक्तदेवतामूलदेवतासदृशवर्णाः प्राग्वदभ्यर्च्य— मध्यादिप्रागन्तम् । ताः— शक्तीः ॥९१॥ भोजनं— तत्तद्देवताप्रोक्तम् । आदिशब्देन यावच्छक्तिदक्षिणारूपं वित्तं चोच्यते । तासु— युवतिषु । ताः— डाकिन्यादीः । एतदुक्तं भवति— प्रागुक्तेषु सप्तसु चक्रेषु प्रोक्तक्रमेण प्रोक्ताः शक्तीः समावाह्य सम्पूज्य तत्तन्निवेद्यं तत्तद्देवतायै निवेद्य तन्निवेद्यषट्कं समुदितमध्यदेवतायै निवेदयेत् । तेष्वेव सप्तसु चक्रेषु तत्तद्देवतासमानवर्णाः सप्तयुवतीश्च संस्थाप्य तासु ताः शक्तीः प्रोक्तक्रमेण समावाह्याभ्यर्च्य तत्तन्निवेद्यपुरःसरं भूषादिभिस्तासां युवतीनां तोषणात्तत्तच्छक्तयः परितुष्टाः समस्तवाञ्छितं दद्युरिति ॥९२॥ प्रागुक्तवज्रे— निग्रहप्रोक्ते एकाशीतिकोष्ठे प्रोद्धृते वज्रयन्त्रे । अनुलोमजान् पञ्चत्रिंशत्पटलोक्तक्रमभिन्नविद्यानुलोमरूपान् षट्त्रिंशद्विद्याकूटान् । उक्तसमारम्भान्— सर्वमध्यकोष्ठाधःपङ्क्तिमध्यकोष्ठसमारम्भान् ॥९३ प्रोक्तेषु— स्वर्णादि-

---

(१) गन्धर्वभोजनेति स्व० पु० पा० ।
(१) वज्रचक्रे इति टी० पु० पा० ।

आदिचान्ताक्षरैः प्राग्वद्रूपिणीशक्तिसंयुतैः ।
बीजद्वयाद्यैः सप्ताक्षर्यन्तैः पञ्चदशाक्षरैः ॥९५॥
पञ्चाशच्छक्तयः पूज्याः पञ्चाशत्तेचपालकैः ।
दिनेषु घटिकायोगात् पञ्चाशन्मिथुनान्यपि ॥९६॥
तेषां बीजद्वयं वर्णारूपत्तेत्रेशसंयुताः ।
सप्ताक्षर्या च संयुक्ता मन्त्राः पञ्चदशाक्षराः ॥९७॥
चतुःषष्टिपदे मध्ये चतुष्के दिनविद्यया ।
मनीषितं समालिख्य (रभ्र) तेषु तन्मिथुनानि वै ॥९८॥
घटिकाक्रमयोगेन हृन्मायामध्यमर्चयेत् ।
एवं मण्डलमासार्द्धात् प्राप्नोत्येवाभिवाञ्छितम् ॥९९॥

---

धिष्ण्यकरणेषु मैत्रादिषु नक्षत्रेषु एकादशराश्युदये एकादशराशिस्थानेषु चेत्यर्थः । प्रोक्तभूमिषु— गृहमण्डपादिषु । प्रोक्तान्येव फलानि स्युः— आयुःकीर्तिविजयादिलाभरूपाणि । योगः— प्रयोगः । लघुविग्रहः— अनया सरूपः । एतदुक्तं भवति— प्रागुक्तरूपे वज्रयन्त्रे मध्यकोष्ठाधःपङ्क्तिमध्यमारभ्य प्रादक्षिण्येनामुक्तक्रमं निर्गमनगत्या पञ्चत्रिंशत्पटलवच्छमाणक्रमभिन्नविद्यानुलोमरूपान् षट्सङ्केतविद्याजनितषट्प्रकारसंयुक्तानेवं षट्त्रिंशत्सङ्ख्यान् कूटानालिख्य प्राग्वन्मध्ये चतुर्दिग्गतत्रिकोणेषु च साध्याख्यामालिख्य प्रोक्तक्रमेण प्रोक्तेषु कालेषु प्रोक्तेषु अधिकरणेषूत्कीर्य प्रोक्तभूमिषु प्रोक्तेषु स्थानेषु स्थापनात् प्रोक्तफलावाप्तिः स्यात् एवमेष प्रयोगेष्वपियत्नसाध्य २) इति ॥९४॥

आदिक्षान्तेत्यादिभिः सर्वत इत्यन्तैः षड्भिः श्लोकैः कालघटिकारूपपञ्चाशत् मिथुनानां तन्मण्डले समर्चनादभीष्टफलावाप्तिमुपदिशति । तत्र— एतदुक्तं भवति— समान्तरालं प्राक्प्रत्यक् दक्षिणोदक्च नव सूत्राण्यास्फाल्य तत्र चतुःषष्टिपदे चक्रे मध्यत ऊर्द्ध्वाधोद्विद्विक्रमेण चतुःकोष्ठान्येकीकृत्य तत्रैव पञ्चविंशपटलवच्यमाणप्रक्रियया तत्तद्दिननित्याविद्याक्षराणि त्रीणि मनीषितप्रार्थनमध्यमालिख्य तदनन्तरं बाह्याधःपंक्तिस्थमध्यद्वयदक्षिणकोष्ठमारभ्य प्रादक्षिण्यक्रमेणा मुक्तक्रमं निर्गमनगत्या चक्रवामपङ्क्त्यधःकोष्ठावधि तेषु पञ्चत्रिंशत्पटलवच्यमाणे-

---

(२) एवमेषु प्रयोगे यत्नसाध्यमिति पु० पा० ।

नित्यशस्ताः समावाह्य तस्मिन् चक्रे समर्चनात्।
समस्तवाञ्छितप्राप्तिः सदा भवति सर्वदा ॥१००॥
प्राणतत्त्वमयी व्याप्तिरिति सम्यक्समीरिता।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥
इति श्री षोड़शनित्यातन्त्रेकादिमते षोड़शपटलम् ॥१६॥

---

दयादक्षरादीनि मातृकाप्रोक्तपञ्चाशदक्षराख्यपगतक्षकारमपगतविसर्जनीयं वा सकारोपितहल्ले खागर्भस्थितमालिख्य शिष्टेषु दशसु कोष्ठेषु पुनरप्युदयादीनि दशाक्षराणि समालिख्य तेषु लिखितक्रमेण उदयादि, षष्टिघटिकासु तत्तन्मिथुनानि षोड़शभिरुपचारैरभ्यर्च्य तत्तत्फलमवाप्नुयात्। तन्मन्त्रास्तु बीजद्वयानन्तरं (रूपक्षेत्रान्तरं) अं रूपिणीशक्तिपादुकां पूजयामीत्यादयः तच्छक्तिविद्याः पञ्चाशत्। पुनरपि बीजद्वयानन्तरं अरूपक्षेत्रेशपादुकां पूजयामीत्यादयस्तत्क्षेत्रपाल मन्त्राश्च पञ्चाशत् एवं प्रत्येकं पञ्चाशदक्षरैः पञ्चाशत्पद्‌दशाक्षरात्मभिर्विद्या)र्मन्त्रैश्च ता निमिथुनानि पूजयेदिति। अस्य चक्रस्य प्रागुक्तारम्भात् अप्रादक्षिण्यक्रमेण लेखनार्चनात् निग्रहोभवतीति सम्प्रदायार्थः ॥८५॥८६॥८७॥८८॥८९॥१००॥१०१॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां शिवदूतीनित्याविद्याविधानप्रकाशनपरं पञ्चदशपटलं परिपूर्णं परामृष्टम् ॥ १५ ॥

ग्रन्थसङ्ख्या—

षट्त्रिंशतिश्च यन्त्राणि व्याख्याग्रन्थाः शतद्वयात्।
पञ्चाशीतिः सार्द्धपादाः षोड़शे पटले स्मृताः ॥०॥

## अथ सप्तदशपटलम् ।

अथ षोड़शनित्यासु द्वादशी या समीरिता ।
तस्या नीलपताकाया विधानं सर्वसिद्धिदम् ॥१॥
न्यासक्रमविधानं च ध्यानं शक्तीः प्रपूजनम् ।
साधनं सिद्धविद्यस्य विजयं कामरूपताम् ॥२॥
पादुकामञ्जनं खड्गं वेतालांश्च पिशाचकान् ।
यक्षिणीश्चेटकान्मायां यन्त्राणि च वदामि ते ॥३॥
प्रयोगानानुपूर्व्येण सन्दिष्टानामशेषतः ।
दशभिः सिद्धिभिर्मर्त्यो भवेद्विद्याधरोऽपरः ॥४॥
मूलविद्याक्षरैरङ्गान्याचरेत् षड़िितक्रमात् ।
(१)द्विचतुष्टयषड्वर्णैः क्रमेण षड़ितीरितैः ॥५॥

---

सप्तदशपटलम् ।

पूर्वस्मिन् षोड़शे पटले एकादश्या नित्यानित्याविद्याया विधानमुपदिश्यानन्तरं द्वादश्या नीलपताकानित्याविद्याया विधानमुपदिशति । तत्र अथ षोड़शेत्यादिभिः परइत्यन्तैश्चतुर्भिः श्लोकैः पटलार्थानुद्दिशति । तत्र विद्या तृतीये पटले प्रोक्तत्वादिह न कथिता । विधानं वदामीत्यन्वयः ॥१॥ न्यासक्रममित्यादिविधानरूपाणि । शक्तीः—आवरणशक्तीः । साधनं विद्याया इति शेषः । सिद्धविद्यस्य—पुरुषस्येति शेषः । विजयादीनां सिद्धीनां दशानामुपरिष्टात्स्वयमेव वक्ष्यमाणत्वादिह स्वरूपाणि नोच्यन्ते ॥२॥ यन्त्राणि—तासां साधनार्थानि यन्त्राणि ॥३॥ सन्दिष्टानां—सिद्ध्यादीनाम् ॥४॥

मूलविद्येत्यादिभिर्यथाविधीत्यन्तैस्त्रिभिः श्लोकैः न्यासप्रकारमुपदिशति । तत्र द्विचतुष्टयषट्‌वर्णैः क्रमेण मूलविद्यायाः प्रथमद्वितीयाभ्यामक्षराभ्यां हृदयं, तदनन्तरैश्चतुर्भिः शिरः, तदुपरितनैः षड्भिःशिखा तदनन्तरेणैकेन कवचं, तदुपरि

---

(१) विषातुं द्वयषड् इति मू० पु० पा० ।

श्रोत्राक्षिनासायुगले वाचि कण्ठे हृदि क्रमात् ।
नाभावाधारके पादसन्धिषु, त्रिषु च क्रमात् ॥६॥
मन्त्राक्षराणि क्रमशोन्यसेत्सप्तदशापि वा ।
व्यापकं च समस्तेन विदध्याच्च यथाविधि ॥७॥
इन्द्रनीलनिभां भास्वन्मणिमौलिविराजिताम् ।
पञ्चवक्त्रां त्रिनयनामरुणांशुकधारिणीम् ॥८॥
दशहस्तां लसन्मुक्ताप्रायाभरणमण्डिताम् ।
रत्नस्तवकसम्भिन्नदेहां चारुस्मिताननाम् ॥९॥
पाशं पताकां चर्माणि शार्ङ्गचापं वरं करैः ।
दधानां वामपार्श्वस्थैः सर्वाभरणभूषितैः ॥१०॥
अङ्कुशं च ततः शक्तिं खड्गं बाणं तथाऽभयम् ।
दधानां दक्षिणैर्हस्तैरासीनां पद्मविष्टरे ॥११॥

---

स्थेनैकेन नेत्रं तदनन्तरेणैकेनास्त्रं अवशिष्टयोर्मन्त्रार्णयोः पूर्वमेव हृदयमन्त्रे विनियोगात् पुनरुक्त्या नोपादानम् । क्रमेण षड्तोरितैः—इत्येवंभेदक्रमेण इति ईरितैः जात्यन्तैर्वर्णैः—षडङ्गानि करयोरङ्गेषु च न्यसेदित्यर्थः । षड्तिद्विरुपादानस्य सङ्क्षेपविकासार्थत्वान्न पुनरुक्तिदोषः ॥५॥

श्रोत्रेत्यादिना यथाविधीत्यन्तेन श्लोकद्वयेन मन्त्राक्षरन्यासक्रमं सव्यापकं न्यासक्रमसुपदिशति । तत्र वाक्कण्ठहृदयनाभ्याधारेषु पञ्चस्वेकैकं, अन्येषु षट्सु श्रोत्राक्षिनासिकापादद्वयसन्धित्रयेषु द्वयं द्वयं, तत्र एकपादन्यासत्रयानन्तरमन्यपादन्यासत्रयम्—एवं मूलविद्याक्षराणि सप्तदशोद्दिष्टस्थानक्रमं न्यसेदित्यर्थः । व्यापकं च समस्तेन विदध्याच्च यथाविधि—समस्तेन मूलमन्त्रेण प्राग्वद्व्यापकन्यासं च कुर्यादिति यावत् ॥६॥७॥

इन्द्रनीलनिभामित्यादिभिः क्रमे इत्यन्तैः पञ्चभिः श्लोकैर्देव्याः सपरिवाराया नित्यसपर्याध्यानमुपदिशति । तत्र मौलि—मुकुटः । पञ्चवक्त्रां—तदवस्थानप्रकारस्तु ऊर्ध्वं चतुर्दिक्षु चेत्यर्थः । ऊर्ध्वस्थं मुखं साधकाभिमुखमिति सम्प्रदायः । त्रिनयनां—प्रतिवक्त्रमित्यर्थः ॥८॥ दशहस्तां—सम्भूयेतिशेषः ॥९॥ शार्ङ्गचापमित्येकं

स्वाकारवर्णवेषास्यपाण्यायुधविभूषणैः ।
शक्तिवृन्दैर्वृतां ध्यायेद्देवीं नित्यार्चनक्रमे ॥१२॥
त्रिषट्कोणयुतं पद्ममष्टपत्रं ततो बहिः ।
अष्टास्रं भूपुरद्वन्द्वाद्वृत्ते तत्पुरयुग्मकम् ॥१३॥
चतुर्द्वारयुतं दिक्षु शाखाभिश्च समन्वितम् ।
कृत्वा तामावृतां शक्तिगणैस्तत्रार्चयेच्छिवाम् ॥१४॥
इच्छाज्ञानक्रियाशक्तीस्त्रिषु कोणेषु पूजयेत् ।
अग्रात्प्रदक्षिणेनैव यजेदावृत्तिपञ्चकम् ॥१५॥

---

शृङ्गमयत्वाच्चापस्य। तेषामुभयतःक्रममूर्ध्वादि कल्पयेत् ॥१०॥ पद्मविष्टरे—वक्ष्यमाणरूपे ॥११॥ आस्यं—मुखम् ॥१२॥

त्रिषड़ित्यादिना शिवामित्यन्तेन श्लोकद्वयेन नित्यसपर्यामण्डलविधानं तत्र-पूजाप्रस्तावं च करोति। तत्र त्रिषट्कोणयुतं—त्रिकोणेन षट्कोणेन च युतम्। ततो बहिः—अष्टदलपद्माद्बहिः। भूपुरद्वन्द्वात्—दिग्विदिग्भूतकोणात्। वृत्ते इति द्विवचनम्। तत्पुरयुग्मकं—भूपुरद्वयमित्यर्थः। कृत्वेति पूर्वत्रान्वयः॥१३॥ तत्र—मण्डले। एतदुक्तं भवति—अभीष्टमानेन वक्ष्यमाणमार्गेण समचतुरस्रद्वयमन्त-र्बहिर्विभागेन कृत्वा चत्वारि तत्कोणान्यन्तःचतुरस्ररेखाग्रैर्बाह्यचतुरस्रस्पर्शेन चतु-ष्कोणानि कृत्वा चतसृषु दिक्षु मध्यतोमध्यतः शाखाद्वयोपेतानि चत्वारि द्वाराणि निर्माय (१)तदनन्तरमन्तस्थचतुरस्रस्पृष्टास्पृष्टं वृत्तं तदन्तर(२) ष्येकाङ्गुलान्तराले वृत्तं विधाय तद्वृत्तमध्ये समान्तरालं सूत्रचतुष्टयं दिग्विदिग्गताष्टाग्रकं वृत्तरेखान्तं कृत्वा तेष्वेकान्तरितं सूत्राग्रात् सूत्राग्रमष्टसूत्रास्फालनादष्टकोणानि विधाय सूत्रचतुष्टयं मार्जयित्वा तदन्तरष्टास्ररेखाष्टकमध्ये स्पृष्टास्पृष्टं वृत्तद्वयं प्राग्वन्निष्पाद्य (तदन्तश्चतुरङ्गुलमानेन वृत्तद्वयं प्राग्वन्निष्पाद्य) तत्राष्टदलानि यथामानं कृत्वा तन्मध्यकर्णिकायां प्राग्वत् षट्कोणं तन्मध्ये वृत्तद्वयं तदन्तर्वृत्त(३)स्य समानांशा-कृष्या गुरूक्तयुक्त्या स्वाभिमुखं समत्रिरेखं कोणं च कृत्वा तत्र सपरिवारां देवीं वक्ष्यमाणक्रमेणार्चयेदिति ॥१४॥

---

(१) तदन्तर्वृत्तमन्तस्थेति टी० पु० पा०। (२) तदनन्तरमिति सो० पु० पा०।
(३) व्यासमानार्द्धं कृत्यानुरूपकृत्या इति टी पु० पा०।

डाकिन्यादीर्यजेत्षट्सु कोणेषु परितः क्रमात् ।
ब्राह्म्यादीरष्टपत्रेषु तत्कोणेषु बहिस्तथा ॥१६॥
प्रागुक्तास्ता यजेच्छक्तीः नित्यानित्यादिषूदिताः ।
बलिद्वयं च कुर्वीत पूजां प्राग्वत्समापयेत् ॥१७॥
सर्वत्र नित्यहोमं(च) तु कुर्यादन्नाज्यतोऽपि वा ।
तिलतण्डुलकैर्वापि प्रोक्तं द्रव्यानुदीरणे ॥१८॥
विद्याक्षराणां सर्वेषां स्वरव्यञ्जनविन्दुकान् ।
पृथक्कृ(त्या) त्वाऽथगणिते त्रिपञ्चाशद्भवन्ति हि ॥१९॥
तेन तल्लक्षसङ्ख्यान्तु जपेद्विद्यां पयोव्रतः ।
तद्दशांशं हुनेदग्नौ सर्वत्राक्षरलक्षके ॥२०॥
प्राङ्मुखोनित्यपूजासु साधनेषु च साधकः ।
नित्यानामपि सर्वासां वासनायामुदीरितम् ॥२१॥

---

इच्छेत्यादिभिः समापयेदित्यन्तैस्त्रिभिः श्लोकैर्देव्याः पञ्चावरणार्चनक्रममुपदिशति । तत्र—परितः क्रमादित्युक्त्या डाकिन्यादीनां प्राग्वत्स्थितानामेवाग्रादिप्रादक्षिण्येन पूजनमित्यर्थः । तत्पूजाक्रमः प्रागेव त्रयोदशपटले दशमेश्लोके व्याख्यातोऽस्माभिः । तत्कोणेषु—अष्टकोणेषु । बहिः—चतुरस्रे ॥१५॥१६॥ नित्यानित्यादिषूदिता इति प्रागुक्तातिदेशपरत्वान्न पुनरुक्तिदोषः । तत्रादिशब्देन दूतीनित्योच्यते, तेन तत्पटलोक्ताः सुमुखाद्या अष्टकोणशक्तयः प्रोच्यन्ते, ताः शक्तीश्चतुरस्रे तत्रोक्तारम्भक्रमेण पूजयेदित्यर्थः । अनेनात्र ब्राह्म्यादीनां द्विरर्चनमायातम् । षोडशाक्षरकुरुकुल्लासप्ताक्षरीभ्यां यथाक्रममाद्यन्तयोरिति शेषः । प्राग्वत्—आधारत्रये, तेज(स)स्त्रयभावनादिसहितमित्यर्थः ॥१७॥

सर्वत्रेत्यादिना श्लोकेन द्रव्यानुक्तौ सर्वदेवतासाधारणानि नित्यहोमद्रव्याण्युपदिशति । तत्र प्रोक्तं- उक्तप्रकारतः । द्रव्यमिति शेषः ॥१८॥

विद्येत्यादिभिरुदीरितमित्यन्तैस्त्रिभिः श्लोकैर्विद्यासाधनादिकमुपदिशति । तत्र पृथक्कृत्य—प्रत्येकं वियुज्य । हिःहेतौ ॥१९॥ तत्र प्रथमादिचतुष्टयषष्ठाष्टमषोडशसप्तदशाक्षराणि चतुर्भेदानि पञ्चमसप्तमनवमैकादश(द्वादश)चतुर्दशाक्षराणि द्विभि-

ततः सिद्धमनुर्मन्त्री कुर्यात् सिद्धिषु कौतुकम् ।
तद्विधानं शृणु प्राज्ञे ! वक्ष्ये विद्याविभेदतः ॥२२॥
दशानामपि सिद्धीनां विद्यास्तासां भिदागताम् ।
सङ्ख्यांच(१) ताश्च सम्प्रोक्ताः क्रमेणासां फलानि च ॥२३॥
विद्यादिकूटे त्वाद्ये तु योजयेद्दशसु क्रमात् ।
ताभ्यामेव विलोमाभ्यां(२) पुटयेदुपरीरितान् ॥२४॥
मन्त्रवर्णान् दशानां च तत्तत्सङ्ख्याश्च ताः शृणु ।
परस्तात्तत्प्रभेदानां मन्त्रान्वक्ष्ये यथाविधि ॥२५॥

---

दानि । दशसप्तत्रयोदशपञ्चदशाक्षराणि त्रिभेदानि विद्याक्षराणि सप्तदशेत्यर्थः । तल्लक्षसङ्ख्यमिति विशेषविधानात् सर्वयुगेष्वपि त्रिपञ्चाशल्लक्षमित्यर्थः । पयोव्रतः—क्षीराहारी । तद्दशांशं—अक्षरलक्षदशमांशमितियावत् ॥२०॥ वासनायां—वासनापटले । उदीरितं—प्राङ्मुखस्त्वकारणम् ॥२१॥

तत इत्यादिना फलानि चेत्यन्तेन श्लोकद्वयेन सिद्धविद्यस्य दशसिद्धिसाधनयोग्यतोपदेशपुरःसरं मूलविद्याक्षरबीजरूपादयो दशसिद्धिविद्याः प्रत्येकं सिद्धिविद्यावान्तरभिदां सङ्ख्यां सिद्धसिद्धिस्वरूपाणि तत्फलानि च वक्ष्यामीति प्रस्तौति । तत्र सिद्धिषु—विजयादिषु दशसु । कौतुकं—आदरम् । तद्विधानं—दशसिद्धिविधानम् । विद्याविभेदतः—मूलविद्यायाः स्वरूपभूतानामक्षराणाम् । भिदातः—भित्वाभित्वा वक्ष्यमाणप्रकारयोजनत इत्यर्थः॥२२॥ तासां—सिद्धीनां विद्यानां च । भिदागतां—उपरिष्टात्स्वयमेव स्फुटं वक्ष्यमाणाम् । ताः—सिद्धीः । आसां—सिद्धीनाम् । एतदुक्तं भवति—मूलविद्यायाः स्वरूपयोजनाभेदप्रकारजनितविद्याविशेषान् सिद्धीनां दशानां तद्विद्यानां प्रत्येकमवान्तरभिदासङ्ख्यास्ताः सिद्धीस्तत्फलानि सर्वाणि पटलशेषे वक्ष्यमाणानि प्रस्तौति (इति) ॥२३॥

विद्यादीत्यादिना यथाविधीत्यन्तेन श्लोकद्वयेन वक्ष्यमाणानां सर्वेषां सिद्धिविद्याविशेषाणां स्वरूपयोजनासाधारणकूटाक्षर(३)पटलादिकमुपदिशति । तत्र विद्यादिकूटे—मूलविद्याया आदिभूतं संयुक्ताक्षरद्वयम् । आद्ये—अत्रापिद्विवचनम् ।

---

(१) सङ्ख्यावाताश्चेति मू० पु० पा० ।
(२) विलोमां तां पुटयेषड्भिरी इति मू० पु० पा० ।
(३) पुटनादिकमिति टी० पु० पा० ।

चतुर्विधः स्याद्विजयो द्वन्द्वे सचतुरङ्गके।
कूटयुद्धे दुर्गजे च तेषां मन्त्राश्चतुर्विधाः ॥२६॥
कामरूपत्वमुदितं स्वेच्छयाऽभीष्टविग्रहम्।
विधातुमात्मनः शक्तिं स एको मन्त्र ईरितः ॥२७॥
पादुकायुगलं विद्यावैभवाप्तं तु पादयोः।
कृत्वा स्मरेद्वाञ्छितन्तु देशं तत्र तदा स्थितिः ॥२८॥
तन्मन्त्रः स्यादेकविधस्तथैवाञ्जनमीरितम्।
येनाक्ताक्षोनिधिं पश्येद्देवाद्यांश्चान्तरिक्षगान् ॥२९॥
खड्गस्य तादृशः प्रोक्तः करस्थेनाहिताः क्षणात्।
पलायिता वा पदयोः (१)प्रणमेयुर्वशङ्गताः ॥३०॥
वेतालाः स्युरसङ्ख्याताः सिद्धान्ते चै(क)व विद्यया।
निधाय साधनं स्कन्धे चरेयुर्वाञ्छयाऽस्य ते ॥३१॥

---

सिद्धिमन्त्राणामाद्यमक्षरद्वयं योजयेदित्यर्थः। दशसु—सिद्धिषु विद्यानामिति शेषः। ताभ्यां—संयुक्ताक्षराभ्याम्। पुटयेत्—सिद्धिमन्त्रान्ते योजयेदित्यर्थः। उपरोरितान्—उपरिष्टाद्वक्ष्यमाणान् ॥२४॥ दशानां चेति काकाक्षिवत्पूर्वापरयोरन्वेति। तत्तत्सङ्ख्याः—सिद्धितद्विद्यावान्तरा(२)भिधानसङ्ख्याः। ताः—सिद्धीः। परस्तात्—सिद्धिसङ्ख्यासिद्धिस्वरूपोपदेशानन्तरम्। तत्प्रभेदानां—प्रत्येकं सिद्ध्यवान्तरभेदानाम्। मन्त्रान्—तत्सङ्ख्यादिभिः ॥२५॥

चतुर्विधइत्यादिभिः प्रसादने इत्यन्तैः पञ्चदशभिः श्लोकैर्दशानां सिद्धीनां स्वरूपं तद्भिदासङ्ख्यास्तद्विद्याभेदसङ्ख्याश्चोपदिशति। तत्र चतुरित्यादिना श्लोकेन विजयसिद्धिस्वरूपादिकमुपदिशति। तत्र द्वन्द्वे—युद्ध इति शेषः। तन्नामवैरिणोः प्रधानयोः ससैन्यं अन्योन्यं युद्ध(म्)। सचतुरङ्गके—शेषं प्रागवत्। दुर्गजे—दुर्गसंजाते—शेषं प्रागवत्। तेषां—विजयानां चतुर्विधानाम् ॥२६॥

कामेत्यादिना श्लोकेन कामरूपत्वसिद्धिरूपादिकमुपदिशति—तत्र शक्तिः—सामर्थ्यम्। सः—कामरूपप्रदः ॥२७॥

---

(१) प्रणामं पूर्वमङ्गता इति सू० पु० पा० (२) न्तरभिदा इति टीपु० पा०।

विकृताङ्गमुखाः केचित्केचित्तिर्यङ्मुखाङ्गकाः ।
केचिद्भीषणनादाङ्गाः वेताला बहुविग्रहाः ॥३२॥
सर्वेऽपि वशगा वाक्यादस्य शत्रून् ग्रसन्ति च ।
किङ्कराः प्रोक्तकरणाद्भवेयुर्यावदायुषम् ॥३३॥
पिशाचास्तादृशाः प्रोक्ता कार्श्यवैरूप्यविग्रहाः ।
क्रुद्धाः क्षुद्राशयाः प्रोक्तकारिणः स्युरसङ्ख्यकाः ॥३४॥
तेषामेका भवेद्विद्या तया ते किङ्कराः सदा ।
तैरेव प्रहरेच्छत्रुमज्ञातमनिशं रणे ॥३५॥
षट्त्रिंशद्रूपसंयुक्ता यक्षिण्यो वाञ्छितप्रदाः ।
सरूपा द्विभुजास्त्रिवसनाभरणान्विताः ॥३६॥

---

पादुकेत्यादिना अन्तरिक्षगान् इत्यन्तेन श्लोकद्वयेन पादुकासिद्धिस्वरूपादिकमुपदिशति। तत्र विद्याविभवाहं—पादुकासिद्धिविद्याप्रसादीकृतम् । पादयोः—स्वस्येतिशेषः । तत्र—देशे ॥२८॥ तन्मन्त्रः—पादुकामन्त्रः । तथैव—यथा पादुकालाभः तन्मन्त्रसङ्ख्या वा । येन - अञ्जनेन ॥२९॥

खड्गस्य तादृशेत्यादिना श्लोकेन खड्गसिद्धिस्वरूपादिकमुपदिशति। तत्र तादृशः—(लाभ)मन्त्रविद्याभ्यां करस्थेन खड्गेनेति शेषः। अहिताः—रिपवः ॥३०॥

वेताला इत्यादिभिरायुषमित्यन्तैस्त्रिभिः श्लोकैर्वेतालादिसिद्धिस्वरूपादिकमुपदिशति। तत्र अस्य—साधकस्य । ते - वेतालाः ॥३१॥ तिर्यङ्मुखाङ्गकाः—मृगमुखा मृगशरीराश्च । बहुविग्रहाः—प्रोक्तविग्रहान्तरेणापि ॥३२॥ सर्वे - वेताला अस्येति पूर्वापरयोरन्वेति ॥३३॥

पिशाचा इत्यादिना रणे इत्यन्तेन श्लोकद्वयेन पिशाचसिद्धिस्वरूपादिकमुपदिशति। तत्र तादृशा—नानाविधा इत्यर्थः। क्षुद्राशयाः—अल्पसत्त्वाः ॥३४॥ तेषां—साधने इतिशेषः। तया—विद्यया। ते—पिशाचाः। तैः—पिशाचैः। अज्ञातं—अप्रत्यक्षम् ॥३५॥

षट्त्रिंशदित्यादिभिः सम्मता इत्यन्तैस्त्रिभिः श्लोकैर्यक्षिणीसिद्धिरूपादिकमुपदिशति। तत्र—षट्त्रिंशद्रूपसंयुक्ताः—षट्त्रिंशत्सङ्ख्याता इत्यर्थः ॥ ३६ ॥

असहाया यौवनाढ्याः स्रगालेपनसौरभैः ।
समेत्य सर्वाभीष्टानि दद्युस्ताः साधकाय वै ॥३७॥
तासां विद्याश्च षट्त्रिंशद्वक्ष्ये ताश्च शृणु प्रिये ! ॥
याभिः सिद्धाभिरनिशं साधकाः सर्वसम्मताः ॥३८॥
चेटकाः स्युश्चतुःषष्टिस्तेषां मन्त्राश्च तत्समाः ।
तेऽपि नानाविधाकाराः सिद्धास्ते दद्युरीप्सितम् ॥३९॥
मायासङ्ख्याश्चित्ररूपाश्चित्राण्यस्येच्छयाऽनिशम् ।
वसून्युपहरेयुस्ता विद्यैका तत्प्रसा(ध)दने ॥४०॥
विद्याया नवमार्णादिवर्णैःषड्भिरुदीरितैः ।
दशविद्याः प्रजायन्ते शृणु वक्ष्ये च ताः क्रमात् ॥४१॥

---

असहायाः—परिवाररहिताः । ताः—यक्षिण्यः ॥३७॥ तासां – यक्षिणीनाम् । ताः—विद्याः । याभिः—विद्याभिः ॥३८॥

चेटकेत्यादिना श्लोकेन चेटकसिद्धिरूपादिकमुपदिशति । तत्र तेषां—चेटकानाम् । तत्समाः—चतुःषष्टिसङ्ख्याइत्यर्थः । ते—चेटकाः । ते—प्राग्वत् । ईप्सितं साधकस्येति शेषः ॥३९॥

मायेत्यादिना श्लोकेन मायासिद्धिरूपादिकमुपदिशति । तत्र मायाऽसंख्या इति स्वातन्त्र्योक्तिः । मायाः—शक्तयः असङ्ख्या इत्यर्थः । चित्राणि—वस्तूनीति सम्बन्धः । अस्य—साधकस्य । ताः—मायाः । तत्प्रसादने—मायाप्रसादने । प्रसादनं—प्राप्तिः । एतदुक्तं भवति—विजयानां यक्षिणीनां चेटकानां विद्या यथाक्रमं चतस्रः षट्त्रिंशच्चतुःषष्टिः । अन्यासां सप्तानां प्रत्येकमेकैकरूपतो विद्याः सप्त, सम्भूय दशानां सिद्धीनां विद्यासङ्ख्याः एकादशाधिकं शतमिति ॥४०॥

विद्याया इत्यादिभिः व्याकुलक्रमादित्यन्तैरेकत्रिंशत्श्लोकैः सिद्धीनां प्रागुक्तैकादशाधिकशतसंख्यामन्त्रस्वरूपाण्युपदिशति । तत्र विद्यायाः—मूलविद्यायाः । उदीरितै—र्वक्ष्यमाणैः । दशविद्या इति सिद्ध्यपेक्षयोक्तिः । ताः—विद्याः ॥४१॥

नित्येत्यादिना श्लोकेन विजयसिद्धिविद्यां चतुर्विधामुपदिशति—तत्र नित्य इति

नित्येति विजयं देहीत्युक्त्वा सम्पुटयेत्ततः ।
विद्या सा विजयप्राप्त्यां चतुर्ष्वे(१)कादशाक्षरा: ॥४२॥
मदेति कामरूपं मे देहीतिपुटयेत्तथा ।
त्रयोदशाक्षरी विद्या कामरूपप्रदेरिता ॥४३॥
नित्यदेपादुकां देहीत्युक्त्वा कुर्याच्च सम्पुटम् ।
द्वादशार्णा भवेद्विद्या सिद्धा दद्याच्च पादुके ॥४४॥
तथा नित्यप्रदेत्युक्त्वा देह्यञ्जनमितीरयेत् ।
पूजयेत्तद्द्वयेनाच्च द्वादशार्णा समीरिता ॥४५॥
द्रवीत्येदेहिषड्गारमित्युक्त्वा पुटयेत्तथा ।
द्वादशार्णा भवेत्सिद्धा सत्या दद्यात्सुशोभनम् ॥४६॥

---

मन्त्रयोजना। विजयप्राप्त्यां—चतुर्षु द्वन्द्वयुद्धादिषु विजयप्राप्त्यामित्यन्वयः। विजयसिद्धिविद्याया एकादशाक्षर्याश्चातुर्विध्यं द्वन्द्वयुद्धादिप्रोक्तनामविशेषयोजनतः। यथा द्वन्द्वयुद्धे चतुरङ्गयुद्धे कूटयुद्धे दुर्गयुद्धे इति तानि विजयशब्दात्पूर्वं योजनोयानि। तेन पञ्चदशाक्षरास्तिस्रः। एका सप्तदशाक्षरेति। अतिरहस्यत्वा-द्विद्या आञ्जस्येन न लिख्यन्ते ॥४२॥

मदेत्यादिना श्लोकेन कामरूपसिद्धिविद्यामुपदिशति। तत्र मद इति मन्त्रयोजना उक्तेतिशेषः। अस्मिन् प्रकरणे उक्तेत्याद्यनुक्तावुक्तेति शेषः। तथा—कूटद्वयेनेत्यर्थः। अन्यत्सुगमम् ॥४३॥

नित्येत्यादिना श्लोकेन पादुकासिद्धिविद्यामुपदिशति। तत्र नित्य इति मन्त्रयोजना। विद्येति पूर्वापरयोरन्वेति। पादुके इति द्विवचनम् ॥४४॥

तथेत्यादिना श्लोकेनाञ्जनसिद्धिविद्यामुपदिशति। तत्र तथा—यथा पादुका-विद्यायोजनम्। नित्यमद इति मन्त्रयोजना। तद्द्वयेन—कूटद्वयेन। द्वाद-शार्णा विद्येति शेषः ॥४५॥

द्रवनित्येत्यादिना श्लोकेन खड्गसिद्धिविद्यामुपदिशति। तत्र द्रवनित्ये इति मन्त्रयोजना। तथा—प्रागवत्। द्वयेन—द्वादशार्णा विद्येति शेषः। सिद्धा—प्रागवच्छेषः ॥४६॥

---

(१) चतुर्ष्वेका इति सो० पु० पा०।

नित्यद्रवेति वेतालान् देहीति पुटयेत्तथा ।
त्रयोदशाक्षरां विद्यां सिद्धां तान् दर्शयेत्तथा ॥४७॥
पिशाचान्मे प्रयच्छेति पूर्वं नित्यमदद्रवे ।
पुटयेत्पूर्ववद्द्वाभ्यां विद्या सप्तदशाक्षरा ॥४८॥
षटत्रिंशदुक्ता यक्षिण्यस्ताः सर्वा वाञ्छितप्रदाः ।
तासां नामानि विद्याश्च शृणु वक्ष्ये यथाविधि ॥४९॥
विचित्रा विभ्रमा हंसी भीषणी जनरञ्जिका ।
विशाला मदना रुष्टा(१) कालकण्ठी महाभया ॥५०॥
माहेन्द्री (२)शङ्खिनी चान्द्री मङ्गला वटवासिनी ।
मेखला सकला लक्ष्मीर्मालिनी विश्वनायिका ॥५१॥
सुलोचना सशोभा च कामदा सविलासिनी ।
कामेश्वरी नन्दिनी च स्वर्णरेखा(३) मनोरमा ॥५२॥
प्रमोदा रागिणी सिद्धा पद्मिनी सरतिप्रिया ।
कल्याणदा कलादक्षा ततश्च सुरसुन्दरी ॥५३॥

---

नित्येत्यादिना श्लोकेन वेतालसिद्धिविद्यामुपदिशति । तत्र नित्यद्रव इति मन्त्रयोजना । तथा—प्राग्वत् द्वयेन । तान्—वेतालानितिशेषः ॥४७॥

पिशाचानित्यादिना श्लोकेन पिशाचसिद्धिविद्यामुपदिशति । तत्र पूर्वं पिशाचशब्दान्नित्यमदद्रव इति मन्त्रयोजना । द्वाभ्यां—बीजाभ्यामितिशेषः ॥४८॥

षट्त्रिंशदित्यादिभिः सुन्दरीत्यन्तैः पञ्चभिः श्लोकैर्नामविद्याप्रस्तावपूर्वं यक्षिणीनामान्युपदिशति । तत्र तासां—यक्षिणीनाम् ॥४९॥

विचित्रेत्यादिना श्लोकेन द्वादश नामान्युपदिशति । तत्र महाभया इति दशमी॥५०॥

माहेन्द्रीत्यादिना श्लोकेन दश नामान्युपदिशति ॥५१॥

सुलोचनेत्यादिना श्लोकेनाष्ट नामान्युपदिशति । तत्र सुलोचनेति चतुरक्षरं नाम । सशोभेत्यत्र सकारः सहार्थः । सविलासिनी इत्यत्रापि सकारस्तद्वत्॥५२॥

---

(१) गहणातुष्टा इति मू० पु० पा० । (२) शशिनी इति मू० पु० पा०
(३) स्वर्णवेशात्मथाग्रहा इति मू० पु० पा० ।

इति षट्त्रिंशदाख्याता यक्षिण्योऽभीष्टदायिकाः ।
तासां विद्याः क्रमेणैव(१) तद्बीजद्वयसम्पुटैः ॥५४॥
नित्यद्रवमदेत्यन्तैः षड्वर्णैः स्वोक्तनामभिः ।
विद्याः षट्त्रिंशदाख्यातास्ताः सिद्धा दद्युरीप्सितम् ॥५५॥
तासां विद्यार्णसङ्ख्यास्तु शृणु वक्ष्ये यथाक्रमम् ।
पञ्चमी पञ्चदशमी विंशतिश्च तथाऽन्तिमा ॥५६॥
चतस्रः(२) पञ्चदशकास्तृतीया साऽष्टमी तथा ।
त्रयोदशी चाष्टदशी द्वाविंशा द्वादशाक्षरा ॥५७॥
सैकत्रिंशच्च तद्वत्स्युश्चतुर्दशसमन्विताः ।
नवमी दशमी(३) चैकविंशा तद्वदनन्तरम् ॥५८॥

---

प्रमोदेत्यादिना श्लोकेनाष्ट नामान्युपदिशति । तत्र सरतिप्रियेत्यत्रापि सकारः प्राग्वत् । कलादक्षेत्येका । अन्यानि नामानि सुगमानि ॥५३॥

इतीत्यादिना ईप्सितमित्यन्तेन श्लोकद्वयेन प्रोक्तनिगमनं यक्षिणीसिद्धिविद्यां चोपदिशति। तत्र तासाम्—यक्षिणीनाम्। क्रमेण—वक्ष्यमाणेन। तद्बीजद्वयसम्पुटैः मूलविद्याद्यन्तबीजद्वयपुटितैः॥५४॥ षड्वर्णैश्च स्वनामभिरित्यत्रोत्तरश्लोकेनान्वयः। नित्यद्रवमद* इति मन्त्रयोजना। एतानि(४) मूलविद्याद्यन्त इत्युक्त्या स्वस्वरूपोपदेशानि बीजद्वयपुटेन सहितानि षडक्षराणि यक्षिणीविद्यासर्वसाधारणानि। उक्तनामभिः—विचित्राद्यैः षट्त्रिंशद्भिर्विद्याषडक्षरान्तैर्योजितैस्तन्नामभिरेव मन्त्रभेदः ॥५५॥

तासामित्यादिभिः परा इत्यन्तैश्चतुर्भिः श्लोकैर्विद्यानां प्रत्येकमक्षरसङ्ख्यामुपदिशति। तत्र तासां—यक्षिणीनाम्। अन्तिमा—षट्त्रिंशा ॥ ५६ ॥ चतस्रः—विद्या इति शेषः। पञ्चदशकाः—पञ्चदशाक्षरा इत्यर्थः ॥५७॥ सैकत्रिंशच्चेत्यस्य (द्वादश)द्वादशाक्षरा इत्यत्रान्वयः। एवं सम्भूय द्वादशाक्षराविद्याः षट्। तद्वत्स्युश्चतुर्दशसमन्विताः—यद्वत् द्वादशाक्षराः तद्व-

---

(१) क्रमेण स्युः इति मू० पु० पा० । (२) चतुरस्र सो० पु० पा० ।
(३) सैकविंशा इति मू० पु० पा० । (४) मूलविद्याद्यत्यस्तस्वरूपोपेतानि इति टी० पु० पा० ।
* नित्यमद्रवमवद्दमि इति वं० पु० पा० ।

चतुर्विंशा पञ्चविंशा सप्तविंशा तदूर्ध्वगा ।
त्रयस्त्रिंशा(धि)दिकास्तिस्रस्त्रयोदशयुताः पराः ॥५९॥
चेटकानां चतुःषष्टिं तन्मात्रां च वदामि ते ।
शृणु* क्षुद्रास्तु ते नित्यं साधयेयुः समीहितम् ॥६०॥
विभ्रमो वाहको(१) वीरो विकर्षः क्रोकरः कविः ।
सिंहनादो महानादः सुग्रीवोमर्कटः शटः(२) ॥६१॥
बिड़ालाद्यो बिड़ालास्यः कुमारः †खचरोभवः ।
मयूरो मङ्गलोभीमो द्वीपिवक्त्रः षड़ाननः ॥६२॥
मातङ्गश्च निशाचारी विषग्राही‡ वृकोदरः ।
सैरिभास्यो गजमुखः पशुवक्त्रो(३)गजाननः ॥६३॥
क्षोभकोमणिभद्रश्च क्रीड़कः सिंहवक्त्रकः ।
श्येनास्यः कङ्कवदनः काकास्यो हयवक्त्रकः ॥६४॥

---

चतुर्दशाक्षरा इत्यर्थः ॥५८॥ तदूर्ध्वगा इति। अष्टविंशित्यर्थः। त्रयस्त्रिंशादिकास्तिस्रः—त्रयस्त्रिंशादिकाः पञ्चत्रिंशान्तास्तिस्र इत्यर्थः। सम्भूय चतुर्दशाक्षरविद्या दश। त्रयोदशयुताः पराः—अन्याः षोड़शविद्यास्त्रयोदशाक्षराः, ताश्च प्रथमद्वितीयचतुर्थषष्ठसप्तमैकादशद्वादशचतुर्दशषोड़शसप्तदशैकोनविंशतित्रयोविंशषड्विंशैकोनत्रिंश(त्रिंश)द्वात्रिंशाः। तत्र तासां नामानि—विद्याषड़क्षरान्ते सम्बुद्धिरूपाणि योजयित्वा तदन्ते बीजद्वयं प्राग्वद्योजनीयमिति सम्प्रदायार्थः ॥५९॥

चेटकानामित्यादिभिः कीर्तिता इत्यन्तैरष्टभिः श्लोकैस्तन्मन्त्रप्रस्तावपूर्वं चेटकानां नामान्युपदिशति। तत्र ते—तवेत्यर्थः। ते—चेटकाः ॥६०॥

विभ्रमेत्यादिना श्लोकेन एकादश नामान्युपदिशति ॥६१॥

बिड़ालाद्य इत्यादिना श्लोकेन दश नामान्युपदिशति ॥

मातङ्ग इत्यादिना श्लोकेनाष्ट नामान्युपदिशति ॥६३॥

---

(१) विवगीवाहगी वीरः कण्टकीरजकोरविरिति मू० पु० पा०। (२) सदा इति मू० पु० पा०।
(३) वक्त्रोमृगाननः इति मू० पु० पा। * शृणु सिद्धासुतेतित्यमिति मू० पु० पा०।
† खेकर इति मू० पु० पा०। ‡ विषानन इति मू० पु० पा०।

महोदरः स्थूलशिरा विकृतास्यो वराननः ।
चपलः कुक्कुटास्यश्च मायावी मदनालसः ॥६५॥
मनोहरो दीर्घजङ्घः (१)स्थूलदन्तो दशाननः ।
सुमुखः पीड़ितः क्रुद्धो वराहास्यः सटामुखः ॥६६॥
कपटः कौतुकी कालः किङ्करः कितवः खलः ।
भक्षकोभयदः सिद्धः(२) सर्वगश्चेति कीर्तिताः ॥६७॥
बीजद्वयपुटान्तस्थैर्मदनित्य(1)द्रवेयुतैः ।
नामभिस्तैर्द्वितीयान्तैर्देहीतिपदसंयुतैः ॥६८॥
एवं मन्त्राश्चतुःषष्टिः क्रमादुक्ता महेश्वरि ! ।
तेषां सङ्ख्यामपि तथा शृणु वक्ष्ये यथाविधि ॥६९॥
चतुर्दशाक्षरास्तेषु नव मन्त्राः समीरिताः ।
तथा पञ्चदशार्णाः स्युः षड्विंशतिरितीरिताः ॥७०॥

---

क्षोभक इत्यादिना श्लोकेनाष्ट नामान्युपदिशति। तत्र सिंहवक्त्रक इति पञ्चाक्षरं नाम। हयवक्त्रक इति पञ्चाक्षरं नाम ॥६४॥

महोदरेत्यादिना श्लोकेनाष्ट नामान्युपदिशति ॥६५॥

मनोहरेत्यादिना श्लोकेन नव नामान्युपदिशति ॥६६॥

कपट इत्यादिना श्लोकेन दश नामान्युपदिशति । तत्र भयद इति पदच्छेदः । अन्यत्सुगमम् ॥६७॥

बीजेत्यादिना महेश्वरीत्यन्तेनार्धाद्येनैकेन श्लोकेन चेटकानां मन्त्रानुपदिशति। तत्रमदनित्यद्रवे इति मन्त्रयोजना। नामभिः—विभ्रमादिभिः चतुःषष्टिभिः। द्वितीयान्तैः—द्वितीयाविभक्त्यन्तैः। सम्पुटितानि एतानि मूलविद्याया उपक्रमरूपाणि। षड़क्षराणि सर्वमन्त्रसाधारणानीति नामभिरेव मन्त्रभेदः। मन्त्रयोजनक्रमो यथा—बीजद्वयं मूलविद्यायाः षड़क्षराणि इति द्वितीयान्तं तत्तन्नाम, तदन्ते देहीतिपदं तदन्ते बीजद्वयं विलोममिति ॥६८॥ एवं—उक्तप्रकारतः ॥

तेषामित्यादिना क्रमादित्यन्तेनार्द्धाद्येन चेटकनाममन्त्राक्षरसङ्ख्यामुपदिशति।

---

(१) स्थूलदन्तो इति मू० पु० पा०। (२) श्राद्ध इति मू० पु० पा०।

षोड़शार्णास्तु मनवः पञ्चविंशतिरीरिताः।
तथा (१)सप्तदशार्णाश्च चत्वारोव्याकुलक्रमात् ॥७१॥
विद्याक्षरैरनावृत्तान्यक्षराणि चतुर्दश।
सस्वरैस्तैर्भवेत्सङ्ख्या चतुर्विंशच्छतद्वयम् ॥७२॥
तैर्यन्त्राणि च सप्त स्युस्तेषु प्रोक्ताः क्रमाद्यजेत्।
देवताः सप्तवारेषु भास्करादिषु भक्तितः ॥७३॥

---

तत्र तेषां—मन्त्राणाम् ॥६९॥ चतुर्दशाक्षरास्तेषु नवमन्त्राः समीरिताः—तेषु मन्त्रेषु नव मन्त्राश्चतुर्दशाक्षरा इत्यन्वयः। ते च तृतीयषष्ठैकादशषोड़शैकोनविंशद्विपञ्चाशसप्तपञ्चाशषष्टित्रिषष्टितमाः। पञ्चदशार्णाः स्युः षड्विंशतिः—ते च प्रथमद्वितीयचतुर्थपञ्चमनवमदशमचतुर्दशपञ्चदशसप्तदशाष्टादशद्वाविंशतित्रिंशद्वात्रिंशचतुस्त्रिंशषट् त्रिंशद्विचत्वारिंशच्चतुश्चत्वारिंशत्पञ्चाशदेकपञ्चाशत्पञ्चपञ्चाशत्षट् पञ्चादष्टपञ्चाशदेकोनषष्टिद्विषष्टिचतुःषष्टितमाः॥७०॥षोड़शार्णास्तुमनवः पञ्चविंशतिः—ते च सप्तमाष्टमद्वादशत्रयोदशविंशैकविंशत्रयोविंशाद्येकोनत्रिंशान्तसप्तकैकत्रिंशाष्टत्रिंशैकोनचत्वारिंशच्चत्वारिंशैकचत्वारिंशत्त्रिचत्वारिंशत्षट् चत्वारिंशत्सप्तचत्वारिंशदष्टचत्वारिंशैकोनपञ्चाशत्रिपञ्चाशच्चतुःपञ्चाशत्तमाः। सप्तदशार्णाश्चत्वारः—ते च त्रयस्त्रिंशत्पञ्चत्रिंशत्सप्तत्रिंशच्चत्वारिंशत्तमाः। व्याकुलक्रमात्—उक्तक्रमतः। अन्यत् सुगमम्। अत्र मायासिद्धिविषयस्य मन्त्रस्य चेटकान्तर्गतत्वादनुक्तमितिमुख्यागमः। तेन सर्वगशब्दस्थाने माया इतिशब्दसमादेशात्—तन्मन्त्रश्चतुर्दशाक्षरः। एवमेकादशाधिकशतसङ्ख्यामन्त्रमूलमन्त्रा स्वरूपभेदसम्भिन्नाः समीचीनं दर्शिताः ॥७१॥

विद्याक्षरैरित्यादिभिः नरमित्यन्तैश्चतुर्विंशत्या श्लोकैः प्रागुक्तानामेकादशाधिकशतसङ्ख्यानां सिद्धिमन्त्राणां साधनार्थं सप्तवाराणां स्वरविकृतमूलविद्याक्षरैः सप्त यन्त्राणि तत्तत्साधनस्थानानि तत्तत्प्रत्यक्षप्रकारांस्तत्फलानि चोपदिशति। तत्र सस्वरैः—प्रागवत्षोड़शस्वरप्रसादितैः। चतुर्विंशच्छतद्वयं—चतुर्विंशत्यधिकद्विशतमित्यर्थः ॥७२॥ तैः—अक्षरैः। तेषु—यन्त्रेषु। प्रोक्ताः—प्रागुक्तदशविधसिद्धिप्रोक्ताः। सप्तवारेषु भास्करादिषु—रविवारादिषु सप्तवारेषु प्रतिवारं प्रोक्ताः(२) सिद्धिदेवताः सकलाः सप्तसु यन्त्रेषु एकस्मिन्नेकस्मिन् प्रत्येकं तत्तत्साधनादिषु

---

(१) तथा सप्तदशा इति मू० पु० पा०। (२) तिथिदेवता इति टी० पु० पा०।

वाराख्यां सप्तमीयुक्तामिष्टं देहीति चालिखेत् ।
यन्त्रस्य मध्ये मायास्थं तत्र(१) सिद्धीश्च पूजयेत् ॥७४॥
वृत्तयोर्नवयोनिं तु कृत्वा बाह्येऽष्टकोणकम् ।
बहिः कलाब्जभूपद्मयुगं कुर्याद्यथाविधि ॥७५॥
विलिख्य तेषु क्रमशो वर्णान् द्वात्रिंशदालिखेत् ।
दलेषु कोणेषु(२) तथा वृत्तमध्यत्रये पुनः ॥७६॥
मातृकामकथाद्यां वै विलिखेदान्तरक्रमात् ।
तस्य कोणान्तरालेषु हलक्षार्णान् क्रमाल्लिखेत् ॥७७॥
अग्रात्प्रदक्षिणं त्वेवं सप्त यन्त्राणि तैर्भवेत् ।
सिद्धीनां यक्षिणीनां च चेटकानां तथैकशः ॥७८॥
चेटकानां विशेषोऽयं मध्ये ऽष्टच्छदमम्बुजम् ।
तेषामुक्तक्रमेणैव साधनानि (३)फलानि वै ॥७९॥

---

यजेदित्यर्थः॥७३॥सप्तमीयुक्तां — सप्तमीविभक्त्यन्ताम् । मायास्थं—ह्रींखागर्भस्थम् । इष्टं देहीति चालिखेदिति पूर्वत्रान्वयः। तत्र—मायोदरे। सिद्धीः--सर्वसिद्धिदेवताः ॥७४॥ बाह्ये —वृत्तद्वयतः। बहिः—अष्टकोणात्। कलाब्जं —षोडशदलं पद्मम् । यथाविधि—यथामानं विलिख्येति पूर्वत्रान्वयः॥७५॥ तेषु---दलेषु । कोणेष्वित्युत्तरत्रान्वयः। वृत्तमध्यत्रये —नवयोनिबाह्यगताष्टकोणबाह्यगतषोडशदलबाह्यगतवृत्तद्वयमध्यवीथीत्रये इत्यर्थः ॥७६॥ अकथाद्यां—अकारादिविसर्जनीयान्तान् षोडश ककारादितकारान्तान् षोडशथकारादि सकारान्तान् षोडश वर्णानित्यर्थः । तस्य –तद्बाह्यलिखितस्य पुरयुग्मस्य। कोणान्तरालेषु हलक्षार्णान्—क्रमात् भूपद्मयुगस्य कोणान्तरालेषु चतुर्षु उक्तमक्षरत्रयं विलिखेदित्यर्थः ॥७७॥ अग्रात्प्रदक्षिणं—सर्वाक्षराणीति शेषः। सप्त यन्त्राणि--स्युरितिशेषः। तैः यन्त्रैः। एकशः –एकैकस्य साधनादिकमिति शेषः। भवेदित्यत्रास्य शेषस्यान्वयः ॥७८॥ मध्येऽष्टच्छदमम्बुजं—नवयोनिस्थानेऽष्टदलपद्ममित्यर्थः॥७९॥ तेनापि सकर्णिकानि

---

(१) तत्रसर्वं स इति मू० पु० पा० । (२) यथा लिखेद्वृत्तत्रये इति मू० पु० पा० ।
(३) फलावलिः इति मू० पु० पा० ।

प्रयोगान् शृणु देवेशि! यैः सिद्धैर्मत्समोभुवि ।
पूज्यते सर्वलोकैश्च सर्वतः सर्वदापि च ॥८०॥
अरण्यवटमूले च पर्वताग्रे गुहासु च ।
उद्यानमध्ये कान्तारे मातृपादपमूलतः ॥८१॥
सिन्धुतीरवने चैता यक्षिणीः साधयेन्निशः ।
एकैकस्मिन् वर्णलक्षं जपेदुक्तविधानतः ॥८२॥

---

नवस्थानानि भवन्ति । तेषां—विजयादिचेटकान्तानाम् । यैः—प्रयोगैः । मत्समः—परमेश्वर इत्यर्थः । एतैर्नवभिः श्लोकैरेतदुक्तं भवति—अभीष्टमान-भ्रमेणान्तर्बहिर्विभागेनैकाङ्गुलान्तरालवीथिकं वृत्तद्वयं विधाय तन्मध्ये प्रागुक्त-मानविधानतो नवयोनिं कृत्वा तद्बहिर्दिग्विदिग्गतकोणचतुरस्रद्वयेनाष्टकोणं विधाय तद्बहिरेकाङ्गुलान्तरालवीथिकं वृत्तद्वयं कृत्वा तद्बहिः षोड़शदलानि सबाह्यगतवृत्तद्वयं विधाय तद्बहिश्चतुरस्रद्वयमन्तर्बहिर्विभागेन कृत्वा सर्व-मध्यस्थयोन्याममुष्मिन्वारे इमां सिद्धिं देहीति हृल्लेखायां स्वसंज्ञायां मायांशे वाराख्यां रेफांशे तदन्तराले सिद्धिं देहीति समालिख्य तद्बहिरग्रादिप्रादक्षिण्ये-नाष्टसु कोणेषु स्वरविकृतमूलविद्याक्षरेषु चतुर्विंशत्यधिकशतसङ्ख्येषु आदि-तोऽष्टकं तद्बहिः (अष्टास्रेष्वष्टकं तद्बहिः) षोड़शपत्रेषु षोड़शं(कं)च एवं द्वात्रिंशदक्षराण्यालिख्य वृत्तान्तरा वीथीत्रये अन्तर्नवयोनिबाह्यगतवृत्तद्वयवीथ्यां अकारादिविसर्जनीयान्तान् षोड़शस्वरानालिख्य मध्यस्थायामष्टकोणबाह्यगतवृत्त-द्वयवीथ्यां अकारादिविसर्जनीयान्तान् षोड़शस्वरानालिख्य मध्यस्थायामष्टकोण-बाह्यगतवृत्तद्वयवीथ्यां ककारादितकारान्तानि षोड़शाक्षराण्यालिख्य षोड़शदल-बाह्यगतवृत्तद्वयवीथ्यां थकारादिसकारान्तानि षोडशाक्षराणि तद्बहिश्चतुरस्र-कोणान्तरालेषु चतुर्षु हलक्ष इत्यक्षरत्रयं प्रति(त्रि)कोणान्तराले समालिखेत् । एतत् प्रथमं यन्त्रम् । अन्येषु षट्सु यन्त्रेषु पूर्वपूर्वलिखिताक्षरद्वात्रिंशकोपरितन-मुपरितनं द्वात्रिंशत्कं च विलिखेत् । एवं सप्त यन्त्राणि कृत्वा सर्व्वत्रार्कादिकेषु सप्तसु वारेषु प्रोक्तक्रमेण विनियुञ्ज्यादिति ॥८०॥ मातृपादपमूलतः—मातृपादपा-स्त्वष्टौ च पूर्वं प्रधाननित्याकाम्यकथने कथिताः तेनाष्टौ स्थानान्यायतनानि ॥८१॥ सिन्धुतीरवने—नदीतीरस्थवने इत्यर्थः । एवं सम्भूय द्वादश स्थानानि सम्भवन्ति । निशः एकैकस्मिन्—द्वादशसु स्थानेषु एकस्मिन्नेकस्मिंस्तिस्रस्तिस्रो यक्षिणीः

तद्दशांशं तर्पणं च होमं कुर्यात् प्रसूनकैः ।
कदम्बबन्धूकजयाह्वयमारैश्च लोहितैः ॥८३॥
ततः प्रीताः समागत्य प्रत्यक्षा वाञ्छितप्रदाः ।
सुवर्णानि च वासांसि भूषणानि फलानि च ॥८४॥
आस्वाद्यानि च पेयानि भोज्यानि विविधानि च ।
आलेपनानि माल्यानि दद्युराजीवितावधि ॥८५॥
आयाति सर्वदा ग्राह्यं प्रत्यक्षादेहि वाञ्छितम् ।
इत्युक्त्वा नित्यशस्तास्तु पूजयेच्चजपेत्तथा ॥८६॥
अष्टोत्तरसहस्रं तु तां तां विद्यामनन्यधीः ।
एवं ताः सर्वयक्षिण्यः फलं दद्युर्यथेप्सितम् ॥८७॥
चेटकानान्तु सर्वेषां तेषूक्तेषु क्रमेण वै ।
एकस्मिन् पञ्च पञ्च स्युः सिद्धाः सिन्धुतटे नव ॥८८॥
तेषां च वर्णलक्षन्तु जपमुक्तविधानतः ।
मौनं दिनेषु सततं कुर्यात् सिद्ध्यै न चालयेत् ॥८९॥
मध्यरात्रे सदा होमं तर्पणं च समीरितम् ।
जपेद्दिवानिशं प्रोक्तं सर्वेषामपि साधने ॥९०॥

---

साधयेदित्यर्थः । वर्णलक्षं—तत्तद्विद्यायाः ॥८२॥ तत्तच्छब्देन जपसंख्योच्यते । ह्वयमारैश्च लोहितैः—रक्तकरवीरपुष्पैरित्यर्थः ॥८३॥

तत इत्यादीप्सितम् इत्यन्तश्लोकचतुष्टयोक्तयक्षिणीप्रत्यक्षीकरणतद्देयार्थं नित्यतदुपासनादिग्रन्थार्थः सुगमः ॥८४॥८५॥८६॥८७॥

तेषु—स्थानेषु । एकस्मिन् पञ्च पञ्च—एकस्मिन्नेकस्मिंस्थाने पञ्च पञ्च चेटकाः । सिन्धुतटे नव—द्वादशे स्थाने नव चेटकाः । पूर्वं यक्षिणीप्रोक्तद्वादश स्थानेषु एकादशेष्वेकैकस्मिन् स्थाने पञ्च पञ्च द्वादश सिन्धुतटे वन स्थाने नवचेटकान् एवं चतुःषष्टिष्वेकमेकं चेटकं प्रोक्तक्रमात् साधयेदित्यर्थः । एतानि स्थानान्यन्यसर्वसिद्धाष्टकसाधनसाधारणानीति सम्प्रदायः ॥८८॥ वर्णलक्षं—मन्त्रस्य । दिनेषु—

चेटकास्ते समागत्य मध्यरात्रेऽतिभीषणाः ।
क्षोभयुरमुं क्षोभं नचेदित्यथ तत्पुरः ॥९१॥
प्रत्यक्षाः किं तवेष्टं तत् करोमिति वदेन्निशि ।
प्रत्येकं ते तथेत्युक्ता न मां मुञ्चत इत्यपि ॥९२॥
नित्यशस्तान् जपार्चाभिरुपासीताचरेत्पुनः(१) ।
(स्मृ)सते तमेत्य सन्दिष्टं साधयेयुः समीहितम् ॥९३॥
शत्रूणां समरे भङ्गं प्रहारमहिते जने ।
कुर्वन्ति प्रार्थितार्थानां प्रदानं च दिवाऽनिशम् ॥९४॥
आनयेयुश्च वनिता वाञ्छितांस्तत्क्षणात् ध्रुवम् ।
निश्चलीकुर्वते मत्तं दन्तिनं वा हयं नरम् ॥९५॥
नित्याषोड़शके सिद्धे देवर्षिपितृराक्षसैः ।
पिशाचैरुरगैः सिद्धैः किन्नरैरप्सरोगणैः ॥९६॥
मरुद्भिर्वसुभिः सप्तर्षिभिर्यक्षदानवैः ।
रुद्रैरेकादशविधैः साध्यैश्च नवभिर्ग्रहैः ॥९६॥

---

साधन(ा)दिनैव, एतत् सर्वसाधारणम् ॥८९॥ दिवानिशं—सर्वदेत्यर्थः । सर्वेषां—प्रोक्तानामन्येषां विजयादिमायान्तानामष्टानामन्येषां च ॥९०॥ अमुं—साधकम् । तत्पुरः—साधकपुरः॥९१॥ प्रत्येकं—एक एकश्चेटक इत्यर्थः । अस्य वदेदित्यत्रान्वयः । ते—चेटकाः । तथेत्यादिना श्लोकशेषः साधकप्रार्थनावचनम् ॥९२॥ नित्यशः—तत्तच्चेटकसिद्धेरनन्तरमुक्तक्रमात् । (स्मृ)ते—चेटकाः । समीहितं—साधकस्येति शेषः ॥९३॥ शत्रूणामित्यादि समीहितसाधनाप्रकारः । एतदुक्तं भवति चेटकेषु स्वाभिमतं स्वाभिमतमेकमेकं चेटकं प्रोक्तक्रमात्साधयेदिति । तत्र बहुवचनानि सर्वचेटकसाधारणत्वात् साधनादेरिति सम्प्रदायः । एवं मायासिद्धिविधानादिकं विजयादीनां सप्तानां विधानादिकमप्येवम् ॥९४॥९५॥

नित्येत्यादिभिर्भवेदित्यन्तैः पञ्चभिः श्लोकैः षोड़शनित्यासिद्धिलक्षणानुरप-

---

(१) चरेत्तत इति मू० पु० पा० ।

द्वादशार्कैर्लोकपालैस्तथाऽन्यैरपि दैवतैः ।
राजभिर्वनिताभिश्च नरैरन्यैर्मृगैस्तथा ॥९८॥
पूज्यते सर्वदा सिद्धसमीहितसुखास्पदः ।
हृष्टाशयो वदान्यश्च दयावान् सुमुखः क्षमी ॥९९॥
पूर्णाशयः सदानन्दोनिरपेक्षफलान्वितः ।
धनी भोक्ताऽपरद्वेषी प्रेमभूरावयोर्भवेत् ॥१००॥
जिह्वातत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते सप्तदशं पटलं परिपूर्णं परामृष्टम् ॥१७॥

---

दिशति । तत्र अन्यैः—दक्षप्राजापत्यादिभिः ॥८६॥८७॥८८॥ सिद्धसमीहितसुखास्पदः—सिद्धसमीहितश्च सुखास्पदश्चेत्यर्थः॥८९॥ पूर्णाशयः ज्ञातव्यनिरपेक्षत्वात् । निरपेक्ष इति वित्तादिविषयः । अपरद्वेषी इति पदच्छेदः । परद्वेषकरणपराङ्मुख इत्यर्थः । आवयोः— शिवशक्त्योः ॥१००॥

इति श्रीषोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां शिवदूतीनित्याविद्याविधानप्रकाशनपरं सप्तदशपटलं परिपूर्णं परामृष्टम् ॥१७॥

ग्रन्थसङ्ख्या—

यन्त्राणि सप्त प्रोक्तानि व्याख्यानं ग्रन्थसङ्ख्यया ।
पटलेऽस्मिन् सप्तदशे सषोडशशतद्वयम् ॥

## अथाष्टादशपटलम् ।

अथ षोड़शनित्यासु सम्प्रोक्ता या त्रयोदशी ।
तद्विधानं शृणु प्राज्ञे ! विद्या प्रागुदिता तव ॥१॥
तदङ्गान्यक्षरन्यासं(१) ध्यानार्चे ऽस्यास्तु शक्तिभिः ।
तद्यन्त्रविनियोगांश्च वक्ष्येऽहं विजयप्रदान् ॥२॥
विद्याया व्यञ्जनैर्दीर्घस्वरयुक्तैश्चतुष्टयम् ।
शेषाभ्यां च द्वयं कुर्यात् षड़ङ्गानि कराङ्गयोः ॥३॥
ज्ञानेन्द्रियेषु श्रोत्रादिष्वथ चित्ते च विन्यसेत् ।
अक्षराणि क्रमाद्बिन्दुयुतान्यन्यत्तु पूर्ववत् ॥४॥

---

### अथाष्टादशपटलम् ।

पूर्वस्मिन् सप्तदशे पटले द्वादश्या नीलपताकानित्याविद्याया विधानमुपदिश्यानन्तरं त्रयोदश्या विजयानित्याविद्याया विधानमुपदिशति । अथ षोड़शेत्यादिना समीरिता इत्यन्तेन श्लोकशतरूपेणाष्टादशेन पटलेन । तत्र अथ षोड़शेत्यादिना प्रदानित्यन्तेन श्लोकद्वयेन पटलार्थानुद्दिशति । तत्र त्रयोदशी—विजयानित्येत्यर्थः । प्राक्—तृतीयपटले ॥१॥ ध्यानार्चे इति द्वितीयाद्विवचनम् । ध्यानं चार्चा चेत्यर्थः । तद्यन्त्रविनियोगान् - तद्यन्त्राणि तद्विनियोगांश्चेत्यर्थः ॥२॥

विद्याया इत्यादिना पूर्ववदित्यन्तेन श्लोकद्वयेन मूलविद्याक्षरैः कराङ्गज्ञानेन्द्रियषट्कन्यासविधानादिकमुपदिशति । तत्र—विद्याया व्यञ्जनैर्दीर्घस्वरयुक्तैश्चतुष्टयम् । शेषाभ्यां च द्वयं कुर्यात् षड़ङ्गानि कराङ्गयोरित्यन्तेन श्लोकेनैतदुक्तं भवति—भाँ मीँ रूँ यैँ इत्यन्तर्मूलविद्याया दीर्घस्वरयुक्तव्यञ्जनाक्षरैश्चतुर्भिः सविन्दुकैः सजातिकैर्हृदयशिरःशिखाकवचानि न्यस्य विद्यायाः शेषस्वराक्षरद्वयेन, औकारजकाररूपेण सविन्दुना शेषजातियुजानेत्रास्त्रे(?) च,एवं षड़ङ्गानि करन्यासपूर्वं विदध्यादिति ॥३॥ ज्ञानेन्द्रियादिषु श्रोत्रादिषु—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणेषु । तत्र त्वचिविन्यासोव्यापकवत् । अन्यत्—व्यापकम् । पूर्ववत्—समस्तया विद्यया

---

(१) ध्यानं वेश्यासु इति मू० पु० पा० ।

पञ्चवक्त्रां दशभुजां प्रतिवक्त्रं त्रिलोचनाम् ।
भास्वन्मुकुटविन्यस्तचन्द्ररेखाविराजिताम् ॥५॥
सर्वाभरणसंयुक्तां पीताम्बरसमुज्ज्वलाम् ।
उद्यद्भास्वद्बिम्बतुल्यदेहकान्तिं शुचिस्मिताम् ॥६॥
शङ्खं पाशं खेटचापौ कह्लारं वामबाहुभिः ।
चक्रं तथाऽङ्कुशं खड्गं सायकं मातुलुङ्गकम् ॥७॥
दधानां दक्षिणैर्हस्तैः प्रयोगे भीमदर्शनाम् ।
उपासनेऽतिसौम्यां च सिंहोपरि कृतासनाम् ॥८॥
व्याघ्रारूढाभिरभितः शक्तिभिः परिवारिताम् ।
समरे पूजनेऽन्येषु प्रयोगेषु सुखासनाम् ॥९॥
शक्तयश्चापि पूजायां सुखासनसमन्विताः ।
सर्वा दिव्या समाकारमुखपाण्यायुधान्यपि ॥१०॥

---

प्रागुक्तविधानेनेत्यर्थः। एतदुक्तं भवति—श्रोत्रादिषु पञ्चसु ज्ञानेन्द्रियेषु मनसि च सम्भूय षट्सु स्थानेषु श्रोत्रादिषु त्रिषु द्वन्द्वस्थानेषु प्रतिद्वन्द्वमेकमेकमन्ययोरेकमेकं इत्येवं सबिन्दुकानि भँ मँ रँ यँ औँ ऊँ इत्येतानि मूलविद्यायाः षडक्षराणि क्रमेण विन्यस्य समस्तरूपया विद्यया व्यापकं च न्यसेदिति ॥४॥

पञ्चवक्त्रामित्यादिभिरपीत्यन्तैः षड्भिः श्लोकैर्देव्याः सपरिवाराया नित्यसपर्याध्यानं प्रयोगध्यानं चोपदिशति। तत्र पञ्चवक्त्रावस्थानं नीलपताकायाः प्रोक्तप्रकारेण। दशभुजामिति च तद्वत्। भुजेष्वायुधानि वामोर्ध्वादि दक्षिणोर्ध्वादिव (च) बोद्धव्यानि ॥५॥६॥७॥ प्रयोगे समरादिविजयप्रयोग इत्यर्थः। उपासने - नित्यभजने। सिंहोपरि कृतासनां—सिंहारूढाम् ॥८॥ समरे पूजने—समरविजयार्थे पूजन इत्यर्थः। सिंहाधिरूढां भयङ्कराम्—व्याघ्रारूढाभिः स्वसमानाभिः शक्तिभिः परिवारिताम्—युद्धविजयार्थं ध्यात्वा पूजयेदित्यर्थः। अन्येषु—वश्यादिषु॥९॥ पूजायां—नित्यायाम्। अपीतिभिन्नक्रमः। सर्वा अपीत्यर्थः। शक्तय इति शेषः। एतदुक्तं भवति—वश्यादिषु प्रयोगेषु नित्योपासनपूजायां च सुखासीनां सपरिवारां देवीं ध्यायेदिति ॥१०॥

चतुरस्रद्वयं कृत्वा चतुर्द्वारोपशोभितम् ।
दलाष्टकसमोपेतं तत्र प्राग्वत् समर्चयेत् ॥११॥
तदन्तर्वृत्तयुग्मान्तरष्टकोणं विधाय तु(तत्) ।
तदन्तश्च तथा पद्मं षोडशच्छदसंयुतम् ॥१२॥
तथैवाष्टच्छदं पद्मं विधायावाह्य तत्र ताम् ।
तत्तच्छक्त्या वृतां सम्यगुपचारैस्तथाऽर्चयेत् ॥१३॥
अन्नाज्याभ्यां नित्यहोमं कुर्याद्वा तिलतण्डुलैः ।
बलिद्वयं च कुर्वीत पूजां चाऽपि समापयेत् ॥१४॥
ललितारहिताः पञ्चदशनित्या(१)स्तिथीश्वराः ।
चन्द्रखण्डलसन्मौलियुता सा तन्मयी मता ॥१५॥
मायासप्ताक्षरीमध्यगतैर्नामभिरर्चयेत् ।
तदावरणगाः शक्तीस्तत्समाकारशक्तिकाः ॥१६॥

---

चतुरस्रद्वयमित्यादिभिः सुखी इत्यन्तैः पञ्चदशभिः श्लोकैः देव्या नित्यसपर्यामण्डलविरचनाक्रमं तत्र चतुरावरणं नित्यसपर्याक्रमविधानमन्यासां पञ्चदशनित्यानां चन्द्रकलाधारणवासनां ललितायास्तद्धारणवासनां आवरणशक्तिनामानि चोपदिशति । तत्र प्राग्वत्—चतुरस्रे नित्या(नित्या च)नवदित्यर्थः ॥११॥ तदन्तः—चतुरस्रान्तः ॥१२॥ तत्र—चक्रे तथा—वक्ष्यमाणप्रकारेण । नित्यसपर्यामण्डलविरचनाक्रमो यथा—अन्तर्बहिर्विभागेन यथामानं चतुरस्रद्वयं प्रत्येकं शाखाद्वयोपेतं चतुर्द्वारं विधाय तदन्तर्वृत्तद्वयमन्तश्चतुरस्ररेखास्पृष्टास्पृष्टं विधाय तदन्तरष्टकोणं प्राग्वत् कृत्वा तदन्तः षोडशदलं पद्मं कृत्वा तदन्तरष्टदलं विरच्य (?) तत्कर्णिकायां सपरिवारां देवीमावाह्याभ्यर्चयेदिति ॥१३॥ वा—विकल्पे । बलिद्वयं प्राग्वत् ॥१४॥ तेजस्त्रयभावनादिना । सा तन्मयी—सा ललिता अक्षयचन्द्रकलारूपिणी इत्यर्थः । अनेन श्लोकेनैतदुक्तं भवति—क्षयवृद्ध्युपेतचन्द्रकलापञ्चदशकरूपाः पञ्चदशतिथयोऽन्यत्र व्यवच्छिन्नाः सर्वाः प्रत्येकं सर्वकलाकारणत्वानुस्यूतरूपया षोडश्या कलया

---

(१) नित्यात्मिकाश्वराः इति मू० पु० पा ।

अग्रात् प्रदक्षिणेनैव ताः सर्वास्तेषु पूजयेत् ।
तासां क्रमेण नामानि शृणु वक्ष्ये यथाविधि ॥१७॥
नित्यानित्यावदुदितमर्चनं चतुरस्त्रके ।
अन्तःस्थिताष्टकोणेषु पूजयेदुक्तविग्रहाः ॥१८॥
जयां च विजयां दुर्गां भद्रां भद्रकरीमपि ।
क्षेमां क्षेमंकरीं नित्यामष्टकोणेषु भक्तितः ॥१९॥
तदन्तः षोड़शदलेष्वर्चयेत्षोड़शाभितः ।
शक्तीस्ता(स्ता) गन्धपुष्पा(दि)युतोभक्तिसमन्वितः ॥२०॥
विदारिकां विश्वमयीं विश्वां विश्वविभञ्जिकाम् ।
वीरां विक्षोभिणीं विद्यां विनोदाञ्चितविग्रहाम् ॥२१॥
वीतशोकां विषग्रीवां विपुलां विजयप्रदाम् ।
विभवां विविधां विप्रां प्रोक्ताकारसमन्विताः ॥२२॥
तदन्तरष्टपत्रेषु शक्तीरष्टाभितो यजेत् ।
प्रोक्तक्रमेण गन्धाद्यैर्भक्तिनिष्ठाशयो वशी ॥२३॥

---

ऽक्षयया सहिताः किल भवन्ति । तेन ललितारहितानां पञ्चदशानां नित्यानां पञ्चदशतिथिरूपत्वात्तासामप्यक्षयषोड़शचन्द्रकलाधारणं भवति । ललिता तु सर्वतिथिमयत्वादनवच्छिन्ना सर्वकलाकारणरूपाऽक्षया षोड़शी कला भवति । तेन तस्याश्चन्द्रकलाराहित्यमिति ॥१५॥ मायासप्ताक्षरीमध्यगतैः—ह्स्त्रें ख्राद्यैः सप्तापर्यन्तैरित्यर्थः । नामभिः—मन्त्रैरिति शेषः ॥१६॥ ताः—शक्तीः । तेषु—चतुरस्रादिस्थानेषु । तासां—आवरणशक्तीनाम् ॥१७॥ अन्तःस्थिताष्टकोणेषु—चतुरस्रादिकस्येति शेषः । उक्तविग्रहाः—जयामित्याद्यनन्तरश्लोकवक्ष्यमाणाः ॥१८॥ अष्टकोणेष्वित्यस्य द्विरुपादानं सङ्क्षेपविस्ताररूपत्वाददोषः । भक्तितः—पूजयेदितिशेषः ॥१९॥ तदन्तः—अष्टकोणान्तः । ताः ताः—अनन्तरं विदारिकामित्यादिश्लोकद्वयवक्ष्यमाणाः ॥२०॥ विदारिकां—विदारिणीमित्यर्थः । विश्वविभञ्जिकां—विश्वविभञ्जिनीमित्यर्थः ॥२१॥ विविधामिति । पञ्चदश्यानामप्रोक्ताकारसमन्विताः—मूलदेवतासमाना इत्यर्थः । अर्चयेदित्यन्वयः ॥२२॥ तदन्तः—

मनोहरां मङ्गलां च मदोत्सिक्तां मनस्विनीम्।
मानिनीं मधुरां मायां मोहिनीमुक्तविग्रहाम् ॥२४॥
एवं पूजाजपध्यानहोमोपासनतो वशी।
भजते नित्यशोदेवीं योऽसौ स्यात्सर्वतः सुखी ॥२५॥
पूर्वोक्तक्रमतोविद्यावर्णलक्षं जपेद्वशी।
होमं रक्ताम्बुजैः कृत्वा सिद्धमन्त्रोदयान्वितः ॥२६॥
प्रयोगानाचरेन्मन्त्री होमयन्त्रविधानतः।
जपेन तर्पणेनापि पूजनेन यथाविधि ॥२७॥
कमलैः कैरवैरक्तैः सितैः सौगन्धिकोत्पलैः।
सुगन्धिशेफालिकया त्रिमध्वक्तैर्यथाविधि ॥२८॥
होमात् सप्तसु वारेषु कुर्य्यात्प्रोक्तैस्तु सप्तभिः।
प्रोक्तवारेशयोश्चापि तन्मण्डलत एव वै ॥२९॥

---

षोड़शदलान्तः। शक्तीः—मनोहरामित्याद्यनन्तरश्लोकवक्ष्यमाणाः ॥२३॥ उक्तविग्रहाः प्राग्वत्। अस्या आवरणार्चनक्रमोबाह्यादावाभ्यन्तरप्रवेशतः ॥२४॥ एवं—प्रोक्तरूपतः ॥२५॥

पूर्वेत्यादिना यथाविधीत्यन्तेन श्लोकद्वयेन पुरश्चरणविधानं कृतपुरश्चरणस्यैव प्रयोगविधानयोग्यतां चोपदिशति। तत्र पूर्वोक्तक्रमतः—नीलपताकाप्रोक्तक्रमतः। तेन मूलविद्यायां स्वरव्यञ्जनविन्दून् वर्णान् पृथक्कृत्य गणयित्वा तदक्षरलक्षसंख्यं जप्यादित्युक्तं भवति। तदक्षरसङ्ख्यातु सप्त। अवशिष्टमन्यत्सुगमम् ॥२६॥२७॥

कमलैरित्यादिभिर्निश्चितमित्यन्तैरर्द्धाधिकैस्त्रिभिः सप्तसु वारेषु प्रोक्तसप्तपुष्पपूजाहोमविधानक्रमतः प्रोक्तां विजयसिद्धिमुपदिशति। तत्र रक्तैः सितैरित्यस्य कमलैः कैरवैरित्युभयत्रान्वयः। तेन रक्तैः कमलैः सितैः कमलैः रक्तैः कैरवैः सितैः कैरवैश्चेत्युक्तं भवति। त्रिमध्वक्तत्वमेतेषां होमविधावेव ॥२८॥ होमादितिल्यब्लोपे पञ्चमी। होमं कृत्वेत्यर्थः। सप्तसु वारेषु—रविवारादिषु। प्रोक्तैस्तु सप्तभिः—पुष्पैरिति शेषः। प्रोक्तवारेशयोः—कुलसुन्दरीपटले इति शेषः। तन्मण्डलतः—तान्यपि तत्रैवोक्तानि यदष्टाविंशतिपटलेऽवेक्षणीयानि। एतदुक्तं

विजयं समवाप्नोति समरे द्वन्द्वयुद्धके ।
(१)मल्लयुद्धे च वादे च द्वये द्यूतद्वयेऽपि च ॥३०॥
व्यवहारेषु सर्वत्र जयमाप्नोति निश्चितम् ।
चतुरङ्गुलजैः पुष्पैर्होमात्संस्तम्भयेदरीन् ॥३१॥
तथैव कर्णिकारोत्थैः पुन्नागोत्थैर्नमेरुजैः ।
चम्पकैः केतकैराजवृक्षजैर्मागधोद्भवैः ॥३२॥
प्राग्वद्वारेषु जुहुयात्क्रमात्पुष्पैस्तु सप्तभिः ।
प्रोक्तेषु स्तम्भनं शत्रोर्भङ्गो वा भवति ध्रुवम् ॥३३॥
शत्रोर्नक्षत्रवृक्षाग्नौ तत्समिद्भिस्तु होमतः ।
सर्पिषाज्याप्लुताभिस्ते प्रणमन्त्येव पादयोः ॥३४॥
मृत्युकाष्ठानले मृत्युपत्रपुष्पफलैरपि ।
समिद्भिर्जुहुयात्सम्यग्वारेशार्चनपूर्वकम् ॥३५॥

भवति— प्रोक्तैरक्तकमलसितकमलरक्तकैरवसितकैरवसौगन्धिकोत्पलसुगन्धिशेफालिकाख्यैः सप्तभिः (कर्णिकाराद्यैः) पुष्पैरुद्दिष्टक्रमतो रविवारादिषु सप्तसु तद्वारेशद्वयस्य तन्मण्डलेऽर्चनतो मूलविद्यया तैर्होमतश्चोक्तफलसिद्धिरिति ॥२९॥ समरे इति वक्ष्यमाणसप्तकविषयः । द्वन्द्वयुद्धके— प्राग्वत् । द्यूतद्वये—सजीवनिर्जीवरूपे ॥३०॥ सर्वत्र—अन्येषु विवादेष्वपि ॥

चतुरङ्गुलजैरित्यादिना ध्रुवमित्यन्तेनार्द्धाद्येन श्लोकद्वयेन सर्वदा आरग्वधैः सप्तसु वारेषु सप्तभिः पुष्पैश्च होमविधानात्क्रतुस्तम्भनादिकमुपदिशति । तत्र चतुरङ्गुलजैरारग्वधोत्थैः॥३१॥नमेरुजैः- सुरपर्णीपुष्पैः । राजवृक्षजैःआरग्वधपुष्पैः॥३२॥ प्रागवत्—वारेशार्चनपूर्वम् । वारेषु सप्तसु रविवारादिषु । सप्तभिः—कर्णिकाद्यैः । अत्रारगवधस्य द्विरुपादानं सर्वदा च तत्प्राः वारेषु च होमविधानार्थम् । प्रोक्तेषु – द्वन्द्वयुद्धादिषु । एतदुक्तं भवति –प्रोक्तैः पुष्पैः सप्तभिः प्रागवत्सप्तवारेषु तत्तद्वारे—शार्चनपूर्वकमारगवधैः स॰दा च होमात्प्रोक्तफलसिद्धिरिति ॥३३॥

शत्रोरित्यादिभिः संशय इत्यन्तैरेकविंशत्या श्लोकैस्तिथिवारादिषु द्रव्यविशेषैः

(१) मल्लयुद्धे शस्त्रयुद्धेवादे इति सो० पु० पा० ।

(१)अरातेश्चतुरङ्गन्तु बलं रोगार्दितं भवेत् ।
तेनास्य विजयोभूयान्निधनेनापि वा पुनः ॥३६॥
अर्कवारेऽर्कजैरिध्मैः समिद्धेऽग्नौ तदुद्भवैः ।
पत्रैः पुष्पैः फलैः काण्डैः मूलैश्चापि हुनेत्क्रमात् ॥३७॥
सवर्णारुणवत्साया घृतसिक्तैस्तु मण्डलात् ।
अरातिदिङ्मुखोभूत्वा कुण्डे त्र्यस्रे विधानतः ॥३८॥
पलायते वा रोगार्तः प्रणमेद्वा भयान्वितः ।
वैरी बलसमग्रोपि शौर्यमानान्वितोऽपि च ॥३९॥
पलाशेध्मानले तस्य पञ्चाङ्गै(२)स्तद्घृताप्लुतैः ।
होमेन सोमवारे(३) च भवेत्प्राग्वन्न संशयः ॥४०॥
खदिरेध्मानले तस्य पञ्चाङ्गैस्तद्घृताप्लुतैः ।
वारे भौमस्य हवनात्तदाप्नोति सुनिश्चितम् ॥४१॥
अपामार्गेध्मजे वह्नौ तत्समिद्भिर्हुनेत्तथा ।
बुधवारेषु शुभ्रायाः सवत्साया घृतान्वितम् ॥४२॥

---

होमविशेषविधानाद्विजयप्राप्तिप्रकारानुपदिशति । तत्र तत्समिद्भिः—नक्षत्रवृक्ष-समिद्भिः । तं—शत्रवः ॥३४॥ समिद्भिः—मृत्योरितिशेषः ॥३५॥ निधनेन—शत्रु-बलस्येतिशेषः ॥३६॥ तदुद्भवैः—अर्कसंभवैः । क्रमात्—उद्दिष्टक्रमैः पत्राद्यैमूलान्तैः पञ्चभिरङ्गैरित्यर्थः ॥ ३७ ॥ सवर्णारुणवत्सायाः—अरुणवर्णवत्सायाः अरुणवर्णायाः गोरित्यर्थः । घृतसिक्तैः—पूर्वोक्तपञ्चाङ्गैरित्यर्थः । मण्डलात्—प्राग्वत् एकोनपञ्चाशद्दिनैरित्यर्थः । त्र्यस्रे—त्रिकोणकुण्डे इत्यर्थः ॥३८॥३९॥ तस्य—पलाशस्य । पञ्चाङ्गैः—पत्रपुष्पफलकाण्डमूलैः । पुनश्च तद्घृताप्लुतैः—सवर्णवत्सारुणगोघृताप्लुतैः । प्राग्वदिति भिन्नक्रमः । प्राग्वद्भवेदिति—विजयो भवेदित्यर्थः ॥४०॥ तस्य—खदिरस्य । पञ्चाङ्गानि प्राग्वत् । तद्घृताप्लुतैः—प्राग्वत् । तत्—विजयफलम् ॥४१॥ तत्समिद्भिः—अपामार्गस्य समिद्भिः ॥४२॥ पूर्वोक्तफलसं

---

(१) आगतं चतुरङ्गं तु इति मू० पु० पा० । (२) ङ्गैसद्घृतप्लुतैरिति मू० पु० पा० ।
(३) वारेषु इति मू० पु० पा० ।

पूर्वोक्तफलसंसिद्धिर्भवत्येव च तद्दिनैः ।
तत्तद्वारेषु(?) ते जन्म पूर्वमेव हि(१) तत्क्रिया ॥४३॥
सर्वत्र प्रोक्तहोमार्चाजपमन्त्रादिकर्मसु ।
तत्तन्नित्यार्चनं तत्तद्वारेशद्वयपूजनम् ॥४४॥
विधाय पश्चात् कर्माणि तानि कुर्यात् समाहितः ।
शीघ्रं तत्फलसंसिद्ध्यै भवत्येवान्यथाऽन्यथा ॥४५॥
पिप्पलाग्नौ गुरौ वारे तदुत्थैस्तद्घृतप्लुतैः ।
हुनेत्तथा तत्फलाप्तिस्तद्दिनैः स्यादसंशयम् ॥४६॥
उदुम्बराग्नौ भृगुजे वारे होमं तदुद्भवैः ।
तत्सिक्तैर्विदधीतेत्थं तद्दिनैस्तच्च सिद्ध्यति ॥४७॥
शमीवह्नौ तदुत्थैस्तु जुहुयात्कृष्णगोघृतैः ।
तद्दिनात्तत्फलानि स्युरिति वारेषु सप्तसु ॥४८॥
विजयोऽभिहितः सम्यक् हवनात्तिथिऋक्षयोः ।
विजयं शृणु देवेशि ! कथयामि क्रमेण ते ॥४९॥

---

सिद्धिः—विजयसिद्धिरित्यर्थः । तद्दिनैः—मण्डलादित्यर्थः । तत्क्रिया - भवेदिति शेषः॥४३॥सर्वत्र— तन्त्रे इत्यर्थः । तत्तन्नित्यार्चनमिति—तत्तद्दिवसप्राप्ततत्तत्तिथिप्राप्तनित्यां (२)चार्चयेदित्यभिधत्ते ॥४४॥ अन्यथा—नित्यद्वयार्चाकरणे । अन्यथा —निष्फलानि । एतदुक्तं भवति—सर्वत्र तन्त्रेषु सर्वप्रयोगेषु तत्तत्प्रयोगदिनप्राप्तां तत्तत्तिथिप्राप्तां नित्यां तद्वारेशद्वयं च पूजयित्वा पश्चात् प्रयोगान् कुर्यादिति ॥४५॥ पिप्पलाग्नौ—अश्वत्थेन्धनवह्नौ । तदुत्थैः—अश्वत्थसमिद्भिरित्यर्थः । तद्घृतप्लुतैः —सवर्णवत्सशुभ्रगोघृताप्लुतैः । तत्फलाप्तिः—जयाप्तिः । तद्दिनैः—प्रागवन्मण्डलात् ॥४६॥ उदुम्बराग्नौ—प्रागवदुदुम्बरेन्धनवह्नौ । तदुद्भवैः—उदुम्बरसमिद्भिरित्यर्थः । तत्सिक्तैः—पूर्वोक्तशुभ्रगोघृतसिक्तैः । तद्दिनैः—प्रागवत् । तत्—जयफलमिति शेषः ॥ ४७ ॥ शमीवह्नौ प्रागवत् शमीन्धनेऽग्नौ । तदुत्थैः—शमीसमिद्भिरित्यर्थः । जुहुयात्—मन्दवार इतिशेषः । कृष्णगोघृतैः—सवर्णवत्स-

---

(१) हितक्रिया इति मू० पु० पा० । (२) नित्यांचर्चितमिति वङ्ग पु० पा० ।

प्रतिपत्तिथिमारभ्य पञ्चम्यन्तक्रमेण वै ।
शालीचणकमुद्गैश्च यवमाषैश्च होमतः ॥५०॥
महिषाज्यप्लुतैस्ताभिस्तिथिभिः समवाप्नुयात् ।
षष्ठ्यादि च दशम्यन्तमजाभवघृतैस्तथा ॥५१॥
प्रागुक्तैर्निस्तुषैर्होमात्प्रागुक्तफलमाप्नुयात् ।
तदूर्ध्वं पञ्चदश्यन्ते समस्तैश्च(१) तिलद्वयैः ॥५२॥
सितान्नैः पायसैः सिक्तैराविकैस्तु घृतैस्तथा ।
हवनात्तदवाप्नोति यदासौ फलमीरितम् ॥५३॥
एवं नक्षत्रवृक्षोत्थवह्नौ तैस्तैर्मधुप्लुतैः ।
हवनादपि तत्प्राप्तिर्भवत्येव न संशयः ॥५४॥

---

कृष्णगोघृतैः। तद्दिनात्—प्राग्वन्मण्डलात्। तत्फलानि—जयफलानि। इति—प्रोक्तरूपतः ॥४८॥ विजयोऽभिहित इति पूर्वत्रान्वयः। हवनादिति पूर्वापरयोरन्वेति। पूर्वस्तु-इति-एवमुक्तप्रकारतः सप्तवारेषु च जयोऽभिहित इत्यर्थः। अपरस्तु तिथिकृत्यायोर्हवनादच्यमाणं विजयं शृणुवित्यर्थः ॥४९॥५०॥ताभिः तिथिभिः—प्रतिपदादिभिः पञ्चम्यन्ताभिः पञ्चभिः। समवाप्नुयात्—विजयमितिशेषः। तथा-षष्ठ्यादिभिर्दशम्यन्ताभिः पञ्चतिथिभिः ॥५१॥ प्रागुक्तैः—शाल्यादिभिः पञ्चभिः। निस्तुषैः—विगतत्वगादिभिः। प्रागुक्तं फलं—विजयफलम्। तदूर्ध्वं पञ्चदश्यन्ते—एकादश्यादिपञ्चदश्यन्ते तिथिपञ्चके इत्यर्थः। समस्तैः—शाल्यादिभिः पञ्चभिः एकादश्याम्। तिलद्वयैः—कृष्णसितरूपैः द्वादश्यां कृष्णरूपैः, त्रयोदश्यां सितरूपैश्च तिलैर्जुहुयादित्यर्थः॥५२॥ सितान्नैः—केवलान्नैः। तैश्चतुर्दश्याम्। पायसैः पञ्चदश्याम्। सिक्तैः—शाल्यादिभिः समस्तपञ्चकादिभिः। तथा—ताभिस्तिथिभिः। फलमीरितं—विजयफलमित्यर्थः ॥ ५३ ॥ नक्षत्रवृक्षोत्थवह्नौ—विषवृक्षादितत्तन्नक्षत्रवृक्षेन्धनेद्धे वह्नौ। तैस्तैः—तत्तन्नक्षत्रवृक्षाङ्गैस्तत्तत्समिद्भिरित्यर्थः। मधु—क्षौद्रम्। हवनात्—नित्यशः। तत्प्राप्तिः—विजयप्राप्तिः। एतदुक्तं भवति—अश्विन्यादिषु सप्तविंशतिसङ्ख्येषु नक्षत्रेषु एकस्मिन् क्रमात् तत्तन्नक्षत्रोक्तवृक्षेन्धनेद्धे वह्नौ तत्तद्वृक्षसमिद्भिः मधुसिक्तैर्होमात् तत्तत्फलावाप्तिरिति ॥५४॥

---

(१) बलिद्वयैरिति मू पु० पा० ।

विद्यायां प्राग्वद्वर्णानि पञ्च युञ्ज्यात्स्वरैस्तथा ।
अशीत्यर्णावतीं विद्यां तैर्यन्त्राणि शृणु प्रिये ! ॥५५॥
प्राक्प्रत्यग्दक्षिणोदक् च दशसूत्रनिपातनात् ।
एकाशीतिपदानि स्युस्तेषु तानि लिखेत्क्रमात् ॥५६॥
मध्यकोष्ठेऽभिधां कृत्वा प्रागुक्तविधिना युतम् ।
शूलीकृत्य च रेखाग्राण्यत्रावाह्याभिपूज्य ताम् ॥५७॥
उपासीत पुरोविद्यां जपं नित्यं समर्चयेत् ।
विद्याक्रमं तत्र यन्त्रे यजेत्तत्फलमाप्नुयात् ॥५८॥

---

विद्यायामित्यादिभिराप्नुयादित्यन्तैश्चतुर्भिः श्लोकैः स्वरविकृतमूलविद्यापञ्चकजनिताशीत्यक्षरनिर्मितकोष्ठयन्त्रपूजनेन विजयप्राप्तिमुपदिशति । तत्र प्राग्वत्—अपुनरुक्तानीत्यर्थः । पञ्च—तानि भकारमकाररेफयकारौकाराक्षराणि वक्ष्यमाणानि । ऊकारबिन्द्वोरनुपादानं स्वरत्वपौनरुक्त्यात् । स्वरैः—षोडशभिः । तथा—प्रागुक्तक्रमादित्यर्थः । स तु प्रत्यक्षरं षोडशस्वरयोजनारूपः । तैः—अक्षरैः । यन्त्राणि—वक्ष्यमाणानि ॥५५॥ दशसूत्रनिपातनात्—समान्तरालमिति शेषः । तेषु—कोष्ठेषु । तानि—विद्याक्षराण्यशीतिसङ्ख्यानीति शेषः । क्रमात्-अग्रात्प्रादक्षिण्यप्रवेशगत्येत्यर्थः ॥ ५६ ॥ मध्यकोष्ठे—एकाशीतितमे । अभिधां—साधकसाध्यकर्मणाम् । प्रागुक्तविधिना—उत्तराधरान्तरालेष्वित्यर्थः । रेखाग्राणि—चत्वारिंशत्सङ्ख्यानि । अत्र—यन्त्रे । तां—विजयानित्याम् ॥ ५७ ॥ उपासीत—पूजाजपादिना । नित्यं—स्वनित्यक्रमम् । विद्याक्रमं—विद्याक्रमंप्रयोगार्थम् । अस्मिन्—यन्त्रे स्वनित्यक्रमं प्रयोगार्थं विद्याक्रमं च पूजयेदित्यर्थः । यजेत्—प्रोक्तप्रकारेण । तत्फलं—विजयफलम् । अयमत्र यन्त्रविरचनाक्रमो यथा—प्राक् प्रत्यक् दक्षिणोदक्च समान्तरालं दशसूत्राण्यास्फाल्य तेन सञ्जातेषु एकाशीतिसङ्ख्येषु कोष्ठेषु सर्वाधःस्थपङ्क्तिमध्यस्थकोष्ठमारभ्य प्रादक्षिण्यप्रवेशगत्या स्वरविकृतमूलविद्याक्षराण्यशीतिसङ्ख्यान्यालिख्य शिष्टे एकस्मिन्मध्यकोष्ठे प्रागुक्तलेखनक्रमतः साधकादित्रयाभिधामालिख्य यन्त्रस्य विंशतिरेखानां चत्वारिंशदग्राणि बहिः किञ्चिद्विकास्य प्रत्येकं त्रिशूलीकृत्य तस्मिन्यन्त्रे विजयानित्यां तामावाह्य पूर्वोक्तनित्यसपर्यामण्डलमपास्य ततः स्वनित्यक्रमं नित्यमर्चयेत् । तस्मिन् प्रयोगार्थं विद्याक्रमञ्चार्चयेत् । तेन विजयफलसिद्धिरिति ॥५८॥

प्राक्प्रत्यक्दक्षिणोदक् च चतुःसूत्रनिपातनात् ।
नवानि सम्भवन्त्यत्र कोष्ठानि परमेश्वरि ॥५९॥
तेषु प्रत्येकमब्जानि चाष्टपत्राणि संलिखेत् ।
तेषु मध्यस्थपद्मस्य कर्णिकायां समालिखेत् ॥६०॥
नामगर्भान्तु तां विद्यां तद्बहिश्चाष्टपत्रके ।
तेष्वादितोऽष्टौ संलिख्य विन्दुना तद्बहिस्तथा ॥६१॥
कर्णिकायां तु नाम्नैकं बहिरष्टौ तथाऽष्टसु ।
एवमष्टसु संलिख्य वेष्टयेन्मातृकाक्षरैः ॥६२॥
विलोमैरनुलोमैश्च मायाविन्दुसमन्वितैः ।
चतुरस्रत्रये बाह्ये(१) यन्त्रस्याग्रे समालिखेत् ॥६३॥
एवं कृत्वा हस्तयुग्ममाने कुम्भं निधाय ताम् ।
विद्याक्षरौषधिक्काथजलैरापूर्य पूर्ववत् ॥६४॥

---

प्रागित्यादिभिः पुष्कलामित्यन्तैरत्रार्धैः पञ्चदशभिः श्लोकैर्नवकोष्ठस्थपद्मयन्त्रमभिषेकार्चनादिना विजयादिफलावाप्तिमुपदिशति । तत्र चतुःसूत्रनिपातनात्—समान्तरालमितिशेषः । अत्र - सूत्रपातप्रदेशे ॥५९॥ तेषु—नवसु कोष्ठेषु तेषु-पद्मेषु नवसु॥६०॥नामगर्भां—*भकारोदरे(साधनात् समान्तरालमिति शेषः)साधकस्य रेफांशे साध्यस्य तदन्तराले कर्मणश्चालेखनतः । तां विद्याम् विकृताम् । तद्बहिः-कर्णिकाद्बहिः । तेषु—सर्वस्वरविकृतविद्याक्षरेषु अशीतिषु । अष्टौ—वर्णान् । विन्दुना सहेतिशेषः । तद्बहिः मध्यपद्मात् बहिः स्थितेषु पद्मेषु ॥६१॥ एकं—पूर्व (पूर्व) लिखिताष्टकादुपरितनं उपरितनम् । बहिः—कर्णिकायाः । अष्टौ—कर्णिकायां लिखिताक्षरःल्लिखिताक्षरादुपरितनमष्टकम् । अष्टसु—दलेषु । एवं—उक्तरूपतः । अष्टसु—मध्यस्थपद्मवर्जितेषु सर्वाधःस्थपङ्क्तिमध्यकोष्ठस्थानेषु पद्मेष्वित्यर्थः ॥६२॥ माया—विसर्जनीयः । चतुरस्रत्रये— चतुरस्रत्रयान्तरालवीथोद्वये इत्यर्थः । तत्-मातृकास्थानम् । बाह्ये —चतुरस्रत्रयात् । अग्रे यन्त्रस्यास्य बाह्ये इत्यत्रान्वयः॥६३॥ हस्तयुग्ममाने—नवकोष्ठे इति शेषः । नवकोष्ठं हस्तद्वयमानं कुर्यादित्यर्थः ।

---

(१) लक्षावज्रे इति सी० पु० पा० । लजम्बके इति सू० पु० पा० । * तकारो इति वं० पु० पा० ।

अभ्यर्च्य विद्यामयुतं जपित्वा तैर्विधानतः ।
अभिषिञ्चेत्ततः क्लेशैर्विमुक्तो जायते सुखी ॥६५॥
विजयः सर्वतोभूयात् तत् प्रोक्तेष्वपि सप्तसु ।
नवग्रहार्तौरिपुभिः सर्वतः क्लेशसम्भवे ॥६६॥
समरस्योद्यमे कीर्तिसम्पद्योरथवाऽऽमये ।
पुत्राप्त्यै वाञ्छितप्राप्त्यै त्रिषु जन्मसु(१) कारयेत् ॥६७॥
एतद्यन्त्रं गैरिकेन पीठे संलिख्य तत्र ताम् ।
देवीमावाह्य सम्पूज्य जपेद्विद्यां तथाऽयुतम् ॥६८॥

---

तं—कुम्भं प्रतिकर्णिकमिति शेषः । पूर्ववत्—फलपल्लवादिभिः ॥६४॥ अभ्यर्च्य—नित्यक्रमादितः विद्यां—अविकृताम् । अयुतसंख्योक्तिरेकाक्षरत्वात् (तैः—जलैः) ततः—अभिषेकतः ॥६५॥ प्रोक्तेषु सप्तसु—अन्यस्मिन् पटले पूर्वत्र त्रिंशत्तमश्लोकप्रोक्तेषु द्वन्द्वयुद्धादिषु सप्तसु च ॥६६॥ कीर्तिसम्पद्योरित्येतत् वाञ्छितद्वयम् । त्रिषु जन्मसु प्राग्वत् । कारयेत् अभिषेकमिति शेषः । एभिर्नवभिः श्लोकैरेतदुक्तं भवति । प्राक् प्रत्यक् दक्षिणोदक्च हस्तद्वयमिते प्रदेशे समान्तरालं चतुःसूत्रनिपातनान्नवकोष्ठानि कृत्वा तेषु नव पद्मानि अष्टदलोपेतानि कृत्वा तेषु मध्यकोष्ठस्थपद्मकर्णिकामध्ये विद्यामविकृतां प्राग्वन्नामगर्भामालिख्य स्वरविकृतमूलविद्याक्षरेष्वशीतिष्वादितोऽष्टकं अष्टसु दलेषु अग्रादिप्रादक्षिण्यात् प्रतिदलमेकमेकं सबिन्दुकमालिखेत् । तद्बहिः सर्वाधःस्थपङ्क्तिमध्यकोष्ठस्थादिष्वष्टसु प्रादक्षिण्यात् पूर्वपूर्वलिखिताष्टकादुपरितनोपरितनात्मकमक्षरं साध्यकर्णिकायां तदुपरितनोपरितनकोष्ठाक्षराष्टकमष्टदलेष्वष्टदलेष्वग्रात्प्रदक्षिणादालिख्य एवमशीतिभिरक्षरैर्नवपद्मोदरं नवकोष्ठयन्त्रं कृत्वा तद्बहिः चतुरस्रद्वयमेकाङ्गुलान्तरालं कृत्वा तदन्तरालवीथीद्वयेऽन्तर्वीथ्यां मातृकां विलोमां सविसर्जनीयां आलिख्य तद्बहिर्वीथ्यां तामेव सबिन्दुकामनुलोमामालिख्य सर्वयन्त्रबाह्येऽग्रे लक्ष्मित्यक्षरद्वयं चालिख्य तेषु नवसु कोष्ठस्थपद्मनवकर्णिकामध्ये प्रतिपद्ममेकमेकं कुम्भं निधाय विद्यावर्णौषधिक्वाथजलैरापूर्य प्राग्वत् संपूज्य नित्यक्रमतः फलपल्लवादिकं निधाय तत्र देवीमावाह्य नित्यक्रमतोऽभ्यर्च्य सञ्जप्य त्रिषु जन्मस्वभिषेकात् प्रोक्तफलसिद्धिरिति ॥६७॥

---

(१) सप्तसु इति मू० पु० पा० ।

एवं त्रिसप्तभिः सप्तरात्राद्विश्वं वशं नयेत् ।
राजानं वनितां मर्त्यानन्यांश्च प्राणिनोऽखिलान् ॥६९॥
हरिद्रायाः पटे कृत्वा कलशे वा शरावयोः ।
निधाय भित्तिमध्ये वा शयनस्थानके निजे ॥७०॥
अभ्यर्च्य विद्यया जापं कुर्यात्सन्ध्यासु नित्यशः ।
सहस्रं प्रोक्तकालेन स्तम्भयेदखिलं दृढम् ॥७१।
शत्रोरुद्योगरोषाभ्यामनिष्टकरणं तथा ।
व्यवहारं रणोद्योगं वादे वाचं मतिं रुषाम् ॥७२॥
एतत्प्रागुक्तसुरभिद्रव्यैरालिख्य तत्र ताम् ।
सन्ध्यासु पूजयेन्नित्यं सहस्रं प्रजपेत्तथा ॥७३॥
प्रोक्तकालप्रयोगेण श्रियं प्राप्नोति पुष्कलाम् ।
अथान्यद्वज्ररूपं तु यन्त्रं वक्ष्येतिवैभवम् ॥७४॥
प्राग्वह्निसप्तसूत्राणां पातैनोत्पादयेत्तथा ।
कोष्ठानि नवषष्ट्या च युतं शतमितिस्फुटम् ॥७५॥

---

एतत्—नवपद्मोदरनवकोष्ठरूपम् तत्र—यन्त्रे तथा—सम्पूज्य नित्यक्रमतः। तथा - यथाऽभिषेके ॥६८॥ त्रिसप्तभिःसप्तरात्रात्। एतदुक्तं भवति त्रिरात्रात्-सप्तरात्रादेकविंशतिरात्राद्वेति। विश्वं—वक्ष्यमाणराजादिसङ्ग्रहोक्तिः। अखिलान्-उक्तशेषान् तिर्यगादीनपि प्राणिनः॥६९॥कृत्वा—नवकोष्ठयन्त्रमिति शेषः। शरावयोः-ऊर्ध्वाधःस्थयोरन्योन्याभिमुखाश्लिष्टमुखयोः। वा—विकल्पे। शयनस्थानके—स्थापयित्वेति शेषः ॥७०॥ सहस्रं—प्रतिसन्ध्यम्। प्रोक्तकालेन—त्रिरात्रादिना। अखिलं-वक्ष्यमाणम् ॥ ७१ ॥ वादे - तर्के। वाचं—प्रतिवादिनः ॥७२॥ एतत्—यन्त्रम्। प्रागुक्तसुरभिद्रव्यैः—अष्टमपटलोक्तैश्चन्दनागुरुकस्तुरीकुङ्कुमैः। तत्र - यन्त्रे। तां—विजयानित्याम्। प्रयोगदिनेषु—सहस्रं प्रतिसन्ध्यम् ॥ ७३ ॥ प्रोक्तकालात् प्राग्वत्पुष्कलां राज्यश्रीसमाम्।

अथान्यदित्यादिभिः समीरिताइत्यन्तैरर्द्धाद्यैः षड्विंशत्या श्लोकैः स्वरविकृतमूलविद्याक्षरैरेकाशीतिकोष्ठवज्रयन्त्रनिर्माणं तत्प्रयोगांस्तत्फलानि चोपदिशति। तत्र अतिवैभवं—अन्येभ्यः ॥७४॥ प्राग्वत्—प्राक्प्रत्यक्-

तच्चतुष्कोणकोष्ठानि मार्जयेत्सैकविंशतिम् ।
मध्ये च सम्भवत्येवाशीतिकोष्ठैर्यथाविधि ॥७६॥
तच्चतुर्दिक्षु विलिखेत्त्रिकोणान्येककोष्ठतः ।
सर्वमध्यस्थकोष्ठे च चतुर्दिक्ष्वग्रतस्तथा ॥७७॥
विद्यां नामोदरां कृत्वा प्राग्वद्वर्णांस्तु संलिखेत् ।
एतदग्रचतुष्कस्य स्पर्शात्त्रिचतुरस्रकम् ॥७८॥
विधाय तत्र विलिखेन्मातृकां प्राग्विधानतः ।
एकेन वज्रयन्त्रेण विजया विजयप्रदाः ॥७९॥
एतत् प्रोक्तेषु संलिख्य स्थापयेत्प्रोक्तरूपतः ।
विजयं समवाप्नोति प्रोक्तेष्वपि च सप्तसु ॥८०॥

---

दक्षिणोदक् च । द्विसप्तसूत्राणां—चतुर्दशसूत्राणाम् ॥७५॥ सैकविंशतिं—प्रतिकोणमिति शेषः । मध्ये—वज्रं प्रागुक्तरूपतः ॥ ७६ ॥ एककोष्ठतः—प्रतिदिशमिति ॥७७॥ विद्यां—अविकृताम् । नामोदराम्—प्राग्वत् सर्वाधःस्थपङ्क्तिस्थकोष्ठत्रयमध्यकोष्ठादिप्रादक्षिण्यप्रवेशगत्यामुक्तक्रमादित्यर्थः । वर्णान्—स्वरविकृतानशीतिसङ्ख्यान् । एतदग्रचतुष्कस्य स्पर्शात्—यन्त्राग्रभूतचतुर्दिग्गतत्रिकोणचतुष्काग्रस्पर्शादित्यर्थः । त्रिचतुरस्रकं—अन्तर्बहिर्विभागाच्चतुरस्रत्रयमित्यर्थः ॥७८॥ तत्र—तदन्तरालवीथीद्वये । प्राग्विधानतः—सविसर्जनीयां विलोमां सविन्दुकामनुलोमां चेत्यर्थः । एकेन—अन्यनिरपेक्षेण । यन्त्रविरचनाक्रमो यथा—प्राक् प्रत्यक् दक्षिणोदक् च चतुर्दशभिश्चतुर्दशभिः सूत्रैरास्फालितैः समान्तरालं नवषष्ट्यधिकं शतं कोष्ठानि प्रागुक्तेन क्रमेण निष्पाद्य तेषु कोणेषु चतुष्टयेऽपि मध्ये वज्राकारं यथा भवति तथा प्रतिकोणमेकविंशतिकोष्ठानि मार्जयित्वा शिष्टेषु पञ्चाशीतिकोष्ठेषु चतुर्दिक्षु प्रतिदिशमेकैककोष्ठमार्जनतस्त्रिकोणचतुष्टयं कृत्वा शिष्टेष्वेकाशीतिकोष्ठेषु सर्वमध्यस्थकोष्ठदिग्गतत्र्यस्रे चतुष्टये चाविकृतां प्राग्वन्नामसम्पुटां मूलविद्यां लिखित्वा ततः शिष्टेष्वेकाशीतिकोष्ठेषु सर्वाधःस्थपङ्क्तिकोष्ठत्रयमध्यकोष्ठादिप्रादक्षिण्यप्रवेशगत्या मुक्तक्रमं स्वरविकृतमूलविद्याक्षराशीतिक्रमात्समालिख्यदिग्गतत्र्यस्रचतुष्काग्रस्पर्शादन्तर्बहिर्विभागाच्चतुरस्रत्रयं विधाय तदन्तरालवीथीद्वये

विलिख्याश्वत्थफलकातले यन्त्रं कुचन्दनैः ।
जपाराधनसंसिद्धं स्थापयेच्छून्यवेश्मसु ॥८१॥
देशे वा तत्र दिनशो वर्द्धते श्रीरचञ्चला ।
पिशाचा राक्षसाः कृत्या वेतालाः स्युर्न तत्र वै ॥८२॥
पलाशफलकायान्तु विलिख्यैतद्यथाविधि ।
स्थापयेद्यत्रकुत्रापि तत्क्षेत्रं ब्राह्मणास्पदम् ॥८३॥
पूर्वोक्तस्थापनाद्राजधानी भवति सुस्थिरा ।
वटे विलिख्य खननात् पत्तनं भवति ध्रुवम् ॥८४॥
उदुम्बरे विधायेत्थं स्थापनादचिरेण वै ।
आहितानाश्रयं स्थानं भवत्येव न संशयः ॥८५॥
वज्रस्य दिक्त्रिकोणान्तरालात् कुर्यात् त्रिशूलकम् ।
दाहव्याप्ते खसंयुक्ते लिखेत् तच्छृङ्गमध्ययोः ॥८६॥
तत्र संस्थाप्य गदिनं विद्याजप्तविभूतिना ।
भालस्थेनाभिजप्तेन तमाविश्य गदो वदेत् ॥ ८७ ॥

---

प्राग्वन्मातृकां विलोमां सविसर्ज्जनीयां तामेवानुलोमां सविन्दुकामन्तर्बाह्यगत्या विलिख्य अनेन यन्त्रेणान्यनिरपेक्षेण विनियोगतो विजयादिसर्व्वफलप्राप्तिरिति ॥७९॥ प्रोक्तेषु—अष्टमपटलोक्तमोहनयादिषु । प्रोक्तेष्वपि च सप्तसु—अस्मिन् पटले त्रिंशत्तमेन श्लोकेन प्रोक्तद्वन्द्वयुद्धादिषु सप्तस्वित्यर्थः ॥ ८० ॥ यन्त्रं—वज्राकारम् । कुचन्दनैः—प्राग्वत् । देशे—शून्य इति शेषः । तत्र—गृहदेशयोः ॥ ८२ ॥ एतद्वज्ररूपं यन्त्रम् । यत्र कुत्रापि—क्षेत्र इति शेषः । पूर्व्वोक्तस्थापनात् राजधानी—स्थापितभूः । पत्तनं—स्थापितदेशः ॥ ८४ ॥ स्थानं—यन्त्राधिष्ठितम् ॥८५॥ वज्रस्य दिक्त्रिकोणान्तरालात्—चतुर्दिग्गतत्रिकोणमध्यावकाशादित्यर्थः । दाहव्याप्ते—रेफयकारौ । खमिति विन्दुः । तत्शृङ्गमध्ययोः—त्रिकोणान्तरालगतत्रिशूलमध्यरेखापार्श्वदेशशृङ्गयोः । एतदुक्तं भवति—प्रागुक्तवज्रदिग्गतत्रिकोणगतमध्यावकाशे त्रिशूलं कृत्वा तच्छृङ्गयोः रेफयकारौ वह्निमारुतात्मकौ सविन्दुकौ विलिख्य तत्र वक्ष्यमाणं प्रयोगं कुर्य्यादिति ॥ ८६ ॥ तत्र—त्रिशूलोपेते वज्रे । तं—

स्वावेशकारणं कर्मस्थापयापक्रमं यथा ।
ग्रहभूतपिशाचाद्याः अस्याविश्यापयान्ति वै ॥८८॥
तदैवदासवत्तस्य वशे भवति तद्बलात् ।
यन्त्रमेतद्विलिख्याश्मन्यभ्यर्च्य स्थापयेत् क्वचित् ॥८९॥
राज्ञो गेहे तस्य राजक्षमा मुञ्चति नावयम् ।
स्थाने गजानां वाहानां नव कृत्वा नवस्वपि ॥९०॥
स्थानेषु स्थापितान्येतान्यर्चयेद्दिनशस्तथा ।
दिक्षु मध्ये च तत्रैव रोगाः कृत्याः परेरिताः ॥९१॥
वीक्षितुं तं तु ते नैव शक्ताः स्युस्तत्प्रभावतः ।
चन्द्रचन्दनकाश्मीरैरालिख्याभिनवे पटे ॥९२॥
अभ्यर्च्य विद्याजप्तं तं पटमास्तीर्य शाययेत् ।
दाहज्वरार्तमचिरान्मुच्यते तज्ज्वरेण सः ॥९३॥
अन्येष्वपि गदेष्वेवं कारयेत्तद्विमुक्तये ।
समरेषु महीपानां यन्त्रमेतदुदीरितम् ॥९४॥
निशाने पटहेऽन्येषु वाद्येषु च समालिखेत् ।
दरदेनाथ तन्मध्ये तामावाह्य समर्चयेत् ॥९५॥
विजयां विजयावाप्त्यै युगपत्ताडयन् व्रजेत् ।
प्रत्यर्थिसेना तच्छब्दश्रवणेन पलायते ॥९६॥
दिशो दश भयोद्विग्नो नाभियाति कदाचन ।
सजीवद्यूतकालेषु यन्त्रमेतद्विनिर्मितम् ॥९७॥

---

गदिनम् ॥ ८७ ॥ यथा—गदः ॥ ८८ ॥ यन्त्रं—त्रिशूलरहितम् ॥ ८९ ॥ क्षमा—भूमिः ॥ ९० ॥ नव—स्थानापेक्षया । नवसु—स्थानेषु ॥ ९१ ॥ तत्प्रभावतः । चन्द्रचन्दनकाश्मीरैः—सम्मिलितैः ॥ ९२ ॥ दाहज्वरार्त्तमिति शाययेदित्यत्रान्वयः । स—गदी ॥ ९३ ॥ तद्विमुक्तये—रोगविमुक्तये । एतत्—वज्ररूपम् ॥ ९४ ॥ ९५ ॥ ताड़यन्—निस्सारयन् । तच्छब्द इति निस्सारण

गुलकीकृत्य तत्कण्ठे बद्धा पश्चात्तु योजयेत् ।
एतद्दर्शनमात्रेण पलायन्ते दिशो दश ॥९८॥
निर्जीवेषु च तद्यन्त्रं जयमाप्नोति सर्वतः ।
नासाध्यं विद्यते तेन वज्रयन्त्रेण पार्वति ! ॥९९॥
ध्यायेद्वक्त्रे रिपोर्यन्त्रं विद्यां वा लोहिताकृतिम् ।
तदैव दासवत्तस्य वशो भवति तद्बलात् ॥१००॥
इति ते विजयानित्यावैभवाः स्युः समीरिताः ।
नेत्रतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ॥
अस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात्कृतम् ॥१०१॥

इति षोडशनित्यातन्त्रेषु श्रीकादिमतेऽष्टादशं
पटलं परिपूर्णं परामृष्टम् ॥१८॥

---

शब्दः ॥ ९६ ॥ ९७ ॥ तत्कण्ठे—कुक्कुटादिकण्ठे ॥ ९८ ॥ जयमाप्नोति—दधज्जन इति शेषः ॥ ९९ ॥ विद्यां मूलविद्यां वाविकल्पेन। लोहिताकृतिमिति यन्त्रस्यापि विशेषणं तदा लोहिताकृतीत्यन्वेति। तस्य—धातुः। भवति रिपुरिति शेषः। तद्बलात्—ध्यानबलात्। उक्तप्रकारतः ॥ १०० ॥

इति श्रीषोडशनित्यातन्त्रेषु श्रीकादिमताख्यस्य तन्त्रस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसारसिंहराजप्रकाशाभिधानेन श्रीसुभगानन्दनाथेन विरचितायां मनोरमाख्यायां व्याख्यायां शिवदूतीनित्याविद्याविधान-प्रकाशनपरमष्टादशपटलं परिपूर्णं परमामृष्टम् ॥ १८ ॥




ग्रन्थसङ्ख्या—
यन्त्राणि द्वादश व्याख्याग्रन्थाश्चाष्टादशं शतम् ।
सार्द्धपादत्रिपादोर्द्धद्वानवत्यायुतं स्मृताः ॥

---

